स्फुटीकृतार्थवैचित्र्यबहिःप्रसरदायिनीम् ।
तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शिनीम् ॥

—अभिनवगुप्तः

या सा व्यञ्जकभेदेन बहुधैका विभाव्यते ।
काव्यार्थसारभूतां तामाद्रिये संविदं पराम् ॥

—उत्तुङ्गोदयराजः

# व्यञ्जना-विमर्शः

डॉ० रविशङ्करः नागरः
संस्कृत-विभागः,
किरोडीमलमहाविद्यालयः, दिल्ली-विश्वविद्यालयः, दिल्लीः



वन्दना प्रकाशन
दिल्ली

**वन्दना प्रकाशन**
सी ६/१६, माडल टाऊन, दिल्ली-११०००९





**प्रथम संस्करण**
शिवरात्रि, संवत् २०३३

**मूल्य : रु० ६०.००**

अमर प्रिंटिंग प्रेस (शाम प्रिंटिंग एजेन्सी),
८/२५, विजयनगर (डबल स्टोरी) दिल्ली-११०००९

# A CRITICAL STUDY OF VYAÑJANĀ

**Dr. Ravi Shankar Nagar**
Sanskrit Department, Kirori Mal College
University of Delhi, Delhi.

VANDANA PRAKASHAN
DELHI

# पुरोवाक्

साहित्यशास्त्रपारङ्गतस्य मम विदुषः शिष्यस्य डाक्टर-रविशङ्करनागर-महोदयस्य व्यञ्जनाविमर्शनामकं ग्रन्थरत्नं प्रकाशितं सत् विद्वत्तल्लजानां विवेकनिकषोपलं गच्छतीति प्रसत्तिविशेषः प्रादुर्भवति मे हृदये। सत्स्वपि प्रकाशितेष्वनेकेषु ध्वनिविषयकेषु ग्रन्थेषु ध्वनिप्राणभूताया व्यञ्जनावृत्तेरेतादृशं साङ्गोपाङ्गं विवेचनं संस्कृतभाषया कुत्रापि नाद्यावधि केनापि कृतमिति दिष्ट्या वर्धाप्यते डाक्टरनागरमहोदयः। ग्रन्थोऽयं न केवलं व्यञ्जनावृत्तिमालोचयति, अपितु पूर्वमभिधालक्षणावृत्ती विवेचयति। व्यञ्जनावृत्तेर्मूलं स्वरूपञ्चालोचयता ग्रन्थकारेण शाब्द्या व्यञ्जनावृत्तेराथ्र्याश्च व्यञ्जनावृत्तेर्विवेचनपुरस्सरं मीमांसकानां, लक्षणावादिनां, भट्टनायकस्य च मतानि साधु मीमांसितानि, व्यञ्जनाविरोधिनो महिमभट्टस्य च मतं परीक्ष्य व्यञ्जनावृत्तिः सम्यक् प्रतिष्ठापिता। तार्किकप्रवरस्य जगदीशतर्कालङ्कारस्य, वक्रोक्तिप्रस्थानकारस्य कुन्तकस्य, औचित्यप्रस्थानकारस्य क्षेमेन्द्रस्य च मतानि व्यञ्जनाविषये शास्त्रीयदिशा विमर्शितानि। शास्त्रीयस्यापि विषयस्य संस्कृतभाषया गम्भीरगवेषणा कर्तुं शक्यत इति प्रमाणयत्ययं ग्रन्थः। अनेकेषां स्थलानां यथात्र स्फुटं प्रतिपादनं, न तथान्यत्र दृग्गोचरीभवति। यदि ग्रन्थोऽयमाङ्गलभाषया हिन्दीभाषया चानूद्येत तदा संस्कृतमजानतामपि काव्यशास्त्ररसिकानां महानुपकारः स्यादिति मे विश्वासः। आशास्यते यदयं ग्रन्थः साहित्यशास्त्रिणां प्रसन्नताभाजनतां प्राप्स्यतीति श्रीरविशङ्करनागरमहोदयस्य सर्वात्मना मङ्गलं कामये।

**रसिकविहारी जोशी**

आचार्यः संस्कृतविभागाध्यक्षश्च

दिल्लीविश्वविद्यालयः, दिल्ली

३.२.१९७७

# आमुखम्

अनेकैर्विद्वद्भिः साहित्यशास्त्रस्य ध्वनिप्रस्थानं लक्ष्यीकृत्य वैदुष्यपूर्णा अनर्घ्या निबन्धाः प्रणीताः। तेषु ए० संकरन् महाभागानां 'द थिओरीज ऑफ रस एण्ड ध्वनि,' के० कृष्णमूर्त्तिमहोदयानां 'ध्वन्यालोक एण्ड इट्ज क्रिटिक्स', मुकुन्दमाधवशर्मणां 'द ध्वनि थिओरी इन संस्कृत पोइटिक्स', तपस्वी एस्० नन्दीमहाशयानां 'द ओरिजिन एण्ड डिवेलपमॅन्ट ऑफ रस एण्ड ध्वनि', श्रीरेवाप्रसादद्विवेदिमहोदयानां 'आनन्दवर्धन' इत्यादयः पाण्डित्यस्य परां कोटिमाटीकन्तो निबन्धाः प्रथिता एव। परन्तु ध्वनिसिद्धान्तजीवातुभूतां व्यञ्जनावृत्तिमेवावलम्ब्य निबद्धो निबन्धो मदक्षिगोचरतां नायातः। अत एव व्यञ्जनामाश्रित्य मया शोधकार्यं निरधारि।

व्यञ्जना हि ध्वनिसिद्धान्तसञ्जीवनी परमा शक्तिः। असौ तत्सूक्ष्मं बीजं यस्मादङ्कुरितो ध्वनिविटपः रीत्यलङ्कारादीन् सर्वसिद्धान्तानतिशयान उद्धुरकन्धरः सन् विलसति। व्यञ्जनयैव ध्वनिशिवः शक्तिमान्। तेन च महीयस्या अस्या व्यञ्जनावृत्तेरामूलचूलमनुशीलनं परमावश्यकम्।

मया खलु प्रस्तूयमानेऽस्मिन्निबन्धे व्यञ्जनावृत्तिः सूक्ष्मेक्षिकया विवेचिता। तस्या मूलं स्वरूपं तद्भेदोपभेदाश्च वैशद्येन प्रतिपादिताः। व्यञ्जनाविरोधिनां जयन्तभट्ट-जगदीशतर्कालङ्कारप्रभृतीनां तार्किकानां, मुकुलभट्टप्रभृतीनां मीमांसकानां, भट्टनायक-कुन्तक-प्रतिहारेन्दुराज-भोजराज-क्षेमेन्द्रप्रभृतीनामालङ्कारिकाणां मतं यथामति समुपस्थापितम्, व्यञ्जनोज्जीवितस्य ध्वनिसिद्धान्तस्य च प्रतिद्वन्द्विप्रस्थानैः सह साम्यं वैषम्यञ्च स्फुटीकृतम्। व्यञ्जनाया स्वतन्त्रवृत्तित्वमुचितमनुचितं वेति यौक्तिक्या दृष्ट्या परीक्षितम्। एवमानन्दवर्धनादारभ्य पण्डितराजजगन्नाथपर्यन्तं व्यञ्जनाविषयकः सम्पूर्णो विचार इतिहासक्रमेणात्र सन्निवेशित इति वैशिष्ट्यमस्य निबन्धस्य।

एतद्गवेषणाकार्यं मया विद्वन्मूर्धन्यानां दिल्लीविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाणां श्रीमतां प्रोफेसरश्रीरसिकविहारिजोशीमहाभागानां चरणारविन्दसविधे समुपविश्य समनुष्ठितम्। तत्रभवद्भिर्विविधकार्यव्यासक्ततयापि मत्प्रणीतो निबन्धोऽयं परमया कृपया पठितो यथावत्संशोधितश्च। स्थाने स्थाने

महिमभट्टविरचित-व्यक्तिविवेक-जगदीशतर्कालङ्कारप्रणीत-शब्दशक्तिप्रकाशिका-दीनां दुर्घटानां ग्रन्थानां ग्रन्थयः समुद्घाटिताः, आधुनिक्या वैज्ञानिक्या सरण्या चाहमनुसन्धानकर्मणि दीक्षितः। अत एतेभ्यो गुरुवरेण्येभ्यः सप्रश्रयं धन्यवाद-सुमनोऽञ्जलिं समर्पयन् स्वकीयामधमर्णतां हार्दिकीं कृतज्ञताञ्चात्रोट्टङ्कयामि।

दिवंगतेभ्यो गुरुवर्येभ्यो जम्मूनगरस्थश्रीरघुनाथसंस्कृतमहाविद्यालयीय-भूतपूर्वप्राध्यापकेभ्यः पण्डितकाकारामशास्त्रिमहाभागेभ्यः प्रणामाञ्जलीन् समर्पयामि, यैः परमेण स्नेहेनाहं छात्रावस्थायां साहित्यशास्त्रे दीक्षितः।

श्रीजगदीशलालशास्त्रिमहोदयैरस्य ग्रन्थस्य प्रकाशनावसरे यत्साहाय्यं समपादि तत्कृते ते सुतरां मम धन्यवादभाजः। शाम प्रिंटिंग एजेन्सीति नाम्नः मुद्रणसंस्थानस्याधिकारिभ्यः श्रीशामलालमहोदयेभ्यो धन्यवादान् वितरामि यैः खलु सततप्रयासेन सौहार्देन च ग्रन्थस्यास्य मुद्रणं साधु सम्पादितम्।

विदुषामाश्रवः

रविशङ्करः नागरः

शिवरात्रिः, संवत् २०३३.

# भूमिका

तार्किकमीमांसकादिशास्त्रकारानुमोदिताभ्यां शक्तिलक्षणाभ्यां भिन्ना विलक्षणा व्यञ्जनानाम्नी वृत्तिर्ध्वनिप्रस्थानानुगामिभिरानन्दवर्धनमम्मट-प्रभृतिभिराचार्यैरभ्युपगतेति सुविदितमेव विपश्चिताम्। प्राचीनैः शाब्दिकैर्मी-मांसकैस्तार्किकैश्चानुल्लिखितचरामिमामानन्दवर्धनप्रतिपादितां वृत्तिमवलम्ब्य महान् मतिभेदः प्रावर्तिष्ट शास्त्रज्ञेषु वृत्तिवित्सु विद्वत्सु। तथाहि अभिधातात्पर्य-लक्षणेति वृत्तित्रय्यां जाग्रत्यां किमनयाश्रुतचरया ध्वनिवादिकपोलकल्पितया शास्त्रकारासम्मतया वृत्त्येति कठोरः प्रत्यादेशः समारब्धो व्यञ्जनाया न केवलं शाब्दिकानां मीमांसकानां तार्किकानामेव गोष्ठीष्वपितु साहित्यशास्त्रज्ञानां मण्डलीष्वपि। तत्र शब्दाद्यावानर्थो लभ्यते तत्र शक्तिलक्षणान्यतररूपैव वृत्तिः प्रगल्भत इति वृत्तिद्वयं महताग्रहेणातिष्ठमाना मीमांसकास्तार्किकाश्च व्यञ्जनां सर्वथा निराकुर्वन्ति। भवेच्चेद्यदि व्यञ्जना तदा तस्या अनयोर्वृत्त्योरेवान्त-र्भावं सिद्धान्तयन्ति। इमां पद्धतिं मेषपङ्क्तिवदनुसरन्त आलङ्कारिका अप्यानन्द-वर्धनव्यवस्थापितमिमं नवं शब्दव्यापारं प्रत्याख्यातवन्तः। मुकुलभट्ट-भट्टनायक-महिमभट्ट-प्रतिहारेन्दुराज-भोजराज-धनिक-धनञ्जयप्रभृतयः साहित्यशास्त्रविच-क्षणा आचार्या अपि गतानुगतिकतया अभिधया तात्पर्येणानुमानेन वा व्यञ्जनामुत्पाटयन्ति। एवमस्याः प्रतिष्ठापयितुरानन्दवर्धनस्य समयादेव प्रावर्तत व्यञ्जनायाः प्रत्यादेशः।

परं व्यञ्जनाप्राणाया अभिव्यक्तेर्विचारो न केवलमानन्दवर्धनेनैव प्रथमं निर्दिष्टः, प्रत्युतास्य मूलं वेदेषु, यास्कप्रणीते निरुक्ते, प्राचीनेषु दर्शनग्रन्थेष्वपि लक्षयितुं शक्यम्। यथाहि—दीपादिना प्रकाशकेन प्रकाश्यस्य घटस्याभिव्यक्तिरिति व्यञ्जनाप्राणायितो विचारोऽयं परमप्रौढेषु वेदान्तव्याकरणदर्शनेष्वपि दृढं बद्धमूलः। तत्र वेदान्तदर्शने सोऽहमस्मीति प्रतीतिरभिव्यक्तिरेव स्वस्वरूपस्य। मायोपहितं ब्रह्म स्थूलोऽहं कृशोऽहं विपन्नोऽहमित्याद्यनुभवति। परं मायायां निराकृतायां गूढमद्वैतं शुद्धं ब्रह्माभिव्यक्तं भवति। व्यञ्जनयापि गूढो व्यङ्ग्यो-ऽर्थः प्रकाश्यते। यथा वेदान्तदर्शने ज्ञानेन ब्रह्मणोऽभिव्यक्तिस्तथैव ध्वनि-सिद्धान्तेऽपि व्यङ्ग्यस्यार्थस्याविर्भावो व्यञ्जनया। अभिव्यक्तिवादोऽय-मानन्दवर्धनात् प्राक् श्रीमच्छङ्कराचार्यैः, शैवदर्शननिष्णातैः श्रीमत्सोमानन्दो-त्पलराजप्रभृतिभिर्दार्शनिकैः परिपोषितः परिवर्धितश्च। शब्दशास्त्रधुरंधरैः

श्रीमद्भर्तृहरिमहोदयैरपि नादस्फोटयोर्व्यङ्ग्यव्यञ्जकभावमभ्युपगच्छद्भिरभिव्यक्तिविचारः सुतरां समुपोद्बलितः। किमधिकमभिव्यक्तिमूलाया व्यञ्जनायाः सूक्ष्मं बीजं वेदेष्वपि निगूढमुद्घाटयितुं शक्यम्। एवं परम्पराप्राप्त एवायं व्यञ्जनाबीजभूतोऽभिव्यक्तिविचारो व्यञ्जनेति नवीनेन व्यपदेशेन प्रतिष्ठापित आनन्दवर्धनेन।

व्यञ्जनां प्रत्याचक्षाणानामाचार्याणां 'ध्वनिव्यञ्जने' इति व्यपदेशद्वयमेव विमतिपदपतितं, न तु ध्वनिनाम्ना व्याकृतं सहृदयहृदयसर्वस्वभूतं प्रतीयमानार्थतत्त्वम्। अत एव व्यञ्जना अभिधायां, लक्षणायां, अनुमितौ वा विलीयते ध्वनिश्चालङ्कारेष्वन्तर्भवतीति तु ध्वनिध्वंसकैराचार्यैर्मुहुर्मुहुः प्रोक्तं परं व्यञ्जनावेद्यं तत्त्वं प्रतीयमानं तु तैर्न प्रत्याक्षिप्तम्।

परन्तु सर्वानुभवसिद्धं वाल्मीकिकालिदासप्रभृतिभिः कविपुङ्गवैरुपात्तं तत्तत्वं केन व्यपदेशेन व्याकरणीयमिति विषये तस्य व्यञ्जनया ध्वननाद् ध्वनिनामकरणमेवोचितं प्रतिभाति। व्यञ्जना च वाच्यलक्ष्यार्थव्यतिरिक्तस्य प्रतीयमानार्थस्य कृतेऽवश्यमुपादेया। अतः काव्यस्यास्वादो यदीष्टः, 'अनन्यलभ्यो हि शब्दार्थः', 'नाशब्दः कश्चिद् व्यापारः' इति वाक्यार्थविदामाचार्याणां वचनं यदि प्रमाणत्वेनाङ्गीक्रियते, तर्हि शब्दप्रमाणावगतस्य प्रतीयमानार्थस्य प्रतीतिः शब्दव्यापारेणैव सम्पाद्येतिकृत्वा व्यञ्जनानामाभिनवो व्यापारो मीमांसकतार्किकादिभिश्शास्त्रकारैरन्यैर्ध्वनिविरोधिभिश्चालङ्कारिकैरवश्यमूरीकार्यः। नेदं केनापि मतिमता स्वानुभवमनाच्छादयता रसिकेनापलपितुं शक्यं यद्व्यञ्जनैव काव्यस्य काप्यपूर्वा कला यया स्रष्टा कविः स्वानुभूतिं काव्येऽभिव्यनक्ति सहृदयश्चानयैव कवेरभिव्यक्तामनुभूतिं समास्वादयति। सरस्वत्यास्तत्त्वं व्यञ्जना यया कवि-सहृदयाः परमं वरेण्यं ब्रह्मानन्दसंज्ञितं रसामृतह्रदमवगाहन्ते।

# विषयसूची

## प्रथमोऽध्यायः

# काव्यस्य प्रयोजनं लक्षणञ्च

### काव्यस्य प्रयोजनम्

वाल्मीकि-कालिदासाऽऽदीनां कवि-पुङ्गवानां काव्यं पठंश्चर्वयंश्च सहृदयः परमानन्द-लहरी-परिपूरित-गम्भीरतर-निजहृदय-महाह्रदो नान्यत् किञ्चित् संवेदयते रस-चर्वणा-समये ऋते स्वसंवेदन-सिद्ध-परमानन्दात् । अतः काव्य-प्रयोजन-पर्यालोचन-प्रसङ्ग आनन्द एव काव्यस्य मुख्यं पार्यन्तिकं फलम् । यद्यपि भामह-भट्टोद्भट-मम्मट-प्रभृतिभिरालङ्कारिकैरन्यान्यपि धर्माऽर्थकाम-कलावैचक्षण्यादीनि शिवेतरक्षत्यादीनि च काव्यस्य प्रयोजनानि समुदीरितानि, परं काव्यस्य यदि नाऽऽनन्दे पर्यवसानं तर्हि शास्त्रेतिहासाऽऽदिभ्योऽस्य काव्यस्य विदग्ध-जनाऽऽस्वाद्यस्य किंनिमित्तं वैलक्षण्यं भवेत् । चतुर्वर्ग-प्राप्त्युपायान् वेद-शास्त्रेतिहासादीनधीयानो लोकस्तेषु काव्यानुशीलन-समुद्भूतस्य विगलित-वेद्यान्तरस्य गिरमतीतस्य रस-रूपिणः परमानन्दस्यांऽशमात्रमपि नाऽऽस्वादयति । ब्रह्मानन्द-सहोदरो ह्यसावानन्दः स्वानुभूति-समयेऽन्यत् सर्वं तिरोदधत् काव्यस्य पठनाच्छ्रवणाद् दर्शनादेवाऽऽस्वाद्यते, अतः काव्यस्यैवाऽसौ कश्चित् वक्तव्य-विशेषः । आनन्दमन्तरा काव्यस्य किं वैशिष्टयं प्रभुसम्मित-वेदाऽऽदि-शास्त्रेभ्यः सुहृत्-सम्मित-पुराणेतिहासादिभ्यश्च । अतः सत्स्वपि काव्यस्याऽन्येष्वनिष्ट-ताप-शमनादिषु प्रयोजनेष्वानन्द एव तस्य मुख्यं प्रयोजनं स्वीकरणीयम् । ये च राजपुत्र-प्रभृतयोऽवश्यं संस्करणीयास्तेऽपि हृदयाह्लाद-क्षमस्य काव्यस्याऽनुशीलनात् परमानन्द-लहरी-निमज्जन-विशदीकृताऽन्तःकरणा लोक-शास्त्र व्यवहार-निपुणा व्युत्पन्नाश्च भवन्तीत्यानन्द एव तत्र प्रयोजकः । यद्यानन्दाऽनुभूतिर्न स्यात् काव्यात्, तर्हि राजपुत्रादीनामन्येषाञ्च कठोर-मतीनां प्रवृत्तिरेव न स्यात् । परं काव्य-मुखेन रसास्वादसुखमनुभवन्तस्ते धर्माऽधर्म-विवेकं प्राप्नुवन्तीति रसास्वाद एव काव्यस्य मुख्यं प्रयोजनं प्रतिपत्तव्यम् ।

यद्यपि काव्यं लोकान् शुभे कर्मणि प्रवर्तयति, अशुभाच्च निवारयति, परं काव्यस्य न केवलं व्यवहार-ज्ञान एवोपयोगिता, अपितु सहृदय-हृदयाऽऽह्लाद-कत्वेऽपि । कवेः काव्य-प्रयोजनं यशः-प्राप्ति-धनोपार्जनाऽनिष्ट-नाशादिकमपि

भवेन्नाम, परं रसाऽऽस्वादयितुः सहृदयस्याऽऽनन्द एव मुख्यं प्रयोजनं पर्यवस्यति । काव्य-रसाऽऽस्वाद-समये रसयिता सहृदय आनन्द-सन्दोहे प्लवमानो नाऽन्यत् किञ्चिद् ज्ञातुं प्रभवति । आनन्द-कल्लोल-परिपूरित-निज-हृदय-सागरः सन् रस्यमानता-सारैकप्राणं रसमास्वादयन् सहृदयो न किञ्चिद् वेत्ति शुभमशुभं वा रसाऽनुभूति-समये । एवं हृदय-संवादिनि रस-चर्वणाऽऽत्मके परमानन्दे सर्वत्र व्याप्ते नाऽन्यत् किञ्चिदवशिष्यते, परमाऽऽह्लाद-महोदधि-तरङ्ग-समुल्लासमन्तरा ।

भामहादि-पण्डितराजजगन्नाथान्तानां सर्वेषामालङ्कारिकाणां मतेन काव्य-स्य प्रयोजनेष्वानन्द एव मूर्धन्यतामवगाहते । तथाहि—**'धर्माऽर्थकाममोक्षेषु कलासु च वैचक्षण्यं काव्य-कृतम्'** इति वदताऽपि भामहाऽऽचार्येण **'करोति कीर्ति प्रीतिञ्च साधु-काव्य-निषेवणम्'** इति[1] च प्रदर्शयता प्रीतिरेव काव्य-प्रयोजनत्वेनाऽभ्युपगता । मम्मटभट्टेनाऽपि **'काव्यं यशसेऽर्थकृते'** इति व्याहर-ताऽपि सद्यः परनिर्वृति-करणेन निर्वृतिरेव काव्यस्य प्रमुखं प्रयोजनं समा-ख्यायि[2] । रसिक-जन-ललाम-भूतेनाऽभिनवगुप्तपादाऽऽचार्येणाऽपि स्वकीये ध्वन्यालोक-लोचने यद्यपि **'श्रोतृणां व्युत्पत्ति-प्रीती यद्यपि स्तः; यथोक्तम्— धर्मार्थकाम-मोक्षेषु वैचक्षण्यं कलासु च'** इति प्रदर्शितम्, तथाऽपि **'तत्र प्रीति-रेव प्रधानम्'** इति लिखता काव्य-प्रयोजनेषु प्रीतिरेव प्राधान्येन स्वीकृता[3] ।

रस-प्राधान्य-वादिनो भट्टनायकस्याऽपि मतम्—

**वाग्धेनुर्दुग्ध एतं हि रसं यद्बालतृष्णया ।**
**तेन नाऽस्य समः स स्याद् दुह्यते योगिभिर्हि यः ॥**[4]

इत्येवमुपस्थापयताऽभिनवगुप्तपादाचार्येण तस्याऽऽनन्द एव दृढः सम्प्रत्ययः प्रादर्शि ।

दशरूपकेऽवलोककारेण धनिकेनाऽपि निरतिशय-सुखाऽऽस्वाद-व्यतिरिक्तं नाऽन्यत् प्रयोजनं काव्यस्येति प्रोद्घोषयताऽऽनन्दानुभूतिरेव काव्यस्य परमं प्रयो-जनमिति सिद्धान्तितम् । यथोक्तम्—

**'काव्य-शब्दानां चाऽन्वय-व्यतिरेकाभ्यां निरतिशय-सुखाऽऽस्वादव्यतिरेकेण**

---

१. भामहः, काव्यालङ्कारः १, २ ।
२. मम्मटः, काव्यप्रकाशः १, २ ।
३. शास्त्री, पं० पट्टाभिरामः, आनन्दवर्धनकृतः ध्वन्यालोकः, लोचन-भाष्यम्, पृ० ४०-४१ ।
४. तत्रैव, पृ० ६१-६२ ।

**प्रतिपाद्य-प्रतिपादकयोः प्रवृत्ति-विषययोः प्रयोजनान्तराऽनुपलब्धेः स्वाऽऽनन्दाऽनुभूतिरेव कार्यत्वेनाऽवधार्यते'**[1] **इति ।**

वक्रोक्ति-जीवितकारस्य कुन्तकस्याऽपि काव्यस्य पार्यन्तिके प्रयोजन आनन्द एव दृढाऽऽस्था । यथोक्तम्—

**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम् ।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ॥**[2] इति ।

अनेन स्फुटं प्रतिपद्यते यद् वेद-पुराणेतिहासादिभ्यः काव्यस्य न कश्चिदपकर्षः प्रत्युत वेद-पुराणाऽऽदिष्वानन्द-कणस्याऽप्यननुभवाद् दुःखेन प्रवृत्तिः । काव्ये त्वानन्दलहरीसमुच्छलनेनाऽल्प-मतीनां शास्त्र-पराङ्मुखानामपि सुखेनैव प्रवृत्तिर्भवतीत्यानन्द एव परमं प्रयोजनं काव्यस्य ।

**काव्यस्य लक्षणम्—**

ननु प्रीति-प्रधानस्य काव्यस्य किं लक्षणमिति जिज्ञासायां **'शब्दार्थौ सहितौ काव्यम्'**[3] इति भामहाचार्येणाऽऽदौ स्वकीये काव्यालङ्काराऽऽख्यग्रन्थे भणितम् । अन्यैरपि वामन-रुद्रट-मम्मट-हेमचन्द्र-विद्याधरप्रभृतिभिराचार्यैः शब्दार्थयोः साहित्य-लक्षणं काव्य-स्वरूपं प्रतिपादितम्[4] । भामहोपज्ञमिदमेव शब्दार्थयोः साहित्य-प्रस्थानं काव्य-लक्षणमलङ्कारग्रन्थेषु प्रसिद्धम् । आचार्यो दण्डी शब्दाऽर्थयोस्तुल्य-प्राधान्यमसहमानोऽर्थोपसर्जनकं शब्द-प्रधानं काव्य-

---

१. फरब, काशीनाथपाण्डुरङ्गः, धनञ्जयकृतं दशरूपकम्, धनिकटीका, पृ० १२० ।
२. कुन्तकः, वक्रोक्तिजीवितम्, १,५ ।
३. भामहः, काव्यालङ्कारः, १, ६ ।
४. (क) काव्यशब्दोऽयं गुणाऽलङ्कारसंस्कृतयोः शब्दार्थयोर् वर्तते—सूरी, श्रीकृष्णः, वामनविरचिता काव्यालङ्कारसूत्रवृत्तिः, पृ० ४ ।
(ख) शब्दार्थौ काव्यम्—रुद्रटः, काव्यालङ्कारः, १, २ ।
(ग) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि—मम्मटः, काव्यप्रकाशः, १, ३ ।
(घ) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्—म० म० पण्डितः शिवदत्तः, हेमचन्द्रकृतं काव्यानुशासनम्, पृ० १६ ।
(ङ) शब्दार्थौ वपुरस्य विबुधैरात्माभ्यधायि ध्वनिः—विद्याधरः, एकावली १, १३ ।

लक्षणमाम्नाति[1]। 'रमणीयार्थ-प्रतिपादकः शब्दः काव्यम्'[2] इति वदता पण्डितराज-जगन्नाथेनाऽपि दण्डि-मतमेवोपोद्बलितम् । इदमेव शब्द-प्राधान्य-प्रस्थानम् ।

परं काव्यत्वं न केवलं शब्दार्थयोरेवाऽवशिष्टम् । शब्दार्थातिरेकी कोऽप्यन्यः काव्यस्य धर्म आत्म-स्थानीयो वक्तव्यो भवति । स चाऽऽत्मा **रीतिरात्मा काव्यस्ये**त्यभिदधता वामनेनाऽऽदौ निर्दिष्टः[3]। परमस्ति महत्यत्राऽश्रद्धा ध्वनिकार-पृष्ठाऽनुगानामालङ्कारिकाणाम् । भट्टोद्भटादिभिर्व्याकृता अनुप्रासोपमादयोऽलङ्काराः, वैदर्भी-पाञ्चालीप्रभृतयश्चाऽवयव-संस्थानीया रीतयः शब्दार्थ-व्यतिरिक्तास्तावन्न दृश्यन्ते, तासां काव्य-कामिनी-शरीर-भूत-शब्दार्थेष्वेव पर्यवसानात् । वैदर्भी-प्रभृतयो रीतयोऽङ्गभूता एव, अतो न ता अङ्गित्व-पदवीमधिरोढुं प्रभवन्ति । नहि हस्त-पादोदरादीनामवयवानां संस्थान-विशेष एवाऽऽत्मत्वेनाभ्युपगतो भवति । वामनस्य काव्य-लक्षणे त्वियान् एव विशेषो यद् भामहादिभिः शब्दार्थयोः साहित्य-लक्षणे काव्य-स्वरूपे न काव्यस्याऽऽत्मा प्रोक्तः । परं वामनेन रीतिरात्मत्वेन स्वीकृता । अतः काव्यस्याऽऽत्मनाऽपि केनचिद् भाव्यम् इत्यत्राऽऽदौ वामनाऽऽचार्येणैव विचारः कृतः । रीतेरात्मत्वमुपपद्यते न वेति त्वन्यत् ।

आनन्दवर्धनाऽऽचार्येण ध्वनि-प्रस्थान-प्रजापतिना रीतेरात्मत्वं दूषयता कोऽसौ काव्यस्याऽऽत्माऽऽनुप्राणको जीवातु-भूत इति सूक्ष्मेक्षिकया गवेषयता '**काव्यस्याऽऽत्मा ध्वनि**रिति ध्वनिरेव काव्यस्याऽऽत्मा प्रोक्तः[4] । पश्चाच्च तन्-मतोपोद्बलकेनाऽभिनवगुप्तपादाऽऽचार्येण युक्त्यवष्टम्भपूर्वकं रस-ध्वनिरेव काव्यस्याऽऽत्मा निरधारि[5] । साहित्यदर्पण-कारेण विश्वनाथाचार्येणापि **वाक्यं रसात्मकं काव्यम्** इति व्याहरता काव्यस्यात्मा रस एव प्रत्यपादि ।[6]

एवं काव्यलक्षणनिरूपणप्रसङ्गे केचिच्छब्दार्थसाहित्यवादिनः, अन्ये शब्दप्राधान्यवादिनः, इतरे रीतिवादिनः, अपरे ध्वनिपक्षपातिनश्चाचार्या विसं-

---

१. शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः —दण्डी, काव्यादर्शः, १, १०।
२. झा, बद्रीनाथः, जगन्नाथविरचितः रसगङ्गाधरः, पृ० ६ ।
३. सूरी, श्रीकृष्णः, वामनकृता काव्यालङ्कारसूत्रवृत्तिः पृ० १५-१६ ।
४. काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः—ध्वन्यालोकः १, १ ।
५. शास्त्री, पण्डितः पट्टाभिरामः, आनन्दवर्धनकृतः ध्वन्यालोकः, लोचन-भाष्यम्, पृ० ८६-८७ ।
६. विश्वनाथः, साहित्यदर्पणः, १, ३ ।

वादि काव्यलक्षणमुपनिबध्नन्ति ।

**जगन्नाथकृतं काव्यलक्षणम्**

तथाहि-शब्दप्राधान्यवादिनो जगन्नाथादय आचार्याः शब्दार्थसाहित्यवादिनां मतमित्थं दूषयन्ति । न च काव्यपदेन यद्गृह्यते तच्छब्दार्थयोः समानभावेन व्याप्तम्, उत शब्देऽर्थे च पृथक्पृथग्भावेनावशिष्टमिति वाच्यम्, नाद्यः काव्यपदप्रवृत्तिनिमित्ते शब्दार्थयोर्व्यासक्ते सति श्लोकवाक्यस्य काव्यत्वानङ्गीकारव्यवहारप्रसङ्गात्[1] । अयमाशयः । यथा द्वित्वं द्वयोः पदार्थयोर्व्यासक्तं नैकस्मिन् पदार्थे समुपलभ्यते, तथा काव्यत्वमपि शब्दार्थयोर्व्यासक्तं सन्न कथमपि श्लोकवाक्ये काव्यावयवभूते प्रसक्तं भवति । न च तथेष्टापत्तिः । श्लोकवाक्यानामपि काव्यावयवभूतत्वेन काव्यत्वानपलपनीयत्वात् । यथा घटपटोभयवृत्तिर्द्वित्वधर्मो न घटे न वा पटे पृथक्पृथग्दृश्यते, अपितु घटपटोभयोः समानभावेन तद्व्यासक्तः, तद्वत् व्यासज्यवृत्तित्वं नाम काव्यं शब्दार्थयोः समानभावेन व्यासक्तं सत् काव्यावयवभूते श्लोकवाक्ये नैव सङ्गतं भवतीति व्यवहारपराहतः पूर्वः पक्षः । न द्वितीयः । काव्यस्य शब्देऽर्थे च पृथक्पृथग्भावेनावशिष्टे, एकस्मिन्नेव पद्ये शब्दार्थोभयकाव्यव्यवहारापत्तेः । तच्चानिष्टम् । न केनचिदपि शब्दकाव्यमिदञ्चार्थकाव्यमिति व्यवह्रियते । अतः शब्दार्थोभयनिष्ठत्वं काव्यस्य नोपपद्यते, परं काव्यं श्रुतमर्थो न ज्ञात इति विश्वजनीनव्यवहारतः शब्दप्रधानं **रमणीयार्थप्रतिपादकः शब्दः काव्यमि**त्येव काव्यलक्षणमुपपन्नं भवति ।

**नागेशभट्टकृतं जगन्नाथमतप्रत्याख्यानम्**

पण्डितराजजगन्नाथकर्दमितं भामहोपज्ञं साहित्यप्रस्थानं रसगङ्गाधरटीकाकारेणैव नागेशभट्टेन पङ्कप्रक्षालनं कुर्वता एवमनाविलं कृतम् ।[2] तथाहि—तत्र काव्यत्वप्रयोजकं रसास्वादव्यञ्जकत्वं नाम शब्दार्थयोः समानभावेन व्याप्तम् । नहि काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञात इति विश्वजनीनव्यवहार एव शब्दविशेषस्यैव काव्यपदार्थत्वमुपोद्बलयति, प्रत्युत काव्यं पठितं काव्यं श्रुतं काव्यमवबुद्धमिति लोकव्यवहारस्यापि दर्शनात् काव्यत्वं व्यासज्य-

---

१. अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्, प्रत्येकपर्याप्तं वा, नाद्यः, एको न द्वाविति व्यवहारस्येव 'श्लोकवाक्यं, न काव्यमि'ति व्यवहारस्यापत्तेः । न द्वितीयः, एकस्मिन् काव्ये काव्यद्वयव्यवहारापत्तेः । पण्डितः, दुर्गाप्रसादः, जगन्नाथविरचितः रसगङ्गाधरः, पृ० ७ ।

२. तत्रैव, नागेशकृता टीका, पृ० ७ ।

वृत्तिर्धर्म एवावशिष्यते। किञ्च **तदधीते तद्वेद** (४.२.५९) इति पाणिनिसूत्रं व्याकुर्वता भगवता पतञ्जलिना वेदशास्त्राणामुभयवृत्तित्वं समर्थितम्। तथा सति काव्यस्यापि व्यासज्यवृत्तित्वमङ्गीकार्यम्। अन्यथा **तदधीते तद्वेद** इति वचनस्य का सङ्गतिः। अत एव मम्मटादिभिः प्रोक्तं शब्दार्थसाहित्यस्वरूपं काव्यलक्षणमनुपहसनीयम्।

## विश्वनाथकृतं मम्मटप्रतिपादितकाव्यलक्षणखण्डनम्

तत्र **अदोषौ** इत्यस्य खण्डनम्।

रसात्मवादिना विश्वनाथेनापि शब्दार्थसाहित्यवादिनो मम्मटाचार्यस्य **तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि**[1] इति काव्यलक्षणं कटाक्षितम्। तथाहि—अदोषाविति शब्दार्थविशेषताधायकं काव्यलक्षणघटकं पदं न निर्दोषम्। सर्वथा दोषविनिर्मुक्तस्य काव्यस्यासम्भवत्वात्। **न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः**[2] इत्यादि यदुत्तमस्य ध्वनिकाव्यस्योदाहरणमुपन्यस्यते तत्र विधेयाविमर्शदोषदर्शनात् काव्यत्वमेव न स्यात्, का कथा ध्वनेः। न च यदंशे दोषस्तत्राकाव्यत्वं यदंशे दोषाभावस्तत्र काव्यत्वमिति वाच्यम्, तथा सति पद्यस्यैकस्यैव दुष्टत्वादुष्टत्वाच्च काव्यत्वाकाव्यत्वनिर्णयाभावप्रसङ्गात्। नहि श्रुतिकटुप्रभृतयो दोषाः काव्यस्य कञ्चिदेवांशं दूषयन्तो दोषा उच्यन्ते, प्रत्युत श्वित्रलेशेन समग्रस्य वपुषो यथा दुर्भगत्वं तथैव सर्वमेव काव्यं तैर्दूषितं भवति। यथोक्तं दण्ड्याचार्येण काव्यादर्शे—

> **तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।**
> **स्याद् वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥**[3]

ब्रह्मणा निर्मितं जगदपि यदैकान्तं निर्दुष्टं न भवति, तदा पुरुषकृतस्य काव्यस्य कथं सर्वथा निर्दोषत्वमुपपद्येत। अतो मम्मटकृतकाव्यलक्षणे **अदोषौ** इति काव्यलक्षणघटकविशेषणपदोपादानेन काव्यपदप्रवृत्तिनिमित्तं कालिदासादीनां रघुवंशमेघदूतादिप्रणयनकर्म काव्यपदव्यपदिष्टं न स्यात्। तथा सति

---

१. मम्मटः, काव्यप्रकाशः, १, २।

२. न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा।
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥
करमरकरः र० दा०, मम्मटकृतः काव्यप्रकाशः, पृ० २०४।

३. दण्डी, काव्यादर्शः, १,७।

किमसौ काव्यमिति स्वरूपविवेकोऽपि कर्तुं न शक्येत् लक्ष्यस्यादर्शनात् ।[1]

अतः कीटानुविद्धं रत्नं यथा न रत्नत्वात् परिभ्रश्यते, सकीटस्यापि तस्य लोके रत्नपदव्यपदेश्यत्वात्, तथैव दोषयुक्तमपि काव्यं न काव्यत्वात् परिहीयते ।[2] दोषास्तु केवलं काव्यस्योपयोगितां खर्वीकुर्वन्ति, न तु ते काव्यं काव्यत्वात् प्रच्यावयन्ति । अतो मम्मटकृतकाव्यलक्षणे **अदोषौ** इति काव्यलक्षणघटकपदोपादनमसङ्गतमिति साहित्यदर्पणकर्तुराशयः ।

**अदोषौ इत्यस्य मण्डनम् ।**

अदोषावित्यस्य काव्यत्वविघटका ये च्युतसंस्कारादयः प्रबला दोषास्तद्रहितौ शब्दार्थावित्यर्थोऽवगन्तव्यः । अत एव ये दोषाः काव्ये रसास्वादं न व्यवदधति, त उपेक्ष्याः । परं ये श्रुतिकटुप्रभृतयो दोषा रसास्वादान्तरायभूतास्ते शृङ्गारादौ सर्वथा परित्याज्या इति लक्षणकर्तुर्मम्मटस्याशयोऽत्रानुसन्धेयः । अन्यथा निर्दोषस्य काव्यस्य सर्वथासम्भवत्वान्निर्विषयं काव्यलक्षणं भवेत् ।

**सगुणौ** इत्यस्य खण्डनम् ।

सगुणौ इति काव्यप्रकाशकारकाव्यलक्षणघटकमपि पदं न साधु विश्वनाथमतेन । गुणानां रसधर्मत्वं कण्ठतो लक्षणकर्त्रा मम्मटभट्टेनैव प्रोक्तम् । तद्यथा—

> **ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
> **उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ।**[3] ।

परं काव्यलक्षणेनानेन गुणानां रसधर्मत्वमनायासेनैवापहस्तितं भवति । अतः सरसाविति वक्तव्ये सगुणाविति वचनं विभ्रमकरमेव । सर्वथा मम्मटभट्टेनापि काव्यस्य सरसत्वमिष्यत एव । तथा चोक्तं तेन—

**रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म**[4] इत्यादि ।

**सगुणौ इत्यस्य मण्डनम् ।**

---

१. खिस्ते, नारायणशास्त्री, प्रभाकरभट्टप्रणीतः रसप्रदीपः, पृ० ४

२. कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ।। हृदयदर्पणः, उद्धृतम्, तत्रैव, पृ० ३.

३. मम्मटः, काव्यप्रकाशः, ८,६६ ।

४. करमरकरः र० दा०, मम्मटप्रणीतः काव्यप्रकाशः, पृ० १० ।

लक्षणवाक्ये शब्दार्थयोः सगुणत्वमुपचारत उपपन्नम् । यथा **आकारोऽस्य शूरः** इत्यादौ शौर्यस्यात्मधर्मस्याप्याकारे तद्व्यञ्जक आरोपो गुणवृत्त्या क्रियते, तथा गुणानां माधुर्यौजःप्रसादानां रसधर्मत्वेऽप्युपचारात्तद्व्यञ्जकेषु शब्दार्थेष्वारोपः कृतो भवति ।[1] इत्थं गुणाभिव्यञ्जकत्वाच्छब्दार्थयोः सगुणत्वोक्तिरप्रतिक्षेप्या ।

अनया दिशाऽलङ्काराणामपि शब्दार्थविशेषताधायकत्वं समीचीनम् । यथा लौकिकानि कटककेयूरावतंसादीन्याभूषणानि रमणीनामवयवानलङ्कुर्वन्ति तद्द्वाराऽलङ्कार्यस्य शोभामपि पुष्णन्ति, तथैवानुप्रासोपमादयोऽलङ्काराः शब्दार्थावुपस्कुर्वन्तोऽङ्गिनमात्मानं रसमपि भूषयन्ति । अतः शब्दार्थयोः सालङ्कारत्वमपि न विप्रतिपत्तव्यम् ।

काव्यलक्षणे **अनलङ्कृती पुनः क्वापि** इति वदतो मम्मटभट्टस्याशयः प्रदीपटीकाकारेण गोविन्दठक्कुरेणैवं प्रकाशमानीतो[2] यत् काव्ये रसालङ्कारयोरन्यतरोऽवश्यमुपादेयः । नीरसं स्फुटालङ्काररहितं काव्यं न शोभते । यतः काव्ये रसो वा स्फुटालङ्कारा वा चमत्कारहेतवः । रसालङ्काराणामभावे किंनिबन्धनं सहृदयाह्लादकत्वे चारुत्वे च काव्यस्य ? स्फुटालङ्काररसशून्यं तु

---

१. दीप्तिः प्रतिपत्तुर्हृदये विकासविस्तरप्रज्वलनस्वभावा । सा च मुख्यतया ओजःशब्दवाच्या । तदास्वादमया रौद्राद्याः, तया दीप्त्या आस्वादविशेषात्मिकया कार्यरूपया लक्ष्यन्ते रसान्तरात् पृथक्तया । तेन कारणे कार्योपचाराद् रौद्रादिरेवौजःशब्दवाच्यः । ततो लक्षितलक्षणया तत्प्रकाशनपरः शब्दो दीर्घसमासरचनवाक्यरूपोऽपि दीप्तिरित्युच्यते ।
शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, लोचनभाष्यम्, पृ० २०६-२०९ ।

२. (क) वयं तु पश्यामः—नीरसे स्फुटालङ्कारविरहिणि न काव्यत्वम् । यतो रसादिरलङ्कारश्च द्वयं चमत्कारहेतुः । तथा च यत्र रसादीनामवस्थानं न तत्र स्फुटालङ्कारापेक्षा ।
पण्डितः दुर्गाप्रसादः; गोविन्द-काव्यप्रदीपः पृ० ८ ।
(ख) 'प्रदीपकृतस्तु निर्दोषत्वादौ सति स्फुटालङ्काररसवत्त्वान्यतरत्वं लक्षणम् । एवं यत्र स्फुटालङ्काराभावस्तत्र रसवत्वादेव काव्यत्त्वव्यवहारोऽन्यत्र नीरसे स्फुटालङ्कारत्वादेव । अत एव 'क्वचिदनलङ्कृती' इत्यपि यथाश्रुतमेव साधु ।'
खिस्ते, नारायणशास्त्री, प्रभाकरभट्टप्रणीतः रसप्रदीपः पृ० ६

काव्यं चित्रमात्रं सदधमकोटिमेवाटीकते ।

वस्तुतस्तु मम्मटभट्टः काव्यलक्षणं भामहोक्तदिशोपनिबध्नन्नप्यव्यक्तरूपेण काव्ये रसस्य प्राधान्यं सर्वथा स्वीकरोत्येव । यथाहि—

**क्वापीत्यनेनैतदाह यत्सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः**[1] इति वृत्तिग्रन्थस्य सङ्गतिः काव्ये रससद्भावाभ्युपगमेनैव सम्भवा । अन्यथा यत्र **यः कौमारहरः स एव हि वरः**[2] इत्यादिषु पद्येषु न कश्चित्स्फुटोऽलङ्कारस्तत्र काव्यत्वमव्यापकं स्यात् । न च तथेष्टापत्तिः । पूर्वोक्त उदाहरणे विप्रलम्भशृङ्गारस्य चमत्कारः सर्वजनप्रतीतिसिद्धो नापह्नोतुं शक्यः । अतः प्राचीनपरिपाट्यनुरोधेन स्वकीये काव्यलक्षणवाक्ये शब्दार्थयोः सरसत्वमनभिधायापि मम्मटः प्रकारान्तरेण रसात्मकत्वं काव्यस्योररीकरोत्येव ।

**गजेन्द्रगद्करकृतं मम्मटोपनिबद्धकाव्यलक्षणप्रत्याख्यानम् ।**

मम्मटकृतकाव्यलक्षणं प्रति महत्यनास्था आधुनिकानां ए० बी० गजेन्द्रगद्करमहोदयानामपि ।[3] तेषां मतेन रसप्राधान्यवादिनोऽपि मम्मटस्य काव्यलक्षणे सरसाविति पदाभावो हृदयोद्वेजकः । काव्यप्रकाशस्य चतुर्थ उल्लासेऽभिनवगुप्ताचार्यमतं समर्थयन् मम्मटः स्वयं स्पष्टमेव रसप्राधान्यमभ्युपगच्छन् स्वकीये काव्यलक्षणे रसमुपेक्षमाणस्तावन्न सह्यः । सरसाविति सुस्पष्टमनभिधाय सगुणाविति वचनं न युक्तिसङ्गतम् । लक्षणेन तु सर्वथा स्वरूपसंस्पर्शिना भाव्यम् । एतल्लक्षणद्वारा मम्मटेन काव्यस्वरूपं नोद्घाटितम् । दोषगुणालङ्कारादयोऽङ्गिनं कञ्चिदपेक्षन्ते । स एवात्र नोक्तः । अतः सरसावित्येव वक्तव्यं भवति, यदपेक्षया गुणालङ्कारादयः स्वात्मलाभं लभन्ते । अन्यथा किमपेक्षया कस्य गुणत्वमलङ्कारत्वञ्चोपपद्येत । अतो गजेन्द्रगद्करमहाभागानां मते वाक्यं

---

१. करमरकरः, र० दा०, मम्मट-काव्यप्रकाशः, पृ० १७

२. यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥
तत्रैव, पृ० २७ ।

3. Vide—Gajendragadkar, A. B., Kāvyaprakāśa of Mammaṭa, Notes, p. 179-181.

**रसात्मकं गेयं काव्यशब्दाभिसंज्ञितम्**[1] इति काव्यलक्षणं पर्यवसितं भवति ।

वस्तुतस्त्वस्माकं मते मम्मटाऽऽचार्यः स्वकीये काव्य-लक्षणे प्राचीनानां भामहादीनामर्वाचीनानाम् आनन्दवर्धनादीनामाचार्याणाञ्च विसंवादि मतमुपस्थापयन् मत-द्वयस्य परस्परं समन्वयमातन्वन् अनवद्यं काव्य-लक्षणं बध्नाति । भट्टोद्भटादिभिरलङ्कार-तन्त्र-प्रजापतिभिः काव्ये वाच्य-वाचक-धर्माणां काव्यकामिन्या बाह्य-शोभोपकरण-भूतानामाभूषण-कल्पानामनुप्रासोपमादीनामलङ्काराणां काव्ये प्राधान्यं प्रपञ्चितम् । तथा चोक्तमाचार्येण रुय्यकेन—

**तदेवम् अलङ्कारा एव काव्ये प्रधानम् इति प्राच्यानां मतम् ।**[२]

अत एव भामहादयः शब्दार्थ-साहित्याऽऽत्मकं काव्य-स्वरूपमभिदधति । तेषां मते काव्ये शब्दस्य चारुत्वमनुप्रास-यमकादिभिः शब्दाऽलङ्कारैरर्थस्य च चारुत्वमुपमोत्प्रेक्षादिभिरर्थालङ्कारैः सम्पद्यते । अतोऽनुप्रासोपमादिभिरुपस्कृतौ रमणीयौ शब्दाऽऽर्थौ काव्यम् । तेनैव काव्य-लक्षणे प्राचीनाऽऽचार्यैः शब्दाऽर्थौ काव्य-लक्षण-वाक्यस्य घटकत्वेनोपात्तौ । शब्दार्थोपस्कारकाणामनुप्रासोपमादीनाञ्च तेषां लक्षण-ग्रन्थेषु सविस्तरं प्रपञ्चः । लक्षण-ग्रन्थानामभिधानं सर्वथाऽन्वर्थकं काव्यालङ्कारसार-संग्रहादीतिरूपेण । इत्थं भामहोद्भटादि-पद्धतिमनुसरन् मम्मटः **शब्दार्थौ काव्यम्** इति वदंस्तयोः सालङ्कारत्वमपि स्वकीये काव्यलक्षण उपनिबध्नाति । अत एव सालङ्कारौ शब्दार्थौ मम्मटस्याऽभिमतौ । एवं मम्मटस्य काव्य-लक्षणे चिरन्तानामाचार्याणां प्रभावः सुस्पष्ट एव । शब्दाऽर्थयोः साहचर्यं काव्ये परम-रामणीयकमादधाति । अलङ्कृतौ च शब्दार्थौ काव्ये परमशोभाभ्राजिष्णू भवतः । शब्दोऽर्थस्याऽर्थः शब्दस्य च सहकारितां प्रत्यवेक्षते । अतो नैकोऽन्यं विनाऽवस्थातुमर्हति । अत एव भामहादिभिराचार्यैः सहितयोः शब्दार्थयोः काव्यत्वमभिदधद्भिः साहित्य-प्रस्थानं समुज्जृम्भितम् ।[3]

वयं त्वित्थं प्रतीमः । भामहादीनामालङ्कारिकाणां काव्य-लक्षणं न खलु सर्वथा निर्दुष्टम् । यतो न काव्ये सर्वदाऽनुप्रासोपमादयोऽलङ्कारा एव चारुत्वमादधति, अपितु काव्येषु स्फुटालङ्कार-रहितान्यपि सहृदयहृदयावर्जकानि

1. Ibid, p. 185

२. राघवन वी० (डा.) रुय्यक-कृतम् अलङ्कारसर्वस्वम्, पृ० १० ।

३. 'शब्दार्थौ सहितौ काव्यम्'—भामहः, काव्यालङ्कारः, १, १६ ।

पद्यानि दृश्यन्ते । तथाहि—

यः कौमार-हरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवाऽस्मि तथाऽपि तत्र सुरतव्यापारलीला-विधौ
रेवारोधसि वेतसी-तरुतले चेतः समुत्कण्ठते ॥

अपि च—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीला-कमल-पत्राणि गणयामास पार्वती ॥

इत्यनयोः स्थलयोर्न कश्चित् काव्य-चारुत्वाऽऽधायकः स्फुटोलङ्कारः प्रतीयते। अतोऽलङ्कारैरुपस्कृतमेव काव्यं यदि जीवति, तदेदं पद्य-द्वयं काव्य-पदवीतः प्रच्युतमेव स्यात् । परं नैतन्निर्मल-प्रतिभावतां काव्याऽऽनन्द-मकरन्द-षट्पदानां साहित्यिकानामनुभवाऽनुकूलम् । एतादृशेष्वपि स्फुटालङ्कार-विरहि-तेषूदाहरण-वाक्येष्वनुभूयते एव सहृदयैः कोऽप्यपूर्वः काव्यानन्दः । अनुभव-सिद्धश्चाऽर्थो न बालेनाऽप्यपलपितुं शक्यः । अतोऽलङ्कार-विरहेऽपि रसानु-गुणाऽर्थ-विशेषोपनिबन्धनात् काव्ये शोभातिशयो विभाव्यते । अतः **सालङ्कारौ** एव शब्दार्थौ यदि काव्यत्वेनाऽभ्युपेयेते, तर्हि रस-सिक्तात्मनां कालिदासादीनां महाकवीनां काव्यं काव्य-कोटौ न गण्येत । न च, तथेष्टापत्तिः, कालिदासादीनां सहृदय-हृदयावर्जक-काव्यानां काव्यत्वरूपेण सकलालङ्कारिकाऽनुभव-सिद्धत्वात् । अत एव प्राचीनाऽऽचार्य-मतसरणिमनुसरताऽपि मम्मटेन न सर्वथा **सालङ्कारौ** इति पदं काव्यलक्षणघटकत्वेनाऽनुप्रवेशितं स्वकीये काव्य-लक्षणे, अपितु 'अनलं-कृती पुनः क्वापि' इति रसवादि-मताऽनुमतं **सगुणौ** इति पदं चाऽनुप्रवेशयता निरलङ्कारयोर्माधुर्यौजः-प्रसाद-गुण-विशिष्टयोः शब्दार्थयोरपि काव्यत्वं भणितम् । न हि काव्यत्वमलङ्कारेष्वेवाऽवशिष्टम्, प्रत्युत निरलङ्कारेभ्यः शब्दार्थेभ्योऽपि विविधशृङ्गारकरुणरौद्रवीराऽऽदिरसाऽऽवेशवशात् परमाह्लादः सहृदयहृदयाऽनुभवसिद्धः समुन्मिषति, तत्राऽपि काव्यत्वस्याऽनपलपनीयत्वात् । तथा चोक्तं प्रतिहारेन्दुराजेन—

'लक्ष्ये चाऽलङ्काररहितम् अपि केवलगुण-सत्क्रियमाणशब्दार्थशरीरं काव्यं दृश्यते ।

यथा—अमरुकस्य कवेरनिबद्धशृंगाररसस्यन्दी श्लोकः—

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजप्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रसादससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥

**न खल्वत्राऽर्थाऽलङ्कारः कश्चित् परिदृश्यते । अथ माधुर्यौजोभ्यां परिबृंहितस्य प्रसादस्य विद्यमानत्वात् काव्यरूपता इति'**[1] ।

एवं नव्यानां काव्येऽलङ्कार-प्राधान्यमत-विध्वंसिनां ध्वनेश्च काव्यात्मत्व-समर्थकानामानन्दवर्धनादीनामाचार्याणां ध्वनि-पक्षोऽपि मम्मटेन काव्य-लक्षणेऽनुप्रवेशितः । गुणानां रस-धर्मत्वाद् गुणाऽभिव्यञ्जक-सामर्थ्येन शब्दार्थयोश्चापि सगुणत्व-धर्मस्योपपन्नत्वात्, निरलङ्कारस्याऽपि काव्यस्य रस-व्यञ्जकतया सगुणतया शक्योपपादत्वात्, मम्मटाचार्येणाऽऽनन्दवर्धनाचार्यस्य ध्वनि-सिद्धान्तोऽपि स्वकीये काव्य-लक्षणे समावेशितः । न हि सर्वथा सालङ्कारयोरेव शब्दार्थयोः काव्यत्वमिष्टं मम्मटस्याऽपित्वलङ्कार-विरहितयोः सगुणयोरपि शब्दार्थयोः काव्यत्वमव्याहतम् । अत एव '**यः कौमार-हर**' इत्यत्र पूर्वोदाहृते पद्ये स्फुटाऽलङ्कार-विरहेऽपि विप्रलम्भशृङ्गाररसस्याऽभिव्यक्तेरुत्तमोत्तमं काव्यं सिद्धम् । तथा चोक्तं प्रदीपकारेण—'**अनलङ्कृती पुनः क्वापि**' इति काव्य-लक्षण-घटकं वाक्यांशं विवृण्वता—

**'यतो रसादिरलङ्कारश्च द्वयं चमत्कारहेतुः । तथा च यत्र रसादीनाम् अवस्थानं न स्फुटालङ्कारापेक्षा'**[2] इत्यादि ।

यच्च विश्वनाथाऽऽचार्येण विभावना-विशेषोक्ति-दर्शनात् सालङ्कारत्वमस्य पद्यस्य प्रदर्शितम्[3], तत् तयोरस्फुटत्वात् सहृदय-हृदयाऽनास्वाद्यत्वाच्च व्यपाकृतं भवति । अपि च सम्भवन्नपि यद्यलङ्कारः सहृदय-हृदयं नाऽऽवर्जयति, तर्हि तस्याऽसत्कल्पत्वमेव । आस्वाद्योऽत्र विप्रलम्भ-शृङ्गारः । अत एव तस्यैव प्राधान्यम् नहि । विभावना-विशेषोक्तिकृतैव सहृदयचमत्कृतिरत्र । आस्वाद्यस्त्वसावलौकिको रसो यस्य चारुत्वसाम्राज्यं नालङ्कार-मुखप्रेक्षम् ।

---

१. बनहट्टी, नारायणदासः, उद्भटकृतः काव्यालङ्कारसारसंग्रहः, इन्दुराजकृता लघुवृत्तिटीका, पृ०८२।

२. म. महोपाध्यायः, पण्डितः दुर्गाप्रसादः, गोविन्दकृतः काव्यप्रदीपः पृ० २७।

३. शास्त्री, शालग्रामः, श्रीविश्वनाथकविराजकृतः साहित्यदर्पणः पृ० १७।

रसे सति ह्यलङ्कारा अहमहमिकया आपतन्ति तमुपस्कर्तुं कटककुण्डलादिलौकिकाऽलङ्कारवत् । अन्यथा निर्जीवो देहो यथा नाऽलङ्कारैः कामपि शोभां प्रकटयति[1], प्रत्युत वैरस्यमेवाऽऽविर्भावयति तथाऽलङ्कारा अप्यनुप्रासोपमादयोऽङ्गिनो रसस्याऽभावे निर्जीवदेहोपरि-धृत-कटक-कुण्डलाऽऽदिलौकिकाऽलङ्कारवत् परम-वैरस्यमेव विदग्धानां मनस्स्वातन्वन्ति, दूरे चर्चा चारुतायाः । अतोऽलङ्कारा एव काव्ये परमशोभाधायका नाऽऽकलनीयाः, तदभावेऽपि रस-कृतं गुण-कृतं वा काव्यचारुत्वमक्षुण्णम् । इत्थं मम्मटेन 'शब्दाऽर्थयोः' सालङ्कारत्वम् अप्युररीकुर्वता न खलु सर्वथाऽलङ्काराणामेव काव्ये प्राधान्यं सूचितम्, प्रत्युत यं रसं विनाऽलङ्कारा अलङ्कारतामेव नाऽऽप्नुवन्ति, असौ ध्वन्यमानो रसोऽपि गुणानां भङ्ग्या काव्य-शोभाधायकः प्रोक्तः ।

अपरत आनन्दवर्धनाऽऽचार्यस्य ध्वनि-सिद्धान्तेऽलङ्काराणां स्थानमवरम् । भामहोद्भटादीनां शब्दार्थ-साहित्य-प्रस्थानेऽलङ्काराणामेव प्राधान्यम् । परं काव्ये चारुत्वं न सर्वथाऽलङ्कार-कृतम् । निरलङ्कारस्याऽपि काव्यस्य ध्वनि-मुखेन चारुत्वाऽऽधायकत्वात्, नाऽपि चारुत्वं सर्वथा ध्वनिपृष्ठाऽवलम्बि, निर्ध्वनेरपि काव्यस्याऽनुप्रासोपमाद्यलङ्कार-कृत-चारुत्वेन ग्राह्यत्वात् । दृश्यन्ते हि सचेतसोऽनुप्रासोपमादि-कृतं काव्य-चारुत्वमास्वादयन्तः । यदि केवलं रस-कृतमेव चारुत्वं स्यात्, तर्हि नदी-पर्वताऽऽदीनां वर्णनं महाकवि-कृतं यत् समुपलभ्यते, तत्राऽकाव्यत्वमेव स्यात् । तथा चोक्तं पण्डितराज-जगन्नाथेन—

**'यत्तु रसवद् एव काव्यम् इति साहित्यदर्पणे निर्णीतम्, तत्र वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः । न चेष्टापत्तिः । महाकविसम्प्रदायस्याऽऽकुलीभावप्रसङ्गात् । तथा च जल-प्रवाह-वेगनिपतनोत्पतन-भ्रमणानि कविभिर्वर्णितानि, कपि-बालादि-विलसितानि च ।'**[2]

इत्थं मम्मटाऽऽचार्येणाऽपूर्वया धिषणया प्राचामालङ्कारिकाणाम् अलङ्कार-प्रस्थानम् अर्वाचामानन्दवर्धनादीनाम् आचार्याणां च ध्वनि-प्रस्थानं स्वकीये काव्य-लक्षणे समन्वितम् । एवं दोष-गुणाऽलङ्कार-ध्वनि-विवेचन-परं मम्मटस्य काव्य-लक्षणं विद्वन्-मनोग्राहितामवलम्बते । वस्तुतस्तु तस्य **तददोषौ शब्दार्थौ** इत्यादि-काव्य-लक्षणं प्राचीनार्वाचीनालङ्कार-शास्त्र-पयोनिधिर्मन्थनोद्भूत-महार्घ-

१. (क) शास्त्री, पण्डितः पट्टाभिरामः, आनन्दवर्धनाचार्यकृतः ध्वन्यालोकः, लोचनभाष्यम् पृ० १६७ ।

(ख) बनहट्टी, नारायणदासः, उद्भटकृतः काव्यालङ्कारसार-संग्रहः, इन्दुराजकृता लघुवृत्तिटीका, पृ० ८१-८२ ।

२. झा, पण्डितः बद्रीनाथः, जगन्नाथविरचितः रसगङ्गाधरः, पृ० २३-२३

महारत्न-कल्पमस्ति । अत्र प्राच्य-नव्याऽऽचार्याणां मत-विसंवाद-समन्वयः स्पष्टं लक्ष्यते । भामहादिभिः शब्दार्थयोः सहितयोः काव्यत्वं समाख्यातम् । दण्डिना '**इष्टार्थव्यवच्छिन्ना पदावलिः**'[1] इत्यभिदधता शब्दस्य प्राधान्यं काव्ये स्वीकृतम् । ध्वनिकारेण ललनालावण्य-प्रख्यस्य प्रतीयमानार्थस्यैव काव्ये सर्वातिशायित्व-मुद्घोषितम्, अलङ्काराणाञ्च वाच्य-वाचक-धर्माणां सर्वथा न्यग्भावः प्रदर्शितः[2] । परं मम्मटस्य काव्य-लक्षणं सकलाऽलाङ्कारिकोद्भावितं सर्वं तत्त्वं क्रोडीकुर्वत् परिपूर्णम् ।



१. दण्डी, काव्यादर्शः, १, १० ।

२. (क) ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्ति-शून्यञ्च काव्यं केवलं वाच्यवाचकवैचित्र्यमात्राऽऽश्रयेणोपनिबद्धमा-लेख्यप्रख्यं यदाभासते, तच्चित्रम् । न तन्मुख्यं काव्यं, काव्यानुकरो ह्यसौ ।

शास्त्री; पण्डितः पट्टाभिरामः, आनन्दवर्धनाचार्यकृतः ध्वन्यालोकः, पृ० ४१५ ।

(ख) व्यङ्ग्य-व्यञ्जकाभ्याम् एव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण ।

तत्रैव, पृ० १७-१८ ।

## द्वितीयोऽध्यायः

# अभिधावृत्तिविचारः

### शब्दस्योपयोगिता महत्त्वञ्च

शब्दार्थलक्षणं काव्यस्य स्वरूपम् । अथ कोऽसौ शब्दः कश्चार्थ इति विवेचनीयम् । शब्देनैव मानवानां व्यवहाराः प्रवर्त्तन्ते । यद्यप्यक्षिनिकोचैः पाणिविहारैरन्यैरिङ्गितैश्चापि स्वाभिलाषः प्रकटीकर्तुं शक्यते, तथापि शब्द एव प्राधान्येन मानवानां प्रवृत्तौ निमित्तम् । शब्दानुच्चार्याकर्ण्य च मानवा लौकिकेषु कार्येषु प्रवृत्ता भवन्ति । अत एव प्राक्तनेषु ग्रन्थेषु विपश्चिद्भिर्वारं वारं वाचो महिमा प्रतिपादितः[1]। बृहदारण्यकोपनिषदि याज्ञवल्क्यजनकगोष्ठीषु वाचो महिमानमवलम्ब्यैवैकदा विमर्शः समजायत । तत्र याज्ञवल्क्यमहर्षिणा वागेव मनुष्यस्य ज्योतिः प्रोक्तम्[2]। सूर्यचन्द्रतारकाग्नीनां प्रकाशे तिरोहिते सति, वागेव प्रकाशिका भवति। धर्माधर्मयोर्ज्ञानाज्ञानयोर्विवेको वाचैव कर्तुं शक्यते । अत एवोक्तं छान्दोग्योपनिषदि—

यद्वै वाङ्नाभविष्यत् न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतम्[3]

---

१. (क) न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥
भर्तृहरिः, वाक्यपदीयम्, १,२४ ।
(ख) इदमन्धस्तमं कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥
दण्डी, काव्यादर्शः १, ४ ।

२. वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते, विपल्येतीति । तस्माद्वै सम्राडपि यत्र स्वपाणिर्न विनिर्ज्ञायते, अथ यत्र वागुच्चरति, उपैव तत्र न्येतीति ।

३. (क) शिरोमणि, उत्तमूर, त० राघवाचार्यः, बृहदारण्यकोपनिषद्भाष्यम्, पृ० २०४, २०५ ।
(ख) Language is the work of man, it was invented by man as a means of communicating his thoughts, when mere looks and gestures proved insufficient.
Max Müller, science of language, vol I. p. 31.

अत एव भारतीयदर्शनशास्त्रेषु शब्दार्थयोः स्वरूपं तयोश्च सम्बन्धमाश्रित्य परमगहनो विचारः शास्त्रकृद्भिः कृतः। काव्येऽपि परमानन्दसहोदरस्य रसस्य चर्वणा शब्दार्थपूर्विकैव भवति। समुचितशब्दयोजनयैव वाल्मीकिकालिदासादयः कविपुङ्गवाः सहृदयहृदयधामसु ललनालावण्यकल्पमतिरमणीयमर्थमवतारयन्तस्तानानन्दाकूपारे परिप्लावयन्ति। अतः शब्दस्य साम्राज्यं सर्वत्राक्षुण्णम्।

**वैयाकरणानां मते शब्दोत्पत्तिप्रकारः**

कथं शब्दो जायते, किञ्च तत्स्वरूपमिति परमगहनं दर्शनम्। पाणिनिशिक्षा-वाक्यपदीय-तंत्रवार्तिक-न्यायमञ्जर्यादिषु व्याकरणमीमांसान्यायदर्शनग्रन्थेषु बहुशश्चर्चितः परमया प्रौढचा च प्रतिपादितोऽयं विषयः। आधुनिके युगे पौरस्त्याः पाश्चात्याश्च भाषाविज्ञानपण्डिता विषयममुं सूक्ष्मेक्षिकया विमृशन्तो दृश्यन्ते। वैयाकरणानां स्फोटदर्शनं कथं शब्द उत्पद्यते, किं स्वरूपोऽसौ, नित्योऽनित्यो वा कथञ्च शब्दादर्थप्रतीतिरिति परमजटिलं विषयं विवेचयितुं प्रवृत्तमास्ते।

**तत्र शब्दस्य चतस्रो दशाः**

स्फोटवादिनो वैयाकरणाः शब्दस्य चतस्रो दशाः समामनन्ति। ताश्च परा-पश्यन्ती-मध्यमा-वैखर्यः[1]।

शब्दोच्चारणात् प्राक् मूलाधारचक्रस्थः स्पन्दशून्यः सूक्ष्मातिसूक्ष्मः पवनसंस्कारो निर्विकल्पोऽसौ स्वरूपज्योतिरन्तर्भासिनी परावागनपायिनी। अयं संस्कारो नादब्रह्मरूपेण ज्ञायते,[2] यस्मिन् ज्ञाते सर्वं ज्ञातं भवति। मूलाधार

---

१. प्राणापानान्तरे देवी वाग्वै नित्यं सा तिष्ठति।
स्थानेषु विवृते वायौ कृतवर्ण-परिग्रहा॥
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धनी।
केवलं बुद्ध्युपादान-क्रमरूपानुपातिनी।
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते।
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः परा वागनपायिनी॥
नागेशभट्टः, वैयाकरणसिद्धान्तलघुमंजूषा, पृ० ४१-४२

२. सच्चिदानन्दविभवात् सकलात् परमेश्वरात्।
आसीच्छक्तिस्ततो नादस्तस्माद् बिन्दुसमुद्भवः॥

चक्रस्थः पवन-संस्काररूपः शब्दोऽखण्डोऽविभाज्यो विभुश्च। एतदेव योगिनां समाधौ निर्विकल्पकज्ञानविषय इत्युच्यते। मूलाधारचक्रे उद्बुद्धः पवनसंस्कारो निर्विकल्पो यदा नाभिं प्रत्येति, तदासौ पश्यन्तीदशामवतीर्णो मनोविषयो भवति, योगिनां समाधौ च सविकल्पकज्ञानविषयो भवति। उभयोर्दशयोः शब्दो वाग्ब्रह्मरूपो योगिभिरेव निर्विकल्पकसविकल्पकसमाध्योर्ज्ञायते, न त्वस्मदादिभिः साधारणैर्मानवैः। परमियानत्र विशेषः। मूलाधारचक्रस्थः पवनसंस्कारो निर्विकल्पोऽत एव स्वरूपज्योतिः अन्तर्भासिनीपरावागित्युच्यते। नाभिमवतीर्णः पवनसंस्कारः सविकल्पो मनोगोचरीभूतोऽत एव पश्यन्ती वागित्युच्यते। नाभेरूर्ध्वं हृदयपर्यन्तमागच्छता वायुनाऽभिव्यक्ता वाक् मध्यमेत्युच्यते। इयं वाक् श्रोत्राग्राह्या स्फोटरूपा तत्तदर्थबोधिका। मध्यमा वागपि सूक्ष्मा केवलं जपादौ बुद्धिनिर्ग्राह्या। हृदयादूर्ध्वमास्यपर्यन्तमागच्छन्नूर्ध्वमुत्क्रामन् वायुर्यदा मूर्धानमाहन्ति पश्चाच्च तालुदन्तौष्ठादिमुखस्थानेष्वभिव्यक्तो भवति, तदासौ वैखरीरूपः। वैखरी वाक् परैः श्रोत्रेणापि गृह्यते, परं न मध्यमा। मध्यमायां दशायां पवनो बुद्धिग्राह्य एव, नासौ श्रोत्रेण। परं वैखर्यां व्यक्तः शब्दः श्रोत्रविषयतामभ्युपयाति। एवं शब्दोत्पत्तिं विमर्शयद्भिर्वैयाकरणैः शब्दस्य चतस्रः दशाः समाम्नाताः। तन्मते परादिप्रथमदशां प्राप्तः शब्दो नित्यः परमन्त्यां वैखरीं दशामापन्नोऽनित्यः सखण्डः श्रोत्रादीन्द्रियग्राह्यश्च भवति।

## शब्दनित्यत्वानित्यत्वविचारः

### (क) तत्र वैयाकरणाः

वैयाकरणानां मते वस्तुतः शब्दो नित्यः परमुपाधिवशाज्जपाकुसुमोपहितादर्शवदनित्यो भाति। य आस्यगतविविधकण्ठतालुमूर्धन्यादिस्थानोपहतपवनविस्फोटेन व्यक्तिमापन्नः कर्णशष्कुलीग्राह्योऽसौ ध्वनिरूपः शब्दोऽनित्यः। यथा—गौरित्युच्चरिते गकारौकारविसर्जनीयानां ध्वनिरूपो गौरिति शब्दोऽनित्यः। परं गोशब्दोच्चारणात् पूर्वमव्यक्तः सूक्ष्मः शब्दो नित्यः। इत्थं वैयाकरणदर्शने शब्दस्य पारमार्थिके नित्यत्वे सत्यप्युपाधिवशादनित्यत्वं तस्य। वस्तुतस्तु यच्छब्दस्यानित्यत्वं तत्तस्य ध्वनिरूपोपाधिवशादेव। अव्यक्तः शब्दः परापश्यन्तीमध्यमादशामाटीकमानो नित्य एव। एवमुपाधिवशादेव वैयाकरणैः

---

नादो विन्दुश्च बीजञ्च स एव त्रिविधो मतः।
भिद्यमानात् पराद् विन्दोरुभयात्मा रवोऽभवत्।
स रवः श्रुतिसम्पन्नः शब्दब्रह्माभवत् परम्॥

—कविकर्णपूरस्यालङ्कारकौस्तुभः २, १०

शब्दस्या नित्यत्वमास्थीयते, अन्यथा तेषां दर्शने पवनसंस्कारभूतस्य शब्दस्य मूलाधारचक्रे निर्विकल्पकज्ञानत्वेनावस्थानान्नादब्रह्मरूपत्वान्नित्यत्वमेव ।

वस्तुतस्तु शब्दनित्यत्वानित्यत्वनिरूपकं वैयाकरणानां दर्शनमद्वैतवादिनां वेदान्तिनां दर्शनमुपजीव्य प्रवर्तते । वेदेषु प्रणवो ब्रह्मरूपः प्रोक्तः । शब्दरूपं ब्रह्म प्रणवापरपर्यायं तस्य चैक्यमर्थरूपेण ब्रह्मणा योगिजनज्ञेयेन । इत्थं शब्दब्रह्मवादिनां वैयाकरणानां स्फोटसिद्धान्तस्य मूलं प्रणवब्रह्मण्येवान्वेष्टव्यम् । यथा वेदान्तिभिर्ब्रह्मणोऽखण्डत्वमेकत्वमुपाधिवशाच्च तस्यानेकत्वं सखण्डत्वञ्च सिद्धान्त्यते, तथा स्फोटवादिनो वैयाकरणा अपि वेदान्तिनां दर्शनमिदमुपजीव्य नादब्रह्मसंज्ञस्य शब्दस्य नित्यत्वमुपाधिवशाच्च तस्यानित्यत्वं प्रतिपादयन्ति । यथा वेदान्तिनां निरुपाधि ब्रह्म शुद्धं सत्यं ज्ञानमनन्तमद्वैतं तथा वैयाकरणानामपि मूलाधारचक्रे उद्बुद्धः पवनसंस्काररूपः शब्दो निर्विकल्पोऽखण्डो विभुश्च । यथोपाधिवशात्तदेवाव्यक्तं ब्रह्म जीवात्मरूपेण परिच्छिन्नं सत् कृशोऽहं स्थूलोऽहं विपन्नोऽहं समृद्धोऽहमिति प्रतीतिमनुभवति मायोपहितत्वात्, तथैव नित्योऽक्षरो ब्रह्मरूपः शब्दो वैखरीदशामापन्नो ध्वनिरूपोपाधिवशादनित्यो क्षणभङ्गुरश्च भवति । असावेव परां दशां गतो नादब्रह्मरूपो नित्यः शब्दो वैखर्यां व्यक्तो भूत्वा तद्वशाच्च स्थूलरूपमापद्यार्थरूपेण विवर्तते । यथोक्तं भर्तृहरिणा—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥**[1]

गकारौकारादीनां ध्वनीनामुच्चरितप्रध्वस्तत्वात् यार्थप्रतीतिः सा स्फोटमहिम्नैव । उच्चरितप्रध्वस्ता ध्वनयः स्वसंस्कारमुत्तरोत्तरे वर्णे सङ्क्रामयन्तोऽर्थप्रतीतिं कारयन्ति । अतो गोशब्दात् प्रथमं गोपदस्फोटज्ञानं पश्चाच्च गोत्वरूपिणोऽर्थस्यावगतिः । इत्थं वैयाकरणानां नित्यः शब्दोऽर्थभावेन विवर्तमानः सन् दृश्यते । परं पारमार्थिकं शब्दस्य नित्यत्वं निरूपाधिब्रह्मवदिति गहनातिगहनं वाक्यपदीयादिपरमप्रौढेषु ग्रन्थेषु विवेचितं स्फोटवादिनां वैयाकरणानां शब्दस्वरूपविवेचनपरं दर्शनम् ।

**(ख) तत्र नैयायिकाः**

नैयायिकानां मते शब्दो नश्वरो ध्वनिरूपः[2] । यदा वक्त्रा घटपटादयः

---

१. भर्तृहरिः, वाक्यपदीयम्, १, १ ।

२. (क) आदिमत्वादैन्द्रियत्वात् कृतकवदुपचाराच्च ।
भाष्यम्—आदिर्योनिः कारणमादीयतेऽस्मादिति । कारणवदनित्यं

शब्दा उदीर्यन्ते, तदा ते आकाशमार्गेण विचरन्तो वीचीतरङ्गन्यायेन कदम्ब-गोलकन्यायेन वा श्रोतुः कर्णशष्कुल्युपहतनभःप्रदेशे व्यक्ता भवन्ति[1]। अतः शब्द आकाशगुणस्तैरभिधीयते। अयमाशयः। यथा शान्ते सरसि प्रोत्क्षिप्तेनाश्मखण्डेन वीचेर्जन्म भवति, सा च स्वयं विलीयान्यां वीचिं जनयति। एवं परम्परया वीचेर्वीचयो जायन्ते। तथैव वक्तुर्मुखादुदीर्णः शब्दो ध्वनिरूपः आकाश-तरङ्गेषु प्रवहन् तरङ्गात्तरङ्गान्तरे संक्रामन् श्रोतुः कर्णशष्कुलीं प्रविशति व्यक्तश्च भवति। आहोस्विच्छब्दोत्पत्तिः कदम्बगोलकन्यायवद् भवति। मुखादुद्गतः शब्दः कदम्बपरागवच्चतसृषु दिक्षु प्रसरतीति कदम्बपरागन्याय-वच्छब्दोत्पत्तिः स्वीकरणीया। आधुनिके युगेऽपि भाषाविज्ञानविदो विपश्चितस्तार्किकानां मतं शब्दोत्पत्तिविषये स्वीकुर्वन्ति।

**(ग) तत्र मीमांसकाः**

मीमांसकाः शब्दनित्यत्ववादिनः। यतस्ते वेदमपौरुषेयं नित्यञ्च समामनन्ति।

तेषां मते चोदनापरं वेदवाक्यं परमं प्रमाणम्। अत एव तैर्नित्यत्वं शब्दस्यास्थीयते[2]। एवं शब्दस्वरूपविषये विसंवादीनि मतानि दर्शनशास्त्रेषूपनि-

---

दृष्टम्। संयोगविभागजश्च शब्दः कारणवदनित्य इति। उत्पत्तिधर्मकत्वादनित्यः शब्दः इति भूत्वा न भवति, विनाशधर्मक इति।

—न्याय-दर्शनम्, २, २, १३।

(ख) प्रयत्नप्रेरितकौष्ठ्यसंयोगविभागानन्तरमुपलभ्यमानः शब्दस्तत्कार्य एवेति गम्यते, उच्चारणादूर्ध्वमनुपलब्धेः······ते नूनमवगच्छन्ति कार्यः शब्दः।

—जयन्तभट्टः, न्यायमञ्जरी, पृ० २८२।

१. सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥
वीचीतरंगन्यायेन तदुत्पत्तिस्तु कीर्तिता।
कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते॥

—विश्वनाथः, न्यायसिद्धान्तमुक्तावलिः, पृ० १६३।

२. अपौरुषेयः शब्दस्यार्थेन सम्बन्धः। तस्याग्निहोत्रादिलक्षणस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य। तथा च चोदनालक्षणः सम्यक् सम्प्रत्यय इति पौरुषेये हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्क्येत। परप्रत्ययो हि तदा स्यात्।—शाबरभाष्यम्, पृ० ४१-४२।

बद्धानि सन्ति । वेदापौरुषेयत्ववादिनां मीमांसकानां मते शब्दनित्यत्वेऽभ्युपगते एव वेदस्यापौरुषेयत्वं तस्य च शब्दप्रमाणत्वेनाङ्गीकरणं सम्भवमत एव शब्द-नित्यत्वाग्रहस्तेषां मते । तार्किकास्तर्कनिकषोपले सर्वं परीक्षन्ते । घटपटादयः पदार्था अनित्या उत्पन्नत्वात्, यत्र यत्रोत्पन्नत्वं तत्र तत्रानित्यत्वं यत्रानित्य-त्वाभावस्तत्रोत्पन्नत्वाभावः । तथैव शब्दोऽनित्यः, उत्पन्नत्वात् । वैयाकरणैस्तु ध्वन्यात्मकः स्थूलः शब्द इन्द्रियग्राह्यो नश्वरः, परं स्फोटाख्यः सूक्ष्मः शब्दो नित्यः सम्प्रतिपन्न इत्यचिरादेव स्पष्टं प्रतिपादितम् ।

**शब्दार्थयोः सम्बन्धविमर्शः**

(क) तत्र **मीमांसका** वैयाकरणाश्च (**सम्बन्धनित्यत्ववादिनः**)

यथा शब्दस्वरूपविषये विरोधीनि मतान्याचार्याणाम्, तथैव शब्दार्थयोः सम्बन्धविषयेऽपि । मीमांसका वैयाकरणाश्च शब्दार्थयोर्नित्यं सम्बन्धमाम-नन्ति । तेषामयमाशयः । सनातनकालाच्छब्दा अर्थप्रत्यायनाय प्रयुज्यन्ते । अतस्तयोः सम्बन्धोऽपि सनातनकालादेव प्रवृत्तो वर्तते । नेदं निश्चेतुं शक्यं यत् कदा केन कथं शब्दानामर्थेषु सङ्केतो निश्चितः । परम्परयाऽनादिकालाच्छब्दा अर्थानवगमयितुं व्यवह्रियन्ते । अतः शब्दार्थयोः सम्बन्धेनाप्यनादिना भाव्यम् । यथा चक्षुषा रूपं स्वभावेनैव गृह्यते, तथैव शब्दा अपि स्वभावादेवार्थान् बोधयन्ति ।

महाभाष्यकारेण भगवता पतञ्जलिनापि शब्दार्थयोः सम्बन्धः सिद्धः प्रोक्तः ।[1] नहि यथा घटेन कार्यं करिष्यन् पुरुषः कुम्भकारमुपगम्य कथयति कुरु घटमिति, तथा शब्दान् प्रयुयुक्षुर्वैयाकरणमुपगम्य वदति **कुरु शब्दान् प्रयोक्ष्य** इति । अत एव शब्दार्थयोर्नित्यः सम्बन्धः । वस्तुतस्तु शब्दार्थयोः कः सम्बन्धाधायक इति निश्चेतुमशक्यत्वादेव शब्दार्थयोर्नित्यः सम्बन्धो मीमांसकै-र्वैयाकरणैश्चाभ्युपगतः ।

(ख) **तत्र नव्यनैयायिकाः** (अनित्यत्ववादिनः)

नव्यनैयायिकाः शब्दनित्यत्ववादिनां मतमिदं न सहन्ते । तैः शब्दार्थ-सम्बन्धनित्यत्ववादः प्रबलाभिर्युक्तिभिः प्रत्याख्यातः । न्यायदर्शने गौतमाचार्येण शब्दस्य कार्यत्वादनित्यत्वं सिद्धान्तितम् । तथाहि—**शब्दोऽनित्यः कार्यत्वात्**

---

१ (क) सिद्धे शब्दार्थसम्बन्धे । सिद्धे शब्देऽर्थे सम्बन्धे चेति । नित्यो ह्यर्थव-तामर्थैरभिसम्बन्धः । वैयाकरणमहाभाष्यम्, पृ० ५५ ।

(ख) नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः । भर्तृहरिः, वाक्य-पदीयम् १,२३ ।

घटवत्। न चानित्यस्य शब्दस्यार्थेन सह सम्बन्धो नित्य इति वाच्यम्, तथा सत्यन्नाग्निखड्गादीनां शब्दानामुच्चारणसमये एव मुखस्य पूरणदाहपाटनादिप्रसङ्गात्[1]। परं नैतल्लोकानुभवानुकूलम्। किञ्च शब्दो मुख उत्पद्यते, शब्दगम्योऽर्थश्च शब्दप्रभावात् मुखात् पृथगवलोक्यते। अतो भिन्नाश्रयाणां तेषां कथं नित्यत्वाभिसम्बन्धो यौक्तिकः। नित्ये शब्दार्थसम्बन्धेऽभ्युपगते घटपटादिपदार्थबोधकानां पर्यायवाचिनां शब्दानामानर्थक्यं प्रसज्येत। यदि घटशब्दस्य कम्बुग्रीवादिरूपिणस्तदर्थस्य च परस्परं नित्यः सम्बन्धः, तदा घटपदोच्चारणेनैव घटपदार्थावगतिरुपपद्येत, न त्वन्येषां तदर्थबोधकानां कलशादीनां पर्यायवाचिनां शब्दानामुच्चारणेन। शब्दार्थसम्बन्धे नित्ये सति, अन्यासु भाषासु प्रयुज्यमानैर्घटपदार्थबोधकैः शब्दैर्घटपदार्थप्रत्यायनमसम्भवि। परं नैतदनुभवसम्मतं दर्शनम्। नैयायिकानां धिया वाचकवाच्ययोर्नित्यः सम्बन्धोऽनुपपन्नः। अतस्तन्मते सामयिकः शब्दार्थसम्बन्धः।[2]।

(ग) तत्र प्राचीननैयायिकाः

प्राचीनानां नैयायिकानां मते शब्दार्थयोः सम्बन्ध ईश्वरेच्छाहेतुः।[3] अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकः सङ्केत आदावीश्वरेणैव निर्धारितः। परं पारिभाषिकशब्दानां सङ्केतनिर्णयो मनुष्येच्छया भवति।

अनेन प्रकारेण वैयाकरणानां मीमांसकानां प्राचीननवीननैयायिकानां मतेषु पर्यालोचितेषु सत्सु वयं वैयाकरणसिद्धान्तमेव दृढीचिकीर्षामः। वैयाकरणानां शब्दार्थसम्बन्धनित्यत्ववादस्तार्किकैर्यथार्थरूपेण नाबोधि। शाब्दिकानां

---

१. (क) पूरणदाहपाटनानुपलब्धेश्च सम्बन्धाभावः।

—न्यायदर्शनम्, २, १, ५३।

(ख) द्रष्टव्यम्, जयन्तभट्टः न्यायमञ्जरी, पृ० २२०, २११।

२. जातिविशेषे चानियमात्।

भाष्यम्—सामयिकः शब्दार्थसम्प्रत्ययो न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्, यथा तेजसः प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति।

—न्यायदर्शनम्, २, १, ५६,

३. शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः।

विश्वनाथः, न्यायसिद्धान्तमुक्तावलिः, पृ० ६६।

वैयाकरणानामयमाशयः। यथाहि—शब्देऽर्थबोधको धर्मः स्वाभाविक एव। यावच्छब्दानां तत्तदर्थेषु सङ्केतो न निर्धारितस्तावत्तेषां निरर्थकत्वं व्यवहारे चानुपयोगित्वम्। परं यदा घटपटादयः शब्दास्तत्तदर्थेषु नियतसङ्केता भवन्ति, तदैव तेषां सार्थकत्वं व्यवहारे उपयोगित्वञ्च। नियतसङ्केतः शब्दः स्वभावादेव तांस्तान् सङ्केतितानर्थान् बोधयति। घटशब्दः कम्बुग्रीवादिरूपे घटार्थे नियत-सङ्केतः। अतः स्वभावादेवायं शब्दो यत्र कुत्रचित् प्रयुक्तः सन् घटरूपमर्थं बोधयत्येव। अमुनैवाशयेन शब्दार्थयोः सनातनः सम्बन्धो वैयाकरणैः प्रोक्तः। नियतसङ्केतवतः शब्दस्य नियतस्यार्थस्य प्रत्यायने स्वाभाविक्येव योग्यता। नहि साऽन्यथाकृता भवति। यथाग्नावुष्णत्वं सहजम्, तथैवार्थप्रत्यायनयोग्य-ताऽपि शब्दानां स्वाभाविक्येव। यथोक्तं कौण्डभट्टेन वैयाकरणभूषणसारे—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥**[1]

**(घ) तत्र वैशेषिकाः**

वैशेषिकैः शब्दार्थयोः सामयिकः सम्बन्धः समुपोद्बलितः। तथाहि—शब्दार्थयोः किं संयोगसम्बन्धेनावस्थानम्, उत समवायसम्बन्धेन। नाद्यः। शब्दो घटपटादिरूपो मुखोच्चारितो ध्वन्यात्मा आकाशस्य गुणस्तद्बोध्यो घटत्वपटत्वरूपोऽर्थो द्रव्यम्। नहि द्रव्यगुणयोः कदापि संयोग-सम्बन्धेनावस्थानं सम्भवम्। प्रत्युत तयोः समवायसम्बन्धेन स्थितिः। यथा **नीलो घटः** इत्यत्र नीलत्वं गुणस्तदाश्रयीभूतो घटो द्रव्यम्, द्रव्याश्रयिणो गुणा इति नियमात्। एवं शब्दे आकाशगुणे तत्प्रत्यायिते अर्थे च द्रव्ये सति न तयोः संयोगसम्बन्धः शक्योपपादः। किञ्च यथा संयोगसम्बन्धे पदार्थानां संयोगजक्रिया प्रतीतिपथ-मवतरति घटपटयोः संयोगे संयोगजक्रियावत्, न तथा शब्दतदर्थयोः संयोगे काचन क्रिया दृग्गोचरतामुपयाति। अत आकाशगुणस्य शब्दस्य द्रव्यरूपेणार्थेन सह न संयोगसम्बन्धः।[2] नापि च समवाय-सम्बन्धः। शब्दार्थयोस्तन्तुपटवत्ता-

---

१. (क) त्रिवेदी, क० प्रा०, कौण्डभट्टकृतो वैयाकरणभूषणसारः, पृ० १८८।
(ख) भर्तृहरिः, वाक्यपदीयम्, ३, ३, २९।

२. युतसिद्ध्यभावात् कार्यकारणयोः योगविभागौ न विद्येते। गुणत्वात्। गुणोऽपि विभाव्यते। निष्क्रियत्वात्। असति नास्तीति च प्रयोगात्। शब्दार्थावसम्बद्धौ। संयोगिनो दण्डात् समवायिनो विशेषाच्च। —कणादः, वैशेषिकदर्शनम्, ७, २, १३-१९।

दात्म्येनावस्थानाभावात् । तादात्म्ये चाभ्युपगते घटशब्दोच्चरिते घटपदार्थस्य मुखे उपस्थितिरपरिहार्या स्यात् । एवं वैशेषिकमते शब्दार्थयोः सम्बन्धः सामयिको न नित्यः ।

वस्तुतस्तु सामयिक एव शब्दार्थयोः सम्बन्धो यौक्तिकः । सन्त्यनेके घकारौकारादयो ध्वनयः । परं यावत्तेषां तत्तदर्थेषु सम्बन्धो न निर्धारितस्तावत्तेऽर्थप्रतीतिं नैव कारयन्ति । परं समयबलेनैव ते तांस्तानर्थान् गोचरीकर्तुं प्रभवन्ति । **अस्माच्छब्दादयमर्थो बोद्धव्य** इति समयनिर्धारणमीश्वरकृतं मानवकृतमित्यन्यदेतत् । मीमांसा-व्याकरणन्यायादिशास्त्रेषु विषयोऽयं सविस्तरं प्रपञ्चितः । अत्र तु दिङ्मात्रमेव निर्दिष्टमिति तत्सर्वं तत्रैवानुसन्धेयम् ।

**सङ्केतितोऽर्थः**

सार्थकानां घटपटादीनां शब्दानां सङ्केतो व्यक्तौ जातौ वेति महती विप्रतिपत्तिर्दार्शनिकानाम् । '**द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः**[1] इत्याकृतिलक्षणम्, **असाधारणविशेषा व्यक्तिः**[2] इति व्यक्तिलक्षणं मीमांसकैः प्रोक्तम् । तेषां मतेनाकृतिर्जातावेव पर्यवस्यति । अतस्तयोर्जात्याकृत्योरैक्यं तेषां मते । तार्किकास्तु **व्यक्तिर्गुणविशेषाश्रयो मूर्तिः**[3] **आकृतिर्जातिलिङ्गाख्या**[4] **समानप्रसवात्मिका जातिः**[5] इति व्यक्त्याकृतिजातीनां लक्षणमाचक्षते ।

**(क) व्यक्तौ सङ्केतवादिनः**

तत्र व्यक्तौ सङ्केतवादिनां मते व्यक्तिरेव शब्दानां प्रवृत्तिनिमित्तम् । तथाहि जातिरमूर्ता तस्यादृश्यत्वात् । **गामानय गां बधानेत्यादिषु** वाक्येष्वानयनबन्धनादिकं कार्यकलापं व्यक्तिसंकेतपक्षे एवोपपद्यते, नतु जातिसंकेतपक्षे । अर्थक्रियाकारिता व्यक्तिमवलम्ब्यैव, नतु सामान्यं जातिरूपमर्थम् । नहि दोहनादीष्टसाधनं प्रवृत्तियोग्यत्वम्, शृंगाघाताद्यनिष्टसाधनं निवृत्तियोग्यत्वं जातावुपपन्नम् तत्तु गोव्यक्तावेवोपपद्यते । संकेतग्रहो व्यवहारमात्राधीनः तदौचित्यञ्च प्रवृत्तिनिवृत्तियोग्यायां व्यक्तावेव । अतः शब्दस्य संकेतो व्यक्ता-

---

१. पूर्वमीमांसादर्शनम्, १, ३, ६, ३० ।

२. तत्रैव, १, ३, ६, ३० ।

३. न्यायदर्शनम्, २, २, ६६ ।

४. तत्रैव, २, २, ६७ ।

५. तत्रैव, २, २, ६८ ।

वेवाङ्गीकर्त्तव्यः[1] ।

(ख) **व्यक्तौ संकेतविरोधिनः**

अयं तावद्व्यक्तिसङ्केतवादी एवं प्रष्टव्यो यत् किं गोपदस्य सङ्केतः सर्वासु भूतासु वर्तमानासु भविष्यन्तीषु गोव्यक्तिषु उत एकस्यां गोव्यक्तौ, अथवा कासुचिदेव गोव्यक्तिषु ? तत्र प्रथमे पक्षे आनन्त्यदोषप्रसङ्गः, अन्त्ये पक्षद्वये च व्यभिचारदोषप्रसङ्गः ।

(क) तथाहि एकस्माद् गोपदादनन्तानां गोव्यक्तीनां प्रतीतिरसम्भवा । असंख्या हि गोव्यक्तयः पुरुषायुषापि परिगणयितुमशक्याः । नहि भूतानां भविष्यन्तीनां वर्तमानानां गोव्यक्तीनां ज्ञानमेकपदे गोपदात् सम्भवम् । अतो व्यक्तौ सङ्केतपक्षे व्यक्तीनामानन्त्याच्छाब्दबोधोऽसम्भवः ।

(ख) ननु गोशब्दस्यैकस्यामेव गोव्यक्तौ संकेते स्वीकृते सति नानन्त्यदोषप्रसङ्ग इति चेन्न, संकेतितस्यैव शाब्दबोध इति नियमभङ्गापत्तेः । गोपदस्यैकस्यां गोव्यक्तावेव संकेतेऽभ्युपगते, यस्यां व्यक्तौ गोपदस्य संकेतस्तस्या एव शाब्दबोधो नतु तद्भिन्नाया गोव्यक्तेः । गौरितिशब्दस्य यदि शुक्ले गवि संकेतो नियतस्तर्हि गोपदात्तस्या एव शाब्दबोधो नतु तद्भिन्नायाः कृष्णाया गोर्बोधः । अतो गोशब्दः प्रयुक्तस्सर्वदा शुक्लां गामेवावबोधयेत्, तस्यामेव गोशब्दस्य सङ्केतात्, नतु तद्भिन्नां कृष्णां कपिलां, रक्तां वा गाम् । गोशब्दस्य तत्र सङ्केतग्रहाभावात् । एवं गोशब्दस्यैकस्यामेव गोव्यक्तौ सङ्केते स्वीकृते तस्माच्छब्दात्सङ्केतितेतरगवामप्रतीतिः । तेन गोशब्दात् सङ्केतितशुक्लगोभिन्नकृष्णकपिलादीनां गवां सङ्केतग्रहाभावाच्छाब्दबोधाभावापत्तिः । परं गोशब्दात् सर्वासां गवां प्रतीतिः सर्वजनानुभवसिद्धा । अतः सङ्केतितेतरार्थप्रतीतिसम्भवात् सङ्केतितस्यैव शाब्दबोध इति नियमभङ्गापत्तिरेकस्यामेव गोव्यक्तौ सङ्केतपक्षे । किञ्च संकेतनिरपेक्ष एव गोशब्दोऽसङ्केतितं कृष्णकपिलादिगोरूपिणमर्थं यथा बोधयति, तथैवाश्वसिंहव्याघ्रादीनामर्थानामपि प्रतीतिर्गोशब्दादेव भवेत् । महती चेयमव्यवस्था स्यात् । अनिष्टस्याप्यर्थस्य गोपदाच्छाब्दबोधो दुष्परिहरो भवेत् । एवं व्यभिचारभयान्नैकस्यां गोव्यक्तौ सङ्केतो युज्यते ।

(ग) तृतीये पक्षे—कासुचिदेव गोव्यक्तिषु सङ्केते स्वीकृते सति कृत-

---

१. प्रयोगचोदनासामञ्जस्याद् व्यक्तिः शब्दार्थः, आलम्भनविशसनप्रोक्षणादिचोदना जातावसंगता भवन्ति । नहि जातिरालभ्यते विशस्यते प्रोक्ष्यते वा, अपि च षड् देया द्वादश देया चतुर्विंशतिर्देया इति न जातिः षडादिसंख्याभिर्युज्यते अपितु व्यक्तिः । तस्मात् सैव शब्दार्थः । जयन्तभट्टः, न्यायमञ्जरी, पृ० २६१ ।

सङ्केतानामेव व्यक्तीनां बोधो नेतरेषामकृतसङ्केतानां व्यक्तीनामित्यन्ते पक्षेऽपि तदवस्थ एव व्यभिचारदोषः ।

किञ्च व्यक्तिसङ्केतपक्षे **गौः शुक्लश्चलो डित्थः** इति विभागकरणमनुपपन्नं स्यात् । यतः शुक्लचलडित्थानां पदानां सङ्केतविषयो व्यक्तिरूपोऽर्थ एव, अतः शुक्लादीनां पदानां पर्यायत्वात् सहप्रयोगो न स्यात् । अयमाशयः—**गौः शुक्लश्चलो डित्थः** इति वाक्ये गोशब्दस्य गोत्वरूपा जातिः, शुक्लशब्दस्य शुक्लत्वश्चलशब्दस्य चलनक्रिया डित्थशब्दस्य डित्थ इति नामरूपोऽर्थः प्रतीतो भवति । रूपगुणतेन च गोत्वजातिमान्, शुक्लत्वगुणवान्, चलनक्रियावान्, डित्थनामायं गौरित्यर्थः पर्यवसितो भवति । अयं चतुर्विधो विभागस्सर्वदाऽनुपपन्नो व्यक्तेरेकत्वाच्चतुर्विधविभागस्य च तत्र कर्तुमशक्यत्वात् । शुक्लचलादिभिरपि पदैः सैव व्यक्तिर्बोध्या यस्यां गोपदस्य सङ्केतः । अतो गोपदात् गोभिन्नाऽर्थस्याग्रहणाच्छुक्लादिपदानां घटकलशपदवत् पर्यायमात्रत्वमेव । नहि घटपदेन कम्बुग्रीवाद्यर्थे गृहीते सति, पुनस्तत्रैव कलशपदेन कश्चिल्लाभः । प्रत्युत कलशपदस्य घटपर्यायतया कम्बुग्रीवाद्यर्थे तयोः सहप्रयोगोऽवद्य एव । योऽर्थो घटपदप्रयोगेण गृह्यते, असावेव कलशपदप्रयोगेणातो घटकलशयोरेकतरस्यैवोपादानं क्रियते कम्बुग्रीवाद्यर्थं बोधयितुम् । एवं व्यक्तावेव सङ्केते स्वीकृते सति, व्यक्तिभिन्नार्थे शब्दस्य सङ्केताभावात्, शुक्लचलादीनां घटकलशवत् पर्यायतया सहप्रयोगो न स्यात् । परं दृश्यन्ते शुक्लचलादीनि पदानि वाक्यार्थविदां विपश्चितां व्यवहारसमारूढानि । परं व्यक्तिसङ्केतपक्षे चतुर्विधो विभागः शब्दानां सर्वथानुपपन्नः ।[1]

एवं वैयाकरणमीमांसकतार्किकैर्व्यक्तौ सङ्केतपक्षः सर्वथा निराकृतः ।

**(ग) तत्र मीमांसकाः**

मीमांसका जातौ शब्दानां सङ्केतमभ्युपगच्छन्ति । यद्यपि गां ददाति,

---

१. तथा यदि व्यक्तावेव सङ्केतः स्यात्तदा गौः शुक्लश्चलतीत्यादीनां विषयविभागो न प्राप्नोति । तावद्विशेषणविशिष्टाया एव गोव्यक्तेः सङ्केतपात्रीकृतत्वेनैकेनैव शब्देनाभिधीयमानत्वादन्यथा शृङ्गसास्नादिवैशिष्ट्येऽपि पृथक् पृथक् शब्दाभिधेयत्वं स्यात् । यदि च विषयविभागं विनाऽप्येकस्मिन्नेव विषये युगपद् भूयसां शब्दानां प्रवृत्तिः स्यात्तदानीमिन्द्रः शक्रः पुरन्दर इत्यादयोऽपि शब्दाः समकालमेकस्मिन्नेव विषये प्रवर्तेरन् । तस्मान्न व्यक्तौ सङ्केतः ।

—नरेन्द्रप्रभसूरिः, अलङ्कारमहोदधिः, पृ० १४ ।

गां प्रतिगृह्णाति, दश गावः, गौर्वर्धते, कृशा गौः, कपिला गौरिति सार्वजनीनो व्यवहारो व्यक्तिरूपिणमर्थमवलम्ब्यैव प्रवर्तते, तथाप्यानन्त्यव्यभिचारदोषपरिजिहीर्षया जातौ सङ्केतो न्याय्यः। वेदवादिनां मीमांसकानां मते जातिसङ्केतपक्षे एव **श्येनचितं चिन्वीत** इत्यादीनि विधिवाक्यानि सङ्गच्छन्ते। इष्टिकाभिः श्येनव्यक्तेश्चयनासम्भवादाकृति (जाति) परकमेव वेदवचनमुपादेयम्। यथोक्तं शाबरभाष्ये—

**आकृतिः शब्दार्थः। कुतः क्रियार्थत्वात्। श्येनचितं चिन्वीत इति वचनमाकृतौ सम्भवति, यद्याकृत्यर्थः श्येनशब्दः। व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं शक्यते इत्यशक्यार्थवचनादनर्थकः। तस्मादाकृतिवचनः**[1]।

**(घ) तत्र नैयायिकाः**

नैयायिकास्तु गोत्वावच्छिन्नगोव्यक्तौ गोशब्दस्य सङ्केतग्रहं मन्वते। न्यायदर्शने **व्यक्त्याकृतिजातयस्तु पदार्थः**[2] इति सूत्रे **पदार्थः** इत्येकवचनान्तस्य पदस्यायमेवाशयो यत् त्रिष्वेकैव शक्तिः स्वीकरणीया अन्यथा **पदार्थाः** इति बहुवचनान्तेन प्रयोगेण भाव्यम्। एवं मीमांसकैस्तार्किकैश्च यद्यपि जातावेव सङ्केतोऽभ्युपेयते, तथापि तेषां मते अस्ति विशेषः।

**जातौ संकेतवादिनो मीमांसकाः**

मीमांसकानां मते जातिर्विशेषणं व्यक्तिश्च **विशिष्टा**। विशेषणं विशिष्टमाक्षिपतीति सर्वजनानुमतो न्यायः। विशेषणस्य विशेष्यं विनावस्थातुमशक्यत्वात्। तद्यथा शुक्लं विशेषणं स्वात्मन्यसम्भवद् गामश्वमजां वा काञ्चिद् व्यक्तिं स्वोपपत्तयेऽवश्यमाक्षिपति। शुक्लगुणस्य व्यक्तिमन्तरेणादर्शनात्। तद्वच्छब्दस्यार्थो जातिर्व्यक्ति विनाऽनुपपन्ना व्यक्तिभानमपि स्वसिद्धयर्थं कल्पयति। यथा **पीनो देवदत्तो दिवा न भुङ्क्ते** इत्यत्र दिवा भोजनभाववतो देवदत्तस्य पीनत्वं रात्रिभोजनमाक्षिपति। मण्डनमिश्रमते व्यक्तिप्रतीतिर्नाक्षेपेणार्थापत्त्या वापितु लक्षणया। एवं मीमांसकमते शब्दस्यार्थो जातिस्तस्याञ्चावगतायां तत्सम्बन्धिन्या व्यक्तेरवगम आक्षेपलभ्यः, अन्यतरप्रतीत्या अन्यतरप्रतीतिसिद्धेः[3]।

---

१. पूर्वमीमांसादर्शनम्, शाबर-भाष्यम्, १, ३, ३३।

२. न्यायदर्शनम्, २, २, ६५।

३. (क) व्यक्तिप्रतीतिरस्माकं जातिरेव तु शब्दतः।
प्रथमावगता पश्चाद् व्यक्ति यां काञ्चिदाक्षिपेत्॥
पार्थसारथिमिश्रः, न्यायरत्नमाला, पृ० १२१।

(२) जातिविशिष्टव्यक्तौ सङ्केतवादिनो प्राचयनैयायिकाः

नैयायिका जातिवादिनां मीमांसकानां मतमित्थं दूषयन्ति। न जातिः पदस्यार्थो भवितुमर्हति। गौर्गच्छतीत्यादौ गोशब्दस्यार्थे जातौ सति, विभक्त्यर्थः, कारकं, लिङ्गं संख्या चेत्यनुपपन्ना भवन्ति। जातेरद्रव्यत्वात् विभक्त्यादीनां तत्रान्वयासम्भवात्। अतो न जातिः पदस्यार्थः। नापि गोशब्दो जातिं विशेषणत्वेन व्यक्तिञ्च विशेष्यत्वेन वक्तुमर्हति, अतिभारप्रसङ्गात्। अयमाशयः। गोशब्दः प्रथमं विशेषणत्वेन जातिमभिदधाति, अनन्तरञ्च विशेष्यत्वेन व्यक्तिमित्युभयत्र शब्दस्याभिधात्री शक्तिरङ्गीकर्तव्या स्यात् न चाक्षेपेण व्यक्तिप्रतीतिरुपपन्ना, आक्षेपलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशाभावात्। न चापि प्रथमं जातिप्रतीतिरनन्तरञ्च व्यक्तिप्रतीतिरिति व्यवहितबुद्धिर्युक्ता। तस्मान्न व्यक्तिमात्रं शक्यं न वा जातिमात्रं, न वा जात्या व्यक्तेराक्षेपः प्रत्युत जात्यवच्छिन्नव्यक्तिरेव सङ्केतितार्थ इति तार्किकमतम्।

एवं जयन्तभट्टादिभिस्तार्किकैर्मीमांसकमतं विदूष्य शब्दः न प्रथमं जातिमनन्तरञ्च व्यक्तिं बोधयति, प्रत्युत साक्षात् जातिविशिष्टव्यक्तिमेवाभिदधातीति शब्देऽतिरिक्तभारानारोपात् तद्वानेवार्थः पदस्य स्वीकृतः। यथोक्तं जयन्तभट्टेन—

अन्येषु तु प्रयोगेषु गां देहीत्येवमादिषु।
तद्वतोऽर्थक्रियायोगात्तस्यैवाहुः पदार्थताम्॥
पदं तद्वन्तमेवार्थं भाञ्जस्येनाभिजल्पति।
न च व्यवहिता बुद्धिर्न च भारस्य गौरवम्॥[1]

---

(ख) अथ भाट्टाः—पदान्न व्यक्तेः स्मरणमनुभवो वा। किन्त्वाक्षेपादेव व्यक्तिधीः, आक्षेपिका जातिरेव। आक्षेपश्चानुमानमर्थापत्तिर्वा।
गदाधरभट्टाचार्यः, शक्तिवादः, पृ० १८३।

(ग) अत्र मीमांसका गवादिपदानां गोत्वे शक्तिः 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात्। व्यक्तिस्तु जातेराश्रयं विनाऽनुपपन्नेत्येवंरूपार्थापत्त्या लाभः।
मौनिश्रीकृष्णभट्टविरचिता वृत्तिदीपिका, पृ० ६।

१. (क) जयन्तभट्टकृता न्यायमञ्जरी, पृ० २१५।
(ख) तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति।
—न्यायसिद्धान्तमुक्तावलिः, पृ० १०५।

एवं मीमांसकमते प्रथमं जातिरनन्तरञ्च व्यक्तिर्बोधविषयतामुपयाति । परं नैयायिकमते उभयत्राभिधात्रीशक्तिस्वीकारगौरवपरिहाराय तद्वत्यां व्यक्तावेव पदस्याञ्जस्येन सङ्केतः ।

**(ङ) तत्र ज्ञानशक्तिवादिनः**

ज्ञानशक्तिवादिनां मतं गदाधराचार्येण स्वकीये शक्तिवादाख्ये ग्रन्थे प्रतिपादितम्[1] । ज्ञानशक्तिवादिनां मते शब्दस्य सङ्केतो न जातौ न व्यक्तौ न वा जातिविशिष्टव्यक्तौ, परं ज्ञाने पदानां शक्तिः । अयमाशयः—घटशब्दे उच्चरिते आदौ घटपदस्य शक्तिः घटपदज्ञानपर्यवसायिनी, अनन्तरमभिधया व्यवहारसमारूढाया घटव्यक्तेर्बोधः । घटपदज्ञानपर्यवसायिनीयं घटपदशक्तिर्व्यवहारसमारूढां घटव्यक्तिं बोधयितुं न प्रभवतीति कुब्जा । एवं पदस्य वाच्योऽर्थो ज्ञानम्, न घटव्यक्तिः । सर्वथा घटव्यक्तिरूपार्थबोधं प्रति घटपदशक्तिज्ञानं हेतुः । नहि घटव्यक्तेर्बोधो घटपदशक्तिज्ञानमन्तरा भवति । अतो घटपटादिपदानां शक्तिर्घटपटादिज्ञाने विभाव्या । अनन्तरं घटपदशक्तिज्ञाने सति व्यवहारसमारूढाया घटव्यक्तेरभिधया बोधः । यथोक्तं मौनिश्रीकृष्णभट्टेन वृत्तिदीपिकायम्—

**तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वविषयकगोपदशक्तिज्ञानं हेतुरित्याहुः[2] ।**

**(च) तत्र बौद्धाः**

सौगतानां मते पदानां सङ्केतितोऽर्थोऽपोहरूपः । तन्मते न जातौ सङ्केतो न वा व्यक्तौ परमपोहः सङ्केतितोऽर्थः पदस्य । अपोहो हि नाम तदितरव्यावृत्तिः । यथा हि—घटशब्दस्यार्थे ज्ञातव्ये सति तच्छब्दो घटपरामर्शकः । तस्मात् घटादितरे सर्वेऽपि सांसारिणः पटादयः पदार्थाः, तेभ्यो व्यावृत्तिरित्यपोहः । एवं गोपदेन सर्वासां गोव्यक्तीनां बोधः । तस्मादितरेऽश्वगर्दभादयः, तेभ्यो व्यावृत्तिर्यत्र सोऽपोहो गोत्वरूपार्थेतरव्यावृत्तिरिति बौद्धानां धियाऽपोहः सङ्केतितोऽर्थः शब्दस्य । यथोक्तं भट्टवामनाचार्येण काव्यप्रकाशस्य बालबोधिन्यां टीकायाम्—

---

(ग) जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता ।
जातिमात्रे हि सङ्केताद् व्यक्तेर्भानं सुदुष्करम् ॥
—शब्दशक्तिप्रकाशिका, पृ० १९ ।

१. शक्तिवादः, पृ० १७ ।

२. वृत्तिदीपिका, पृ० ७ ।

**गोशब्दश्रवणात् सर्वासां गोव्यक्तीनामुपस्थितौ अतस्मादश्वादितो व्यावृत्तिदर्शनादतद्व्यावृत्तिरूपोऽपोहो वाच्य इति बौद्धानां मतिः[1] ।**

**(छ) तत्र वैयाकरणाः**

वैयाकरणानां मते शब्दस्य सङ्केतो न जातौ, न वा जात्याकृतिविशिष्टव्यक्तौ, प्रत्युत व्यक्तेरुपाधौ। वैयाकरणानां मतमिदं महाभाष्यकारस्य पतञ्जलेः **चतुष्टयी शब्दानां प्रवृत्तिः**रिति वचनमुपजीव्य प्रवर्त्तते । यद्यपि व्यवहारे व्यक्तेरुपयोगिता सर्वथा प्रत्यक्षम्, तथापि तस्या व्यक्तेरुपाधौ (धर्मे) जात्यादावेव सङ्केतः स्वीकार्यः। गोपदेन ज्ञातो गौर्न केवलं जातिरूपोऽपितु शुक्लादिगुणवान्, चलनादिक्रियावान्, डित्थादिनामवान् प्रतीतिपथमवतरति । अतो जातिगुणक्रियायदृच्छाशब्देषु व्यक्तेरुपाधिषु पदानां सङ्केतोऽभ्युपेयः। तथा सति द्रव्यगुणविषयविभागकरणमपि न विरुध्यते ।

उपाधिर्द्विविधः[2] । वस्तुनि समवेतो धर्मो जातिगुणक्रियारूप, वक्त्रा यदृच्छया च व्यवहारसौकर्यार्थं डित्थकपित्थादिरूपेण गोवृषभाश्वादिषु वस्तुषु समारोपितः। गवि गोत्वशुक्लत्वचलनादयो जातिगुणक्रियारूपा उपाधयः स्वतः सिद्धाः, परन्तु डित्थकपित्थादयो व्यपदेशा लोकैर्व्यवहारसौकर्यार्थं सन्निवेश्यन्ते। इत्थमुपाधिर्द्विविधः। वस्तुधर्मरूपः वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः। सिद्धः साध्यश्च । प्रथमः सिद्धः (जातिः) पदार्थेऽश्ववृषभादौ प्राणाधायको जातिरूपः, येन गवादीनां गोत्वमुपपन्नम्, अश्वादितश्च तद्व्यावृत्तिः। द्वितीयः सिद्धः (गुणः) विशेषाधानहेतुर्धवलकृष्णपिङ्गलाख्यो वस्तुधर्मो येन जातिर्विशिष्यते। यथा गोपदस्य गोत्वे अर्थे गोत्वं तु प्राणप्रदः

---

१. काव्यप्रकाशः बालबोधिनीटीका, पृ० ३८

(२) उपाधिः
- वस्तुधर्मः
  - सिद्धः
    - पदार्थस्य प्राणप्रदः (जातिः)
    - विशेषाधानहेतुः (गुणः)
  - साध्यः (क्रिया)
- वक्तृयदृच्छासन्निवेशितः (संज्ञारूपो द्रव्यरूपो वा)

सिद्धो वस्तुधर्मः। परं तत्रैवोपलभ्यमानः कृष्णधवलत्वादिको गुणो गोत्वरूपायां जातौ विशेषतामादधाति। अत एवायं विशेषाधानहेतुरुच्यते। साध्यो वस्तुधर्मो क्रियारूपो यदृच्छात्मकश्च। साध्यत्वञ्चोत्पाद्यमानत्वम्। गोत्वरूपजातिमत्यां शुक्लादिसिद्धगुणवत्यां गवि चलनचर्वणदोहनादिक्रिया उत्पाद्याः, अतस्तासां साध्यत्वम्। एवमेव डित्थकपित्थादीनां व्यपदेशानां सन्निवेशश्चापि न पूर्वसिद्धः परं वक्त्रारोपितः। अतस्तस्यापि साध्यत्वमुपपन्नम्। इत्थं वैयाकरणानां मते गोशब्दस्य गोत्वजातौ, शुक्लादिशब्दस्य च गुणे चलतीत्यादिपदस्य क्रियायां, डित्थादिपदानाञ्च नाम्नि सङ्केते सति, व्यक्तेरुपाधिषु सङ्केतो न्याय्यः। तेन च चतुष्टयी पदानां प्रवृत्तिरिति भाष्यग्रन्थस्य सङ्गतिर्युज्यत इति वैयाकरणाः।

आलङ्कारिकैर्विवादास्पदे विषये शाब्दिकानामेव मतमवलम्बितम्। अत एव वैयाकरणानां मतं व्याकुर्वता मम्मटभट्टेन जात्यादिपक्षे एव स्वकीयः प्रत्ययः प्रदर्शितः।

**मीमांसकधिया शाब्दिकानुमतोपाधिपक्ष-प्रत्याक्षेपः**

शुक्लपाकडित्थानां गुणक्रियायदृच्छाशब्दानामपि जातिरेव सङ्केतितोऽर्थ इति व्यवस्थापयद्भिर्जातिवादिभिर्मीमांसकैर्वैयाकरणानामुपाधिपक्षः प्रत्याख्यायते। तेषामयमाशयः—हिमपयःशङ्खादिषु विद्यमानं शुक्लत्वं सामान्यं यद्वशाद् हिमं शुक्लं पयः शुक्लमिति व्यवहारः। भिन्नेष्वभिन्नाधानप्रत्ययोत्पत्तिः सामान्यमिति जातिलक्षणमभियुक्तैर्मीमांसकैः प्रोक्तम्। तल्लक्षणमत्र शुक्लादिषु गुणेषु सङ्गच्छते। परस्परं विभिन्नेष्वपि हिमपयसादिपदार्थेषु विद्यमानं शुक्लत्वं जातिरूपेण समानमभिन्नप्रत्ययहेतुकम्। नहि हिमगतं शौक्ल्यं पयोगताच्छौक्ल्याद् भिद्यते। तच्छुक्लत्वस्य सामान्यस्य सर्वेषु शुक्लेषु पदार्थेषु समानभावेन व्याप्तत्वात्। अतः शुक्लगुणस्य भिन्नेष्वभिन्नाधानप्रत्ययहेतुत्वाज्जातिरूपमव्याहतम्। अनया दिशा पाकादीनामपि जातित्वमविरुद्धम्। गुडतण्डुलादीनां पाकः पाकत्वेन सामान्यं, न व्यक्तिधर्मी प्रत्युत य एव गुडस्य पाकः स एव तण्डुलानाम्। तयोः पाके न कोऽपि विशेषः। पाकत्वस्य सर्वत्र पाके समानभावेन व्याप्तत्वात्। अतो व्यक्तेरुपाधीनामपि जातिरूपत्वाज्जातावेव संकेतो न्याय्यो नोपाधाविति मीमांसकाः।

**वैयाकरणमतपरिपोषका आलङ्कारिकाः**

सिद्धान्ते त्वालङ्कारिकाः शाब्दिकानामेव मतं पुष्णन्ति। गुणक्रियायदृच्छाशब्दा वस्तुतो न जातिरूपाः परमेकरूपाः यत्तेषां भेदस्तदाश्रयभेदहेतुक एव। शुक्लो गुणस्त्वेकः। परमसौ हिमपयःशङ्खाद्याश्रयेषु यद्भिन्नत्वेन प्रतीयते,

तदाश्रयभेदादेव । यथैकं मुखं खड्गमुकुरतैलाद्यालम्बनभेदाद्भिन्नं लक्ष्यते, परं पारमार्थिकं तु मुखस्यैकत्वमेव । तद्वदत्रापि द्रष्टव्यम् । अनया दिशा क्रियायदृच्छाशब्दानामपि जातित्वं प्रत्युक्तं भवति । तथाहि गुणवद् पाकोऽप्येक एव व्यक्तिधर्मी । परं स एव पाको गुणतण्डुलाद्याश्रयभेदाद्भिन्नो भासते, येन जातित्वभ्रमो मीमांसकस्य । परमार्थतस्तु पाकस्यैकत्वं खड्गमुकुरतैलादिषु प्रतिबिम्बितमुखवत् । अत उपाधिरेव शब्दानां संकेतितोऽर्थ इति वैयाकरणानां मतमेव साम्प्रतमित्यालङ्कारिकाणां सिद्धान्तः ।

इत्थं शब्दानां संकेतितोऽर्थो जातिरिति जरन्मीमांसकैः, जात्यवच्छिन्नव्यक्तिरिति नैयायिकैः, जातिगुणक्रियादयो व्यक्तेरुपाधिरिति शाब्दिकैः, अपोहोस्तदितरव्यावृत्तिरूप इति सौगतैः, पदज्ञानमिति च कुब्जशक्तिवादिभिः सम्प्रतिपन्न इति सर्वं स्पष्टं प्रतिपादितम् ।

**शक्तिग्रहविचारः**

अथ शक्तिग्रहसम्बन्धी विचार उपास्थाप्यते । अस्मिन् विषये अष्ट शक्तिग्रहस्य प्रयोजकानि प्रोक्तानि । तद्यथा—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।[1]

१. वाक्ये प्रयुक्तानां पदानां प्रकृतिप्रत्ययादिज्ञानं व्याकरणनिबन्धनम्, अतो व्याकरणं शक्तिग्राहकम् ।

२. उपमानेन शक्तिग्रहो यथा गोसदृशो गवयः । अत्रोपमानवशाद् गवाकारकं गवयं दृष्ट्वा गवयधीर्भवति ।

३. कोशेन यथा बिडौजेति पदस्यार्थ 'इन्द्र' इति कोशं पर्यालोच्य ज्ञानं भवति ।

४. आप्तवाक्येन यथा कोकिलः पिकपदवाच्य इत्याप्तवचनात् पिकपदस्य कोकिल इत्यर्थो बालेनावगम्यते ।

५. व्यवहारेण यथा प्रयोजकवृद्धेन गामानयेत्युक्तम्, तच्छ्रुत्वा प्रयोज्यवृद्धेन गौरानीतः । तदवधार्य पार्श्वस्थो बालो गवानयनादिकार्यं गामानयेति शब्दप्रयोज्यमिति निश्चिनोति । इत्थं गोपदस्य गोत्वरूपेऽर्थे शक्तिरिति प्रयोजकप्रयोज्यवृद्धव्यवहाराद् बालोऽवधारयति ।

६. वाक्यशेषाद्यथा 'यवमयश्चरुर्भवति' । अत्र द्व्यर्थकस्य यवपदस्य दीर्घशूके शक्तिग्रहः । अथान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्ति-

---

१. न्यायसिद्धान्तमुक्तावलिः, पृ० १०० ।

ष्ठन्ति इति वाक्यशेषाद् द्व्यर्थकस्य यवशब्दस्य दीर्घशूके शक्तिर्निश्चीयते न कङ्गौ। यवपदं दीर्घशूकविशिष्टेऽर्थे आर्याः प्रयुञ्जन्ति, कङ्गौ तु म्लेच्छाः। परं वाक्यशेषवशाद्दीर्घशूके शक्तिः।

७. विवृतेर्यथा—घटोऽस्तीत्यस्य कलशोऽस्तीत्यस्माद्विवरणात् घटपदस्य कलशार्थे शक्तिग्रहः। अत्र घटपदार्थस्तत्पर्यायवाचिना कलशशब्देन विवृतः। अतो विवृतिवशाद्घटपदार्थस्य कलशशब्दमहिम्ना ज्ञानम्।

८. सिद्धपदसान्निध्याद्यथा—'मधूनि मधुकरः पिबति। अत्र मधुपदस्य नानार्थकस्य शक्तिः पुष्परसे न मदिरायां मधुकर इति पदसान्निध्यात्। एवं प्राधान्येनाष्टधा शक्तिग्रहो भवति।

**अभिधा-स्वरूपम्**

व्याकरणकोषादिशक्तिग्राहकैः पदस्य शक्तिः संकेतितार्थे जात्यादिरूपे। असौ शक्तिरभिधेति नाम्ना प्रामाणिकैर्विवेचिता। तल्लक्षणं मम्मटभट्टेन कृतम्—

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।**[1]

अभिधाशब्दस्य प्रथमा शक्तिर्मुख्यार्थविषयिणी। सङ्केतितोऽर्थो मुख्योऽर्थः। मुखमिव मुख्यः। शब्दाज्जात्यादिरूपोऽर्थ एव प्रथमं गृह्यते, अतस्तस्य मुखमिव मुख्यत्वम्। यथा हस्तपादादिभ्य इन्द्रियेभ्यः पूर्वं मुखं व्यक्तं भवति, तथा लक्ष्यव्यंग्यार्थेभ्यः पूर्वं शब्दस्य योऽर्थो गृह्यते, तस्य मुख्यत्वम्। येन शब्देन मुख्योऽर्थोऽभिधीयते, असौ वाचकः शब्दः। यथा घटपटादिः। वाचकाच्छब्दात् सङ्केतितं वाच्यमर्थं बोधयन्ती शब्दस्य शक्तिरभिधा। शब्दाद्योऽर्थोऽवबुध्यते तद्बोधिकया शक्त्यापि कयाचिद् भाव्यम्। नहि शक्तिनिरपेक्षश्शब्दोऽर्थं बोधयितुं प्रभवति। असौ शक्तिरभिधेति नाम्ना व्यपदिष्टा विपश्चिद्भिः। अतो वाचकशब्दाद्वाच्यमर्थं बोधयन्ती शब्दस्य शक्तिरभिधेति तल्लक्षणं पर्यवसन्नम्भवति[2]।

वयं त्वित्थं प्रतीमो यच्छब्दार्थयोः यः पारस्परिकः सम्बन्धः स एवाभिधेति नाम्ना व्यपदिश्यते। तत्सम्बन्धवशादेव शब्दोऽर्थं बोधयति। अयमेव सम्बन्धः शब्दस्य शक्तिः। सा एवाभिधेति नाम्ना संज्ञप्यते। सङ्केतितार्थप्रत्यायिकेयं शक्तीरूढिर्योगर्योगरूढिश्चेति त्रिधा प्रोक्ता।

---

१. काव्यप्रकाशः, २, ८।

२. तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा—साहित्यदर्पणः, २,४।

**अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं** रूढिरिति रूढिलक्षणम्[1]। मणि-नूपुरादिशब्दाः रूढाः। न हि शब्दानामेषां कश्चिद् यौगिको व्युत्पत्तिलभ्योऽर्थः प्रतीतिपथमवतरति। प्रत्युत अवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण शक्तेभ्यः पदेभ्यो नूपुरादिभ्योऽर्थज्ञानम्। अतो नूपुरादिशब्दा रूढाः।

**अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः**[2]। यथा पाच-कादिपदम्। अत्र पचतीति पाचक इत्यवयवार्थो बुध्यते, अतः पदमिदं यौगिकम्।

**अवयवसमुदायोभयशक्तिसापेक्षमेवार्थप्रतिपादकत्वं योगरूढिः**[3]। यथा पङ्कजादिपदम्। अत्रावयवसमुदायशक्त्योरुभयोर्दर्शनाद्योगरूढित्वं पङ्कजपद-स्य। पङ्काज्जायत इति पङ्कज एष योगलभ्योऽर्थः। पङ्कजस्य पङ्का-ज्जन्मतः। परं पङ्कजं सर्वं वस्तु नहि पङ्कजपदवाच्यम्, अतः समुदायशक्त्या पङ्कजपदस्य कमलरूपिण्यर्थे रूढिः। अवयवसमुदायसंवलितशक्तिलभ्यः पद्मरूपोऽर्थः पङ्कजपदस्य योगरूढोऽर्थः।

केचिद् यौगिकरूढं चतुर्थीं विधामपि समामनन्ति[4]। तद्यथा—उद्भिदादि-पदम्। अत्र **उद्भिद्**पदस्य योगलभ्योऽर्थ उद्भेदनकर्तृ तरुगुल्मादिः, यागविशेष इत्ययौगिकः अर्थोऽपि पदस्यास्य प्रतिभासते, अत **उद्भिद्** इति पदस्य यौगिकत्वं रूढत्वञ्चेत्युभयमप्युपपन्नम्।

इत्थं प्राधान्येनाभिधायास्त्रिविधत्वमेव[5]। रूढयोगयोगरूढभेदात्। परमश्व-गन्धादीनां पदानां सद्भावाद् यौगिकरूढश्चतुर्थः प्रकारोऽप्यभिधायाः सम्प्रतिप-पद्यते शब्दशक्तिविद्भिः।

---

१. वृत्तिवार्त्तिकम्, पृ० १।

२. तत्रैव, पृ० १।

३. तत्रैव, पृ० २।

४. यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम्। यथोद्भिदादि-पदम्। तत्र हि उद्भेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति।
—न्यायसिद्धान्तमुक्तावलिः, पृ० १०६।

५. सेयमभिधा त्रिधा। केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदाया-वयवसङ्करश्चेति।
—रसगंगाधरः, पृ० १२७।

## तृतीयोऽध्यायः

# लक्षणावृत्तिविचारः

अभिधानिरूपणानन्तरं तत्पुच्छभूता लक्षणावृत्तिर्विविच्यते। सेयं लक्षणा वृत्तिर्न केवलमालङ्कारिकैरेवापितु मीमांसकैः शाब्दिकैस्तार्किकैरप्यभिधया वक्तुर्विवक्षितार्थस्य प्रतीतिविरहेऽर्थप्रत्यायनार्थं स्वीकृता। अतएव न्यायदर्शन-तत्त्वचिन्तामणि-शब्दशक्तिप्रकाशिकादिषु न्यायदर्शनग्रन्थेषु,[1] व्याकरणमहा-भाष्य-वाक्यपदीय-मञ्जूषादिषु व्याकरणग्रन्थेषु,[2] तंत्रवार्तिकादिषु च मीमांसा-दर्शनग्रन्थेषु[3] शब्दशक्तीनां गहनातिगहनो विचारः। एवमेव काव्यप्रकाश-साहित्यदर्पण-चन्द्रालोक-वृत्तिवार्त्तिक-रसगङ्गाधरादिषु काव्यशास्त्रग्रन्थेषु च शब्दशक्तीनां विवेचनम्।

---

१. (क) सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-समीप्य-योग-साधनाधि-पत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्व-तद्भावेऽपि तदुपचारः।

गौतमः, न्यायदर्शनम् २, २, ६४।

(ख) जगदीशतर्कालङ्कारः, शब्दशक्तिप्रकाशिका, पृ० १३३-१४३।

२. (क) चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद्भवति, तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात् तत्साहचर्यात्। मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय।

पतञ्जलिः, व्याकरणमहाभाष्यम्, ४, १, ४८।

(ख) यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते।
तथा स एव गोशब्दो वाहीकेऽपि व्यवस्थितः॥

भर्तृहरिः, वाक्यपदीयम्, २, २५४।

(ग) नागेशभट्टः, परमलघुमञ्जूषा, पृ० १६-२२।

३. अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥

कुमारिलभट्टः, तन्त्रवार्तिकम्, १, ४, २२।

**बहुभक्तिवादीनि ब्राह्मणानि भवन्ति**[1] इत्यस्मिन् यास्कप्रणीतनिरुक्तवाक्ये लक्षणापरपर्यायभक्तिशब्दोपादानादिदमुन्नीयते यत् प्राक्तनेषु ब्राह्मणग्रन्थेष्वपि लक्षणाविचारः प्रावर्तत । स एव हि विचारः परिवर्तिषु दर्शनग्रन्थेषु परां पुष्टिं गतः । काव्यशास्त्रकृद्भिर्मम्मटप्रभृतिभिः परम्पराप्राप्तोऽसावेव विचारः काव्यलक्षणग्रन्थेषु प्रपञ्चितः ।

लक्षणायाः किं स्वरूपमित्यत्र मतभेदः । तार्किका **यत्किञ्चित् पदशक्यार्थेन सह सम्बन्धः** स एव लक्षणेति शक्यसम्बन्धस्य लक्षणात्वं सिद्धान्तीकुर्वन्ति ।[2] शाब्दिकास्तु **शक्यतावच्छेदकारोपो लक्षणेति** भणन्ति । मीमांसकैस्तु **प्रतिपाद्यसम्बन्धः लक्षणेति** सिद्धान्तितम् । पण्डितराज-जगन्नाथेनालङ्कारिकेण **शक्यसम्बन्धो लक्षणेति**[3] तार्किकमतमेवाव-लम्बितम्।

## अभिधालक्षणयोर्भेदः

अभिधा शब्दस्य स्वाभाविकी वृत्तिर्लक्षणा च स्वाभाविकेतरा तत्पुच्छभूता शब्द आरोपिता वस्तुतोऽर्थनिष्ठा जघन्या वृत्तिः ।[4] अयम्भावः । अभिधा तम-र्थमेव गोचरीकरोति येषु वाचकानां शब्दानां साक्षात् सङ्केतः । अत एव सङ्केतितोऽर्थोऽभिधाबोध्यो नासङ्केतितः । घटपटादिवाचकपदेभ्यस्तच्छक्यता-वच्छेदकघटत्वपटत्वादयोऽर्था अनायासेनैव बोधविषया भवन्ति, यतो घटपटा-दीनां प्रवृत्तिनिमित्तं शक्यतावच्छेदकं घटत्वादि चिराद् घटादिपदानां शक्योऽर्थः । नेदं निश्चेतुं शक्यं यत् कदाप्रभृति इमे वाचकाः शब्दा वाच्यानर्थान् प्रत्याययितुं लोकानां व्यवहारे समारूढाः । अत एव तार्किका अभिधानाभिधेयरूपो नियम

---

१. राजवाडे वैजनाथ काशीनाथः, श्रीमद्यास्काचार्यप्रणीतं निरुक्तम्, द्वितीयो भागः,पृ० ७०८ ।

२. भीमाचार्यो झलकीकरः, न्यायकोशः, पृ० ६९८-७०१ ।

३. जगन्नाथः, पृ० १८४ ।

४. अभिधानाभिधेयत्वमतः शब्दार्थयोः स्थितम् ।
सम्बन्धोऽत्राभिधा द्वेधा बोध्या मुख्यजघन्यतः ॥
अभिधार्थावगत्यात्मा शब्दं व्यापारयिष्यतः ।
शब्दशक्तिनिमित्ता सा स्वार्थे मुख्याभिधीयते ।
स्वार्थाभिधानद्वारा स्याज्जघन्यार्थान्तरे मता ॥
न्यायपरिशुद्धिः, शब्दाध्यायः

उद्धृत, सिंह, सत्यव्रत, (डॉ०), हिन्दीसाहित्यदर्पण, पृ० ४६ ।

ईश्वरोद्भावित इत्यामनन्ति ।[1] एवमभिधा शब्दस्याद्या सहजा शक्तिरिति सिद्धम् । परं लक्षणा यानर्थांल्लक्षयति, न तेषु लाक्षणिकस्य शब्दस्य साक्षात्सङ्केतः । गङ्गाशब्दः प्रयुक्तः प्रवाहरूपमर्थं यथा स्वभावादेव बोधयति, न तथा तटरूपमर्थम् । अतएव गङ्गापदस्य प्रवाहरूपोऽर्थः सङ्केतितः शक्तिलभ्यः, परं तटरूपोऽर्थः प्रवाहरूपशक्यार्थसम्बन्धेन सम्बद्धो, न मुख्यः सहजोऽर्थः शब्दस्य, प्रत्युत परम्परासम्बन्धेन प्राप्तोऽर्थः । अत एव जघन्यो लक्षणावृत्तिसमुल्लासितः प्रोच्यते । स्वार्थे प्रभवन्ती शब्दस्य शक्तिर्मुख्या । मुख्यार्थाभिधानमवलम्ब्य तत्सम्बन्धेनार्थान्तरं प्रत्याययन्ती वृत्तिरमुख्या लक्षणेति नाम्ना व्यपदिश्यते ।

### लक्षणास्वरूपम्

अभिधया वक्तुर्विवक्षितार्थस्य प्रतीतिविरहे तत्प्रत्यायनार्थं लक्षणा समुपास्यते सुधीभिः । तद्यथा—**गङ्गायां घोषः** इत्यस्मिन्नुदाहरणे प्रवाहरूपमर्थं शक्यं द्वारीकृत्य तत्सम्बद्धस्तटरूपोऽमुख्योऽर्थो वक्तुर्विवक्षितो लक्षणया लभ्यते । इत्थमभिधातिरिक्ता लक्षणाख्या वृत्तिरर्थप्रत्यायनार्थमावश्यकी ।

### लक्षणायास्त्रीणि निबन्धनानि

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥**[2]

इति मम्मटाचार्येण काव्यप्रकाशे मुख्यार्थबाधो मुख्यार्थलक्ष्यार्थयोः पारस्परिकः सम्बन्धः रूढिप्रयोजनयोरन्यतरस्य विवक्षेति लक्षणायास्त्रीणि निबन्धनानि व्याहृतानि ।

**(क) मुख्यार्थबाधात्मकं प्रथमं निबन्धनम्**

लक्षणां प्रति मुख्यार्थबाधः प्रथमं निबन्धनम् । तथाहि, **गङ्गायां घोषः** इत्युदाहरणे गङ्गापदाभिधेयस्य जलप्रवाहरूपार्थस्य घोषपदार्थेन आभीरपल्लीरूपेण सहाधाराधेयभावसम्बन्धेनावस्थानाभावान् मुख्यार्थबाधः । गङ्गापदस्य जलप्रवाहरूपोऽर्थो घोषपदस्य चाभीरपल्लीरूपोऽर्थः सिद्धः । नहि तत्र स्वरूपतः

---

१. शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः । स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः ।
शास्त्री, नृसिंहदेवः, श्रीविश्वनाथपञ्चाननकृतकारिकावलिसहिता न्यायसिद्धान्तमुक्तावली, पृ० ६६ ।

२. मम्मटः, काव्य-प्रकाशः, २, ४ ।

कश्चिद् बाधः। परं गङ्गापदार्थस्य घोषपदार्थेनान्वये चिकीर्षितेऽसौ बाधः पुरः स्फुरति। अतो **मुख्यार्थबाधः** इत्यस्य पदार्थानां परस्परान्वयेनावस्थानाभाव इत्याशयो ग्राह्यः। यत्र पदानामर्थप्रत्यायनयोग्यता परस्परं सन्निधिराकांक्षा चेति त्रितयं सम्भवति, तत्राकांक्षासन्निधियोग्यतावद् वाक्यं निर्बाधमर्थं प्रत्याययति। परं यत्राभाव एतेषामेकतरस्यापि तत्र निराकांक्षमयोग्यमसन्निहितं वा वाक्यं सम्बद्धमर्थं नाभिदधाति। तद्यथा—**वह्निना सिञ्चतीत्**यादौ न सम्बद्धार्थप्रत्ययो वह्नौ सिञ्चनगुणस्य कल्पयितुमशक्यत्वादिति योग्यताभावान्नार्थसङ्गतिः। एवं निराकांक्षमपि वाक्यं नार्थप्रतीतिकरम्। **अश्वो गौः काष्ठं मृदि**त्यादिपदेषु समुच्चरितेषु सत्सु परस्परमाकांक्षाभावान्नार्थसङ्गतिः। सन्निधिरपि पदानां निर्बाधार्थप्रत्यायनार्थमावश्यकी। अधुनोच्चारितस्य गोपदस्य घटिकानन्तरञ्चोच्चरितेनानयेतिपदेनासन्निहितत्वान्नार्थसङ्गतिः। **गामानये**त्येककालोच्चारितमेव पदद्वन्द्वमर्थप्रतीतिं कारयति। अत आकाङ्क्षासन्निधियोग्यतावदेव वाक्यं सार्थकं सन्निर्बाधमर्थं प्रत्याययितुं प्रभवति नान्यथा।[1]

एवं **गङ्गायां घोषः** इत्यत्र योग्यताभावात् मुख्यार्थबाधः। तथा सति योग्यताभावाद्यत्रान्वयानुपपत्तिस्तत्र मुख्यार्थबाधवशाल्लक्षणा प्रसरति। यत्र योग्यतावशात् पदानां परस्परमन्वयस्तत्र मुख्यार्थबाधविरहे न लक्षणाप्रक्लृप्तिः।

अन्वयानुपपत्तिर्लक्षणाया बीजमिति चेत्तर्हि **काकेभ्यो दधि रक्ष्यताम्** इत्युदाहरणवाक्ये लक्षणाया अप्रवृत्तिः, पदानां परस्परं योग्यतासत्त्वान्मुख्यार्थबाधाभावात्, सान्वयस्य च वाक्यस्यार्थप्रत्यायकत्वात्। अतस्तात्पर्यानुपपत्तौ लक्षणा प्रभवतीति काममभ्युपेयम्। अयम्भावः। पूर्वोक्ते उदाहरणवाक्ये काकेभ्य एव दधिरक्षणं वक्तुर्नेष्टम्, अपि तु दध्युपघातका ये सारमेयविडालादयस्तेभ्योऽपि दधि रक्षणीयमिति वाक्यप्रयोक्तुराशयः। तथा सति काकपदस्य न काकरूपोऽर्थो वक्तुस्तात्पर्यभूतोऽपितु काकपदस्य दध्युपघातकरूपोऽर्थोऽत्र वक्तुर्विवक्षितोऽर्थः। अत एव काकपदशक्यार्थेन वक्तुस्तात्पर्याग्रहणात् काकपदस्य दध्युपघातके लक्षणा। अनया दिशा **नक्षत्रं दृष्ट्वा वाचमुत्सृजेत्** इत्यादावसत्यपि दिवा नक्षत्रदर्शने वाग्विसृज्यत इत्यर्थस्य प्रतीतिर्वक्तुस्तात्पर्यमव-

---

१. यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते।।
शास्त्री, नृसिंहदेवः, श्रीविश्वनाथपञ्चाननकृतकारिकावलीसहिता न्यायसिद्धान्तमुक्तावली, पृ० ११३।

बुध्यैव भवति। यदि **मुख्यार्थबाधः** इत्यस्य तात्पर्यानुपपत्तिरित्यर्थो नोपादीयते, तदा पूर्वोक्तेष्वुदाहरणवाक्येषु दध्युपघातकानां सारमेयविडालप्रभृतीनां ग्रहणमेव न भवेत्। **यष्टीः प्रवेशय** इत्यादावपि तात्पर्यानुपपत्तिरेव लक्षणां समुत्थापयति। नहि यष्ट्यानयनरूपोऽर्थोऽत्रानुपपन्नो यष्टीनामानयनसम्भवात्। परं यष्टिपदात् यष्टिधरस्य वक्तुस्तात्पर्यभूतस्यार्थस्यानुपपत्तौ लक्षणया यष्टिधररूपलक्ष्यार्थस्य प्रतीतिः।

एवं वक्तुस्तात्पर्यस्य वाक्येऽनुपपन्ने सति लक्षणा समुत्तिष्ठतीति स्वीकार्यम्। यत्रापि **गङ्गायां घोषः** इत्यादावन्वयानुपपत्तिः सुलक्ष्या, तत्रापि तात्पर्यानुपपत्तिरवश्यमनुसन्धेया। अन्यथा लक्षणावैयर्थ्यापत्तिस्तत्प्रयोजकप्रयोजनप्रतीत्यभावात्। यदि गङ्गाशब्दस्य नौकायां लक्षणा क्रियते, तद्यन्वयानुपपत्तिस्तु शाम्यति, परं शैत्यपावनत्वादिधर्मोपस्कृतस्य तटस्य विवक्षितस्य तावत्प्रतीतिर्दुश्शका। तद्धर्मविशिष्टस्य तटस्य प्रतीतिस्तु तात्पर्यानुपपत्तिमनुसन्धायैव। नहि **गङ्गायां घोषः** इत्यत्र वक्तुस्तात्पर्यं गङ्गातटे घोष इत्यर्थप्रत्यायन एव। प्रत्युत शैत्यपावनत्वादिधर्मविशिष्टस्य तटस्य प्रत्यायनार्थमेवासम्बद्धं वाक्यं वक्त्रा प्रयुज्यते। एवं गङ्गापदस्य नौकायां घोषपदस्य च मीने लक्षणायां कृतायामन्वयानुपपत्तितापशान्तिस्तु सम्भवा, परं नैतावता वक्तुस्तात्पर्यभूतार्थस्योपपत्तिः। अतस्तात्पर्यानुपपत्तिवशाल्लक्षणायां कृतायामेव शैत्यपावनत्वादिधर्मविशिष्टस्य तटस्य प्रतीतिर्भवति। इत्थं **मुख्यार्थबाधः** इति लक्षणालक्षणप्रथमघटकस्य तात्पर्यानुपपत्तिरेवाशयः स्वीकरणीयः।[1]

**(ग) मुख्यार्थलक्ष्यार्थयोः पारस्परिकसम्बन्धात्मकं द्वितीयं निबन्धनम्**

मुख्यार्थलक्ष्यार्थयोः पारस्परिकः सम्बन्धो लक्षणां प्रति द्वितीयं निबन्धनम्। तद्विना मुख्यार्थेनासम्बद्धो यः कश्चिदनीप्सितोऽप्यर्थः प्रतीतिपदवीमवतरेत्। तेन च गङ्गापदाल्लक्षकाद् घटपटादयोऽसम्बद्धा अर्था लक्षिता भवेयुः। अतो मुख्यार्थलक्ष्यार्थयोर्मध्ये सम्बन्धेन केनचिद् भाव्यम्। असौ सम्बन्धो बहुविधः। तद्यथा—**कुन्ताः प्रविशन्तीत्यत्र** कुन्तकुन्तधारिणां संयोगसम्बन्धेनावस्था-

---

१. वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव लक्षणाबीजम्। अन्यथा गङ्गायां घोषः इत्यत्र घोषपद एव मकरादिलक्षणापत्तिः तावताप्यन्वयानुपपत्तिपरिहारात्। गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च।

नागेशभट्टः, परमलघुमञ्जूषा, पृ० १७-१८।

नाल्लक्षणा। **गौर्वाहीकः** इत्यत्र गोवाहीकयोः सादृश्यसम्बन्धेनावस्थानाल्लक्षणा। मञ्चाः क्रोशन्तीत्यत्र तात्स्थ्यसम्बन्धेन लक्षणा।[1]

इत्थं तात्पर्यानुपपत्तौ सत्यां मुख्यार्थेन सह केनचित्सम्बन्धेन सम्बद्ध एवान्योऽर्थो लक्षणाया प्रतिपाद्यते। अन्यथाऽसम्बद्धार्थप्रतीतिप्रसङ्गः। तद्वारणार्थमेव मम्मटभट्टेन **मुख्यार्थबाधे तद्योगे** इत्यादिकारिकायां **तद्योगः** इति पदमनुप्रवेशितम्।[2]

मीमांसकधुरंधरेण कुमारिलभट्टेनापि---

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।**[3]

इत्यभिदधता मुख्यार्थलक्ष्यार्थयोरविनाभावः प्रोक्तः। अभिधेयेन शक्यार्थेन अविनाभूतः सम्बद्धोऽर्थो लक्षणाया विषयः। अविनाभावोऽत्र नान्तरीयके व्याप्त्यर्थे नोपादेयः, अपितु सम्बन्धमात्रेऽर्थ इत्याशयः प्रोद्घाटितो मम्मटभट्टेन काव्यप्रकाशे।[4] अविनाभावशब्दे चाक्षेपपरे कृतं लक्षणाया। यतो मञ्चाः क्रोशन्तीत्यत्र मञ्चपदादाक्षेपादेव मञ्चस्थेऽर्थेऽवगते लक्षणाया सर्वथा निरवकाशप्रसङ्गः। अतोऽविनाभाव इति पदं सम्बन्धार्थबोधकमित्यभिसन्धिः।

---

१. (क) क्वचित्तादर्थ्यादुपचारः। यथा इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावसम्बन्धात्। यथा राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावात्। यथा अग्रहस्त इत्यत्र अग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्यात्। यथा अतक्षा तक्षा।

मम्मटः, काव्यप्रकाशः, पृ० ५३।

(ख) अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥

आचार्यो भर्तृमित्रः

उद्धृतं, मुकुलभट्टः, अभिधावृत्तिमातृका, पृ० १७।

२. असम्बन्धे लक्षणायां गङ्गापदाद्यमुनातटस्याप्युपस्थित्यापत्त्यातिप्रसङ्ग इति तद्वारणाय तद्योगे इति।

मम्मटः, काव्यप्रकाशः, बालबोधिनीटीका, पृ० ४१

३. कुमारिलभट्टः, तन्त्रवार्तिकम्, १, ४, २२।

४. अविनाभावोऽत्र सम्बन्धमात्रं नतु नान्तरीयकत्वम्। तत्त्वे हि मञ्चाः क्रोशन्ति इत्यादौ न लक्षणा स्यात्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।

मम्मटः, काव्यप्रकाशः, पृ० ५०

### (ग) रूढिः प्रयोजनं वेति लक्षणां प्रति तृतीयं निबन्धनम्

मुख्यार्थबाधे मुख्यार्थलक्ष्यार्थयोः पारस्परिके च सम्बन्धे सत्यपि, न तावल्लक्षणा यावल्लक्षणाप्रयोजकयो रूढिप्रयोजनयोरेकतरस्य न तत्प्रवृत्तिनिमित्तत्वम्। अत एव **कलिङ्गः साहसिकः** इत्यत्र रूढिमनुरुध्य लक्षणावतारः। **गङ्गायां घोषः** इत्यत्र च शैत्यपावनत्वादिप्रयोजनजातं प्रयोजकीकृत्य लक्षणायाः प्रसरणम्।

**गौरनुबन्ध्यः** इत्यादौ रूढिप्रयोजनयोरभावाल्लक्षणा निराक्रियते मम्मटभट्टादिभिरालङ्कारिकैः। परं मण्डनमिश्रादयो मीमांसका जातिरूपिणोऽर्थस्याभिधेयस्य वाक्येऽनुपपन्ने सति व्यक्तेर्भानं लक्षणालभ्यमिति संगिरन्ते।[1] अयमाशयः। गोशब्दस्य प्रवृत्तिनिमित्तं शक्यतावच्छेदकं गोत्वं सामान्यम्। अभिधा तमर्थं बोधयित्वोपरता भवति। परं जातेरदृश्यत्वान्न हननरूपविधिवाक्यसिद्धिः। अतः श्रुतिचोदितं वचनमसम्बद्धं मा भूदिति जात्या विशेषणेन विशेष्या व्यक्तिर्लक्ष्यते। परमालङ्कारिकाणां मते व्यक्तिप्रतीतिराक्षेपाद्भवति, न लक्षणया। **निर्विशेषं न सामान्यं भवेच्छशविषाणवत्** इति वचनप्रामाण्यात् सामान्येन गोत्वेन विशेषा व्यक्तिराक्षिप्यते इति तदर्थमभिधातिरिक्ता लक्षणावृत्तिर्नोपास्या। यथा जलमानयेत्युक्तौ सपात्रं जलमानीयते, पात्रं विना जलानयनस्यासम्भवत्वात्। अत आक्षेपेणैव पात्रस्य ग्रहणं भवति, तद्वत् **गौरनुबन्ध्यः** इत्यत्रापि व्यक्तिं विना जातेरवस्थानाभावाज्जात्या व्यक्तिराक्षिप्यत इत्यतो लक्षणा नात्रोपास्या। भवतु वा लक्षणाया व्यक्तिप्रतीतिः, परन्तु नात्र रूढिर्नवा प्रयोजनम्। अत आक्षेपगम्यैव व्यक्तिप्रतीतिरिति मम्मटाद्यालङ्कारिकाणां निष्कर्षः।[2] एवं लक्षणायां रूढिप्रयोजनयोरेकतरस्य सद्भावोऽवश्यमभ्युपगम्यः।

### रूढि-निबन्धना लक्षणा

रूढिं प्रसिद्धिं निमित्तीकृत्य प्रवर्तमाना लक्षणा रूढिनिबन्धनोच्यते।

---

१. मण्डनमिश्रास्तु गौरनुबन्ध्यः इत्यादिकमुपादानलक्षणाया उदाहरणमाहुः। तन्मतं दूषयितुमनुवदति गौरित्यादिना न्यायादित्यन्तेन।

मम्मटः, काव्यप्रकाशः, बालबोधिनी टीका, पृ० ४४।

२. न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता। कुर्वित्यत्र कर्म। प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च।

मम्मटः, काव्यप्रकाशः, पृ० ४४-४५

तद्यथा—**कर्मणि कुशलः** इत्यादौ कुशांल्लातीति कुशलो व्युत्पत्तिलभ्यो मुख्योऽर्थो वाच्यः। कर्मणि चतुरोऽर्थोऽत्र लक्ष्यः। कुशलपदस्य व्युत्पत्तिलभ्यो दर्भग्रहीतृरूपोऽर्थोत्रानुपपन्नः। चित्ररचनादिकर्मणि दक्षस्य पुरुषस्य दर्भग्रहण-कर्मासम्पादनात्। अतः कुशालानरूपं कर्म यथा चातुर्येण निर्वर्त्यम्, तथैव चित्ररचनादि कार्यमपि चातुर्यापेक्षमिति शक्यलक्ष्यार्थयोर्मध्ये विवेचकत्वसम्बन्धः सामान्यः। कुशलपदं चतुररूपिणं लक्ष्यमर्थं प्रसिद्धिवशाद् बोधयति, अतो वक्तुः प्रयोजनस्यादर्शनाद् रूढिनिबन्धना लक्षणा '**कर्मणि कुशलः**' इत्यादौ।

## प्रयोजननिबन्धना लक्षणा

प्रयोजनं निमित्तीकृत्य प्रवर्तमाना लक्षणा प्रयोजननिबन्धनोच्यते। **गङ्गायां घोषः** इत्यादौ गङ्गागतशैत्यपावनत्वादिप्रयोजनजातं लक्षणायाः प्रयोगे निबन्धनम्। अतः प्रयोजनं हेतुत्वेनापेक्षमाणात्र प्रयोजननिबन्धना लक्षणा। एवं लक्षणायाः प्रयोगे रूढिप्रयोजनयोरेकतरस्य हेतुत्वेनोपादानं परमावश्यकम्।

अत्र तन्त्रवार्तिककाराः श्रीकुमारिलभट्टमहाभागा निरूढाया लक्षणायाः प्रत्याचिख्यासया समुत्तिष्ठन्ते। यथा हि—

**निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।**
**क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥**[1]

इति तन्त्रवार्त्तिकप्रामाण्यान्निरूढा लक्षणा न सङ्गच्छन्ते, तासामभिधाया-मन्तर्भावात्। तद्यथा '**कर्मणि कुशलः**' इत्युदाहरणे कुशलपदं चतुररूपिण्यर्थेऽ-भिधानवद् रूढम्। न हि कुशलेति पदस्य कुशांल्लातीति व्युत्पत्तिलभ्योऽर्थोऽभिधेयः प्रतीतिपदवीमवतरति। प्रत्युत कुशलपदं घटपटादिपदवत् साक्षाच्चतुररूपमर्थम-भिधत्ते। अतो यथा घटपदस्य कम्बुग्रीवाद्यर्थोऽभिधेयस्तथैव कुशलपदस्य चतुरोऽ-र्थोऽभिधेयः, व्युत्पत्तिलभ्यस्य कुशग्रहीतृरूपिणोऽर्थस्याप्रतीतेः। व्यवहारे कुशल-पदस्य चतुरोऽर्थ एव रूढो न दर्भग्रहीतृरूपः। अतएव निरूढा लक्षणा सामर्थ्याद-भिधानवद्दृश्यन्ते। यथा **गङ्गायां घोषः** इत्यादौ प्रथमं प्रवाहरूपोऽभिधेयोऽर्थः प्रतीयते, तदनन्तरं तटरूपो लक्ष्योऽर्थस्तथा **कर्मणि कुशलः** इत्यादौ रूढायां लक्षणायां कुशग्रहीतृचतुररूपार्थयोर्न प्रतीतिः। प्रत्युत कुशलपदस्य साक्षाद-भिधेयोऽर्थश्चतुर एव प्रतीयते।

साहित्यदर्पणकाराः श्रीविश्वनाथाचार्यास्तु मम्मटाचार्यमतं चिखण्डयिषवः कुशलपदे निरूढां लक्षणां प्रत्याचक्षते। तथाहि **अन्यद्धि शब्दानां व्युत्पत्तिनि-मित्तमन्यच्च प्रवृत्तिनिमित्तमिति**वचनाच्छब्दानां व्युत्पत्तिप्रवृत्तिनिमित्तभेदवशात्

---

१. कुमारिलभट्टः, तन्त्रवार्त्तिकम्, ३, १, ८।

**गमेर्डोः** (उणादि—२,६७) इत्युणादिसूत्रेण गम्धातो र्डोः प्रत्यये कृते सति गोपदं सिध्यति। एवं गच्छतीति गौरिति गोपदस्य व्युत्पत्तिलभ्योऽर्थः। यदि व्युत्पत्तिलभ्योऽर्थो गोपदस्य शक्योऽर्थस्तदा गोः शयनकाले गमनव्यापाराभावाद् गोपदव्यवहारोऽसङ्गतः। नन्वगच्छति गवि गोपदव्यवहारो लक्षणामवलम्ब्योपपन्न इति चेन्न, अगच्छति गवि सर्वत्र लक्षणास्वीकारगौरवप्रसङ्गात्। अतो गोपदस्य व्युत्पत्तिलभ्योऽर्थो यथा न गोपदप्रवृत्तिनिमित्तं तथा कुशलपदस्य व्युत्पत्तिलभ्यस्यार्थस्याग्रहणात् तत्पदस्य दक्षरूपोऽर्थः प्रवृत्तिनिमित्तभूतोऽभिधेयो न लक्ष्यः। एवं नात्र लक्षणा, मुख्यार्थबाधाद्यभावात्।

एवं यद्यप्यनेया दिशा विश्वनाथेन कुशलपदे रूढिलक्षणा विप्रतिषिद्धा, तथापि तेनोदाहरणान्तरेषु रूढिलक्षणाः स्वीकृताः। अत एव तेन रूढिलक्षणाया बहवो भेदाः साहित्यदर्पणे प्रपञ्चिताः।[1] केवलं कुशलपदस्य रूढिलक्षणात्वं निराकुर्वता विश्वनाथेन मात्सर्यवशान् मम्मटाचार्यः प्रत्याक्षिप्तः। वस्तुतः कुशलपदे रूढिलक्षणां प्रत्याचक्षाणेनापि विश्वनाथाचार्येण रूढिर्लक्षणाया निबन्धनत्वेनाङ्गीकृतैव।

काव्यानुशासनप्रणेतारः श्रीहेमचन्द्राचार्यास्तु लक्षणाया हेतुत्वेन रूढिं सर्वथा निराकार्षिषुः।[2] तन्मते कुशलद्विरेफद्विकानां पदानां दक्षभ्रमरकाकादयोऽर्थाः साक्षात् सङ्केतविषयत्वान्मुख्यार्था एव प्रणिभालनीयाः।

नरेन्द्रप्रभसूरिणापि अलङ्कारमहोदधौ रूढिलक्षणा विप्रतिपन्ना। यथोक्तं तेन **रूढिलक्षणा त्वभिधातुल्यैव, तेनात्र नोदाह्रियते** इति।[3]

प्रयोजनस्य लक्षणाया हेतुत्वे तु नास्ति कस्यापि विप्रतिपत्तिः। **गङ्गातटे घोषः** इति स्वायत्तेऽपि शब्दप्रयोगे गङ्गायां घोषः इत्यसम्बद्धवचनं सर्वथा शैत्यपावनत्वादिप्रयोजनस्याधिकाधिकाभिव्यक्त्यर्थमुच्चार्यते। अन्यथा **गङ्गायास्तटे घोषः** इत्यनेनैव कथनेन प्रतिपिपादयिषितार्थलाभे सिद्धे **गङ्गायां घोषः** इत्यनन्वितं वचनं न प्रयुज्येत। गङ्गातटे घोष इत्यनेन न तावच्छैत्यपावनात्मकं प्रयोजनं व्यक्तं भवति, यावद् **गङ्गायां घोषः** इत्यनन्वितवचनेन ध्वनितं भवतीति प्रयोजनस्य लक्षणाया हेतुत्वेनावस्थानं निर्बाधम्। इत्थं मुख्यार्थबाधो मुख्यार्थलक्ष्यार्थयोः पारस्परिकः सामीप्य-सादृश्यादिसम्बन्धः प्रयोजनञ्चेति

१. विश्वनाथः, साहित्य-दर्पणः, २, ५-१०।

२. कुशलद्विरेफद्विकादयस्तु साक्षात् सङ्केतविषयत्वान्मुख्या एवेति न रूढिर्लक्ष्यार्थस्य हेतुत्वेनास्माभिरुक्ता।

—हेमचन्द्रः, काव्यानुशासनम्, पृ० २५।

३. —नरेन्द्रप्रभसूरिः, अलङ्कारमहोदधिः, पृ० ३३।

त्रितयं सम्मिलितं लक्षणासमुल्लासे हेतुः ।

**लक्षणाशब्दस्य व्यापारोऽर्थस्य वा**

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ।**[1]

इत्यस्मिन् लक्षणालक्षणे मम्मटेन लक्षणाऽऽरोपिता क्रिया प्रोक्ता । तस्याश्च तेन सान्तरार्थनिष्ठत्वं सिद्धान्तितम् ।

लक्षणा वस्तुतोऽर्थनिष्ठो व्यापारः । यतः सर्वदा लक्ष्यार्थप्रतीतिः शक्यार्थ-व्यवहिता भवति । नहि लक्षकेन शब्देन गङ्गादिना साक्षादभिधानवल्लक्ष्योऽर्थ-स्तटादिरूपः प्रत्याय्यते । प्रत्युत वाक्ये शब्दार्थस्यान्वयेऽनुपपन्ने सति शक्य-सम्बद्धलक्ष्यार्थावगतिर्भवति । अतएव महिमभट्टाचार्येणार्थव्यापारो लक्षणेति कृत्वा असावनुमितावन्तर्भाविता ।[2]

गङ्गायां घोषः इत्यादौ प्रवाहरूपोऽर्थोऽभिधेयो गङ्गापदवाच्यः साक्षात् गङ्गाशब्देनैव बोध्यते । अतस्तत्र व्याप्रियमाणो व्यापारोऽपि शब्द एव । परं प्रवाहरूपाच्छक्यार्थाद् बोध्यस्तटरूपोर्थो न साक्षात् शब्दात् प्रतीयते, प्रत्युत गङ्गापदप्रतिपादितप्रवाहरूपादर्थात् । एवं प्रवाहरूपमर्थं निमित्तीकृत्य तद्द्वारा अमुख्यं तीररूपमर्थं लक्षयन् व्यापारोऽर्थस्यैव सङ्गच्छते ।

एवं वस्तुतोऽर्थनिष्ठो व्यापारोऽपि लक्षणा शब्द आरोप्यते । तटरूपल-क्ष्यार्थावगतिर्गङ्गाशब्दादेव भवतीत्यार्थो व्यापारः शब्द आरोपितः ।[3]

एवं तटस्य प्रवाहरूपमुख्यार्थवाचकगङ्गाशब्देन सह परम्परासम्बन्धादर्थ-निष्ठोऽपि व्यापारः शब्दनिष्ठो ज्ञेयः, वाच्यधर्मस्य वाचके शब्द आरोपात् ।

---

१. मम्मटः, काव्य-प्रकाशः, २, ४ ।

२. यः स तत्त्वसमारोपस्तत्सम्बन्धनिबन्धनः ।
मुख्यार्थबाधे सोऽन्यार्थं सम्बन्धमनुमापयेत् ॥
तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम् ।
गुणवृत्तेर्द्विरूपायास्तत्प्रतीतिरतोऽनुमा ॥

महिमभट्टः, व्यक्तिविवेकः, पृ० ११६ ।

३. अन्तरं मुख्येन व्यवधानं तेन सहितो योऽर्थस्तीरादिस्तन्निष्ठः स्वनि-रूपितसम्बन्धस्य स्वावृत्तित्वाल्लक्ष्यनिष्ठः । मुख्यार्थधीपूर्वकत्वात् व्यव-हितार्थनिष्ठापि मुख्यसम्बन्धितीरविषयत्वाद्वृत्तेर्तीरविषयतासम्बन्धेन शब्दनिष्ठेत्यर्थः ।

कमलाकरभट्टः

उद्धृत, सिंह, सत्यव्रत, (डॉ०), हिन्दी साहित्यदर्पण, पृ० ५१ ।

मुकुलभट्टाचार्येणापि अभिधावृत्तिमातृकायां लक्षणाया अर्थनिष्ठव्यापारत्वं स्वीकृतम् । यथोक्तं तेन—

**शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता ।**
**अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ॥**[1]

यत् स आरोपितः **शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा**[2] इत्यस्य काव्यप्रकाशवृत्त्यन्तर्गतस्य **सान्तरार्थनिष्ठः** इति पदस्य विसंवादि व्याख्यानमुपलभ्यते । यथाहि—प्रदीपकारेण श्रीगोविन्दठक्कुरेणास्य **शक्यव्यवहितलक्ष्यार्थविषयत्वाच्छब्दे आरोपित एव स व्यापारः । वस्तुतोऽर्थनिष्ठ एवेत्यर्थः**[3] इति व्याख्यानं कृतम्, तत्सद्वैद्येन काव्यप्रदीपटीकाकारेण **सान्तरार्थनिष्ठः** इत्यत्रार्थपदं लक्ष्यार्थपरमिति प्रदीपकारस्याशयो निरधारि ।[4] निष्ठपदस्य **सर्वं वाक्यं कार्यनिष्ठमिति** प्रभाकरवचनाद् बोधकेऽर्थे प्रयोगः । तेन **सान्तरार्थनिष्ठः** इत्यस्य अन्तरं व्यवधानं तेन सहितः सान्तरः, ईदृशो योऽर्थो लक्ष्यार्थ इत्यर्थः, तन्निष्ठस्तद्विषयकस्तद्बोधक इत्यर्थः पर्यवसितो भवति । अनेन व्याख्यानेन लक्षणा लक्ष्यार्थविषयको व्यापार इति सिद्धम् । उद्योतटीकाकारेण नागेशभट्टेन **साक्षादर्थनिष्ठः सान्तरा परम्पराशब्दनिष्ठ इत्यर्थः**[5] इति सान्तरार्थनिष्ठपदस्य व्याख्यानं कृतम् ।

ए० बी० गजेन्द्रगद्करमहाभागानां मते प्रदीपकारकृतं **सान्तरार्थनिष्ठ** इत्यस्य पूर्वोक्तं व्याख्यानं दुष्टम् । काव्यप्रकाशवृत्तौ **मुख्येन अमुख्योऽर्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा**[6] इत्येतल्लक्षणाविवेचनप्रसङ्गे निरूपितमास्ते । तत्र **सान्तरार्थनिष्ठः** इति पदस्य यो लक्ष्यार्थविषयकोऽर्थः क्रियते सोऽर्थः पुनरुक्तिदोषभाक् । **मुख्येन अमुख्योऽर्थो लक्ष्यते** इति

१. मुकुलभट्टः, अभिधावृत्तिमातृका, पृ० २ ।
२. मम्मटः, काव्यप्रकाशः, पृ० ४३ ।
३. पण्डितदुर्गाप्रसादः, गोविन्दठक्कुरकृतः काव्यप्रदीपः, प्रभाटीका, पृ० २७ ।
४. सान्तरः शक्यव्यवहितो योऽर्थो लक्ष्यार्थस्तन्निष्ठः, तद्विषय इत्यर्थः । सर्वं वाक्यं कार्यनिष्ठम् इति गुरूक्तिवत् । तथा च शब्दस्य लक्ष्यार्थविषयत्वं लक्षणाधीनमित्यतः शब्दे लक्षणारोप इति भावः ।
पण्डितदुर्गाप्रसादठक्कुरकृतः काव्यप्रदीपः, प्रभा टीका, पृ० २७ ।
५. अभ्यङ्करः, वासुदेवशास्त्री, श्रीमम्मटविरचितः काव्यप्रकाशः, उद्योतटीका, पृ० ३९ ।
६. मम्मटः, काव्यप्रकाशः, पृ० ४३ ।

काव्यप्रकाशवृत्तिग्रन्थेनैव तदर्थावगतेः। तथा सति **सान्तरार्थनिष्ठः** इति पदस्य वृत्तावनुप्रवेशो निर्हेतुकः स्यात्।[1]

अनेन प्रकारेण प्रदीपकारस्य गोविन्दस्य मतं बलवद् युक्तिप्रामाण्येन निराकृत्य ए० बी० गजेन्द्रगद्करमहाभागैः **सान्तरार्थनिष्ठः** इति पदमधोलिखितप्रकारेण व्याख्यायद्भिः स्वकीयं मतमस्मिन् विषय एवं प्रत्यपादि—

**अन्तरमन्तरालं मध्यावकाशः तेन सहितः सान्तरः मध्यावकाशस्थितः इत्यर्थः। सान्तरश्च असौ अर्थश्च सान्तरार्थः वाच्यार्थः इत्यर्थः। शब्दः प्रथमं वाच्यार्थमभिधत्ते, तदनन्तरं लक्ष्यार्थः प्रतीयते। अतो वाच्यार्थः शब्दलक्ष्यार्थयोः अन्तराले स्थितः। तेन सान्तर इति कथ्यते। तस्मिन् सान्तरार्थे वाच्यार्थे स्थितः वाच्यार्थनिष्ठः।**[2]

अस्मिन् व्याख्यानेऽर्थपदस्यार्थो वाच्यार्थः। तेन लक्षणा अर्थव्यापार इत्यवगतं भवति। वाच्यार्थद्वारिका लक्ष्यार्थावगतिर्भवतीति लक्षणाया अर्थव्यापारत्वं सिद्धम्। वाच्यार्थे स्थितोऽप्यसौ व्यापारः शब्द आरोप्यत इत्येवं मम्मटभट्टस्य हृदयं गजेन्द्रगद्करमहानुभावैः प्राकाशि।

## शुद्धा लक्षणा

उपचारामिश्रिता लक्षणा शुद्धा। उपचारो हि नाम सादृश्यसम्बन्धेन प्रवृत्तिः सादृश्यातिशयमहिम्ना भिन्नयोर्भेदप्रतीतिस्थगनं वा। अतो यत्र शक्यलक्ष्यार्थयोः सादृश्येतरसामीप्यतात्स्थ्याङ्गाङ्गीभावादिसम्बन्धैरवस्थानम्, तत्रोपचारामिश्रा लक्षणा शुद्धा। तद्यथा—**गङ्गायां घोषः** इत्यत्र गङ्गापदस्य शक्यार्थस्य जलप्रवाहरूपस्य लक्ष्यार्थेन तटेन सह सामीप्यरूपः सम्बन्धः, अतः सादृश्यनिबन्धनस्योपचारस्यादर्शनादियं शुद्धा लक्षणा। कुन्ताः प्रविशन्तीत्यादौ शक्यलक्ष्यार्थयोः संयोगसम्बन्धः। मञ्चाः क्रोशन्तीत्यादौ तात्स्थ्यसम्बन्धः। अत एवोपाचारेणामिश्रितत्वादत्र शुद्धा लक्षणा।

---

१. गजेन्द्रगद्करः, मम्मटविरचितः काव्यप्रकाशः, टिप्पणम्, पृ० २५७।

२. (क) गजेन्द्रगद्करः, मम्मटविरचितः काव्यप्रकाशः, टिप्पणम्, पृ०२५७।
(ख) सान्तरः अन्तरा भवः, आन्तरालिकः शब्दस्य लक्ष्यार्थस्य च मध्यवर्ती यो वाच्यार्थस्तन्निष्ठस्तदाश्रितो व्यापारो लक्षणा, शब्दे तु परम्परासम्बन्धेन आरोपित इति स्वारसिकोऽर्थः सुधीभिः समुपादेयः।

चौधुरी नरेन्द्रनाथ शर्मा, काव्यतत्त्वसमीक्षा, पृ० ७६।

## गौणी-लक्षणा

उपचारमिश्रा लक्षणा गौणी। यथा हि—**गौर्वाहीकः** इत्यादौ गोवाहीकयो-र्जाड्यमान्द्यादिगुणैः सामानाधिकरण्येनानवस्थानात् सादृश्यसम्बन्ध उपचारापर-पर्यायः। भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः। भिन्नत्वेन प्रतीयमानौ गोवाहीकौ जाड्यमान्द्यादिगुणानामुभयोः समानभावेन दर्शनादभिन्नौ प्रतीयेते। अतः गोपदाद् वाहीकरूपिणोऽर्थस्यावगतिः सादृश्यसम्बन्धनिबन्धनीति सादृश्य-सम्बन्धस्योपचारापरपर्यायस्य सद्भावाद् गौणी लक्षणा। गुणेभ्यो जाड्यमा-न्द्यादिभ्य आयाता लक्षणा गौणीत्यन्वर्थकमभिधानम्। **मुखं चन्द्रः** इत्यादावपि आह्लादकत्वादिगुणसादृश्यवशाद् गौणी लक्षणा। एवं गौण्यां लक्षणायां सर्वत्र शक्यलक्ष्यार्थयोरुपचारसम्बन्धेनावस्थानम्।

## मीमांसकमतेन गौणी लक्षणातिरिक्ता वृत्तिः

मीमांसका गौणीं लक्षणातो भिन्नां वृत्तिं सम्प्रतिपद्यन्ते। तथा चोक्तं कुमारिलभट्टेन—

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।**
**लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥**[1]

अयमाशयः। **गङ्गायां घोषः** इत्यादौ तटरूपार्थावगतिर्लाक्षणिकी गङ्गा-प्रवाहतटयोरविनाभावात्। अतोऽभिधेयेनार्थेनाविनाभूतः सम्बद्धोऽर्थो यत्र प्रती-यते, तत्र लक्षणावृत्तिः **मञ्चाः क्रोशन्तीत्यादौ**। अत्र मञ्चपदार्थेनाविनाभूतः सम्बद्धो बालो लक्ष्यते, अतो मञ्चस्थे बालरूपेऽर्थे लक्षणा। परं गौण्यां वृत्त्याम-भिधेयार्थलक्ष्यार्थयोर्नाविनाभावेन प्रतीतिरपि त्वादावभिधया **सिंहो माणवकः** इत्यादौ सिंहत्वमाणवकत्वादीनां साक्षात् सङ्केतितानामर्थानामवगतिः, तदनन्त-रमन्वयानुपपत्त्या शौर्यपराक्रमत्वादिगुणयोगात् सिंहमाणवकयोः परस्परं विभिन्नयोरप्यभेदः। **गङ्गायां घोषः** इत्यत्र यथा प्रवाहतटयोरविनाभावः सिद्धः, न तथा **सिंहो माणवकः** इत्यत्र। लक्षणायां सामीप्यसंयोगतात्स्थ्यादीनां सद्भावात् मुख्यार्थेन सह लक्ष्यार्थस्य साक्षात् सम्बन्धः। अतः **गङ्गायां घोषः** इत्यत्र लक्षणायां कृतायां जलप्रवाहतटयोः सामीप्यसम्बन्धेनावस्थानात् प्रवाह-सम्बद्धस्य तटस्याव्यवधानेन भानम्। प्रवाहेण सम्बद्धस्तटरूपोऽर्थो लक्ष्यः। यथा

---

१. कुमारिलभट्टः, तन्त्रवार्तिकम्, १, ४, २२।

**गौरनुबन्ध्यः** इत्यादौ जात्या व्यक्तिरविनाभावेन लक्ष्यते, तथैव **यष्टीः प्रवेशय** इत्यादौ संयोगादिसम्बन्धवशाद् यष्टिधरार्थावगतिर्लाक्षणिक्यविनाभावमूला। परम् **अग्निर्माणवकः** इत्यादौ गौण्यां वृत्त्यां लक्ष्यमाणतैक्ष्ण्यादिगुणवशात् परम्परासम्बन्धेनाग्निमाणवकयोरभेदः, न तु साक्षात्सम्बन्धेन। **मञ्चाः क्रोशन्ती**त्यादौ यथा मञ्चमञ्चस्थयोः संयोगसम्बन्धवशादविनाभावः, न तथाग्निमाणवकयोः। इत्थं लक्षणायां वृत्तौ शक्यलक्ष्यार्थयोरव्यवहितसामीप्यादिसम्बन्धात्मकोऽविनाभावस्तत्प्रयोजकः, परं गौण्यां वृत्त्यां तु व्यवहितः सादृश्यसाधर्म्यादिप्राणः परम्परासम्बन्धस्तत्प्रवृत्तौ हेतुरिति साक्षात्परम्परासम्बन्धयोर्भेदेन गौणी वृत्तिर्लक्षणातो भिद्यत इति मीमांसकानां निर्गलितार्थः। परम्परासम्बन्धस्तावद्यथा—**गौर्वाहीकः** इत्यत्र प्रथममभिधया शक्यार्थस्य प्रतीतिः, अनन्तरं जाड्यमान्द्यादिगुणानां बोधः, पश्चाच्च लक्ष्यमाणजाड्यमान्द्यादिगुणमुखेन गोवाहीकयोरभेदप्रतीतिरिति परम्परासम्बन्धेन गोवाहीकयोरभेदः। सरस्वतीकण्ठाभरणप्रणेत्रा भोजराजेनापि गौणी लक्षणाभिन्ना वृत्तिः स्वीकृता। यथोक्तं तेन—

**शब्दो हि मुख्यागौणीलक्षणाभिरर्थप्रकरणादिसम्पादितसाचिव्याभिस्तिसृभिरेव वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तं भवति। तद्यथा—गौरित्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति। स एव तिष्ठन्मूत्रत्वादिगुणसंपदमपेक्ष्य वाहीकादौ प्रयुज्यमानो गौणीं वृत्तिमनुभवति।**[1]

तन्न। यदि साक्षात्परम्परासम्बन्धाभ्यां वृत्तिभेदः कल्प्येत, तदा सम्बन्धानामानन्त्यात् वृत्तीनामप्यानन्त्यं प्रसज्येत। किञ्च, मुख्यार्थबाधादिलक्षणालक्षणघटकानि गौणीवृत्तिलक्षणावृत्तीतिवृत्तिद्वयसमानानि। नहि सम्बन्धमात्रकृते भेदे वृत्त्यन्तरपरिकल्पनगौरवं सह्यमिति नास्ति गौण्या वृत्त्यन्तरत्वम्।[2]

---

१. पण्डितकेदारनाथः दुर्गाप्रसाद; धारेश्वरभोजदेवविरचितं सरस्वतीकण्ठाभरणम् पृ० ७३५।

२. (क) मुख्यार्थसम्बन्धरूढिप्रयोजनान्यतरानुरोधस्तावदुभयत्र समानः। साक्षादसाक्षात्त्वेन सम्बन्धमात्रवैचित्र्यं किञ्चिदवान्तरवैधर्म्यमाधत्ते इति लक्षणाविशेष एव गौणी।

भट्टाचार्यः, शिवप्रसादः, मम्मटविरचितः काव्यप्रकाशः, चण्डिदासकृता दीपिका टीका पृ० ५१।

(ख) तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणाप्रभेद एव। तत्सदृशेऽपि तन्निरूपितसादृश्याधिकरणत्वपरम्परासम्बन्धसत्त्वात्।

अप्पयदीक्षितः, वृत्तिवार्त्तिकम्, पृ० १५।

## मुकुलभट्टधिया गौणीशुद्धालक्षणयोर्भेदे बीजम्

मुकुलभट्टाचार्याणां मते गौणीशुद्धालक्षणयोर्भेदः नोपचारमूलकः, प्रत्युत गौण्यां लक्षण यां शक्यलक्ष्यार्थयोरभेदेन प्रतीतिः, शुद्धायां तु भेदेनेति शक्यार्थ-लक्ष्यार्थयोर्भेदाभेदावेव लक्षणाया भेदनियामकौ स्तः। अयमाशयः। गौणीलक्ष-णायां जाड्यमान्द्यादिगुणानामुभयत्र समानभावेनावस्थानाच्छक्यार्थलक्ष्यार्थ-योरभेदः। अत एव **गौर्वाहीकः** इत्यादौ गोवाहीकयोः सामानाधिकरण्यम्। परं शुद्धायां लक्षणायां **गङ्गायां घोषः** इत्यादौ प्रवाहतटयोः शक्यार्थलक्ष्यार्थयो-र्भेदेन प्रतीतिः।

परं मम्मटाचार्येण मुकुलभट्टाचार्यस्य मतमित्थं प्रत्याक्षिप्तम्। यदि शुद्धायां लक्षणायां जलप्रवाहतटरूपिणोः शक्यार्थलक्ष्यार्थयोर्भेदेन प्रतीतिः स्यात्, तदा शैत्यपावनत्वादिधर्माणां प्रतिपिपादयिषितानां प्रतीतिरेव न भवेत्। शैत्यपावनत्वादयो धर्माः प्रवाहतटयोरभेद एव प्रतिपन्ना भवन्ति, न तु तयोर्भेदे। यदि गङ्गापदाल्लक्ष्यमाणं तटं शक्यार्थात् प्रवाहाद् भिन्नम्, तदा प्रवाहनिष्ठानां शैत्यपावनत्वादिधर्माणां प्रतीत्यै तटो नालम्। अतो **गङ्गायां घोषः** इति वचनमसम्बद्धं सत्त्याज्यमेव स्यात् सर्वथा। नहि **गङ्गातटे घोषः** इत्यनभिधाय **गङ्गायां घोषः** इति कथनं प्रयोजनवत्। अत उपचारसम्बन्धेनैव गौणीलक्षणा शुद्धातो भिद्यते, न तु शक्यार्थलक्ष्यार्थयोर्भेदा-भेदप्रतीतिवशात्।[1]

## गौण्यां लक्षणायां लक्ष्यार्थावगतिप्रक्रिया

काव्यप्रकाशकारेणाचार्येण मम्मटेनास्मिन् विषये त्रीणि मतानि समु-

---

१. अथ गङ्गाशब्देन तटप्रतिपादने गङ्गासम्बन्धस्तत्र प्रतीयते, तदेव तद्बी-जमिति चेन्न। एवं हि गङ्गातटे घोषः इति मुख्यशब्दप्रयोगेऽपि तत्-प्रतीतिः स्यात्। तत्सम्बन्धप्रतीतौ विशेषाभावात्।

अभ्यङ्करः, वासुदेवशास्त्री, मम्मटविरचितः काव्यप्रकाशः, प्रदीपटीका, पृ० ४४।

(ख) जहल्लक्षणोदाहरणेऽपि तीरे प्रवाहाभेदाभिव्यक्तिपूर्वकमेव तत्र तद्गतातिशयितशैत्यपावनत्वादिफलप्रतीतेः। तीरे प्रवाहतादात्म्यप्रतीत्य-भावे तत्र प्रवाहगतातिशयितशैत्यादेः प्रत्ययासम्भवात्।

—अप्पयदीक्षितः, वृत्तिवार्तिकम्, पृ० १९-२०।

ट्टङ्कितानि।[1]

**(१) प्रथमं मतम्**

**गौर्वाहीकः** इत्यत्र गौण्यां लक्षणायां प्रथममभिधया वाचकात् गोपदात् सामान्यस्य गोत्वरूपिणोऽर्थस्यावगतिः, पश्चाच्च गोत्ववाहीकत्वयोः सामानाधिकरण्येऽनुपपन्ने गोपदाज्जाड्यमान्द्यादयो गुणा लक्ष्यन्ते। तदा जाड्यमान्द्यादिगुणवान् गौरिति लक्ष्यार्थेवगते सति, जाड्यमान्द्यादिगुणानां वाहीकेन सहाभेदप्रतिपादनार्थं पुनरभिधावलम्ब्यते। एवं प्रथममभिधा ततो लक्षणा तदनन्तरं पुनरभिधेति तिस्रो वृत्तयो गोशब्दस्य वाहीकार्थाभिधाने व्याप्रियन्ते। ततश्च जाड्यमान्द्यादयो गुणा एव लक्ष्यन्ते, नतु तद्धर्मी वाहीकः। अतो धर्मधर्मिणोरभेदप्रतिपादनार्थं धर्मी वाहीकः पुनः शक्त्या बोध्यत इति कृत्वा पुनरभिधावलम्ब्यते। गोगता जाड्यमान्द्यादयो लक्ष्यमाणा गुणा एव वाहीकार्थाभिधाने प्रवृत्तिनिमित्ततामुपयान्ति। एषां गुणानां साहचर्येणैवागौरपि वाहीको गोपदव्यपदेश्यो भवति। तथा सति प्रथममभिधया गोत्वरूपः शक्यार्थोऽभिधीयते, अनन्तरं लक्षणया जाड्यमान्द्यादयो गोगता गुणा लक्ष्यन्ते, पश्चाच्च धर्माणां धर्मिणि वाहीकेऽभेदान्वयार्थं, जाड्यमान्द्यादीन् गोगतान् गुणान् प्रवृत्तिनिमित्तीकृत्य पुनरुत्थितयाभिधया **जाड्यमान्द्यादिगुणवान् वाहीकः** इत्यर्थस्यावगति र्भवति।

**(२) द्वितीयं मतम्**

अत्र प्रथममतविरोधिन इत्थं प्रत्यवतिष्ठन्ते। जाड्यमान्द्यादिगुणवान् वाहीक इत्यमुमर्थमवगमयितुमभिधाया अत्र द्विर्व्यापारः। तन्न युक्तियुक्तम्। गोपदस्य साक्षात् सङ्केतितोऽर्थोऽभिधेयः सास्नालाङ्गूलवान् गौरेव, नतु वाहीकः। अतो गोपदस्य वाहीकरूपिण्यर्थे साक्षात् सङ्केतेऽनुपपन्नेऽपि, यदि गोपदादेवाभिधया वाहीकार्थप्रतीतिर्भवतीति स्वीक्रियते, तर्हि **सङ्केतितस्यैव शाब्दबोधः** इति नियमभङ्गात् यस्मात् कस्मादपि पदाद्यस्य कस्याप्यर्थस्य प्रतीतिप्रसङ्गः। महती च तेनाव्यवस्था। किञ्च **शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः** इति नयेन एकदा विरतो व्यापारो न पुनर्व्याप्रियते। अतो गोत्वरूपिण

---

१. अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, नतु परार्थोऽभिधीयते इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यते इत्यपरे।

—मम्मटः, काव्यप्रकाशः, पृ० ४९

मर्थं प्रत्याय्योपरताऽभिधा वाहीकरूपिणमर्थं बोधयितुं न प्रभवति । उपरताया स्तस्या उद्बोधकपदाभावे पुनरुत्थानमसम्भवम् । अतः स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न परार्थोऽभिधीयते इति द्वितीयमतावलम्बिना-माशयः । एतन्मते गोवाहीकयोरन्वयेऽनुपपन्ने गोगतजाड्यमान्द्यादिगुणसाह-चर्याद् वाहीकगतानां जाड्यमान्द्यादिगुणानां लक्षणया प्रतीतिः । एवं लक्षणया गुणा एव लक्ष्यन्ते, ननु वाहीकरुपोऽर्थोऽभिधीयते ।

**(३) तृतीयं मतम्**

अत्र द्वितीयमतविरोधिन एवं प्रत्याख्यानमारभन्ते । यदि गुणा लक्ष्यास्तर्हि कथं गुणिनो वाहीकस्य प्रतीतिः । ननु गुणैर्गुणिनो वाहीकस्य प्रतीतिरविना-भावादेव, गुणैर्गुणिन आक्षेपादिति चेन्न, **शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते** इत्यभियुक्तोक्तिमनुरुध्याक्षेपलभ्यस्यार्थस्य शाब्देऽर्थे प्रवेशाभावात् । शब्दवृत्त्या समुपस्थाप्यस्यार्थस्यैव शाब्देऽन्वये प्रवेशो युक्तियुक्तः, ननु प्रमाणान्तरप्राप्तस्यार्थ-स्य । नहि शब्दवृत्तिव्यतिरिक्तप्रमाणलभ्यस्यार्थस्य शब्दप्रमाणलभ्यैरर्थैः सहान्वयः सम्पादयितुं शक्यः । अत आक्षेपप्रमाणाद्यदि वाहीकस्य गुणिनः प्रतीतिस्तर्हि शब्दवृत्त्यनुपस्थाप्यत्वात्तस्य वाहीकरूपिणोऽर्थस्य शाब्दबोधोऽनुपपन्नः । अत-स्तृतीये मते जाड्यमान्द्यादिगुणवान् वाहीको लक्ष्यार्थः । वाहीकस्याभिधया ग्रहणेऽनुपपन्ने सति, वाहीकस्य प्रतीतिर्लक्षणयैव सञ्जायते । एवं **गौर्वाहीकः** इत्यत्र गोपदार्थस्य वाहीकपदार्थेन सहान्वयानुपपत्तौ गोगतजाड्यमान्द्यादिगुण-साहचर्यात्तद्गुणयुक्तो वाहीको लक्ष्यत इति स्वीकृते सर्वोपद्रवप्रशान्तिः सर्वञ्च निर्मलम् । तथा च गोशब्दादभिधया गोत्वरूपिणोऽर्थस्यावगतिः, जाड्यमान्द्या-दिगुणानां गोवाहीकयोः समानरूपेणावस्थानाल्लक्षणया तद्वान् वाहीकोऽर्थो लक्ष्यत इत्यालङ्कारिकाणां सिद्धान्तः ।

**लक्षणायाः षट् भेदाः**

शुद्धाया लक्षणायाश्चत्वारो भेदाः । तद्यथा—

**(१) उपादानलक्षणा शुद्धा**

**स्वसिद्धये पराक्षेपः**[1] इत्युपादानलक्षणं मम्मटेन काव्यप्रकाशे निर्दिष्टम् । तथाहि—कुन्ताःप्रविशन्तीत्यादौ कुन्तपदस्य शक्यार्थः स्वान्वयसिद्धचर्थं कुन्तधारिपुरुषरूपमर्थमाक्षिपतीत्यतः स्वसिद्धये पराक्षेपादुपादानम् । एवमुपादान-लक्षणायां कुन्तरूपमुख्यार्थादधिकस्य कुन्तिरूपपुरुषत्वादेः सहायकत्वेनोपादानं स्वीकारः। अत एव कुन्तधारिणः सहायकत्वेनोपादानादुपादानलक्षणा शुद्धा ।

१. मम्मटः, काव्यप्रकाशः, २,१० ।

इयमेवाजहत्स्वार्थेति व्यपदेशेनाप्यभिधीयते ।

**(२) लक्षणलक्षणा शुद्धा**

'**परार्थं स्वसमर्पणमि**'ति[1] मम्मटभट्टेन लक्षणस्य लक्षणं प्रोक्तम् । तथाहि—**गङ्गायां घोषः**इत्यादौ गङ्गापदस्य मुख्योऽर्थः प्रवाहरूपः स्वसिद्ध्यर्थं स्वात्मानं तटरूपे लक्ष्ये परार्थे समर्पयति । अतस्तटरूपे परार्थे प्रवाहरूपस्य स्वार्थस्य समर्पणादत्र लक्षणम् । एवं लक्षणलक्षणायां प्रवाहरूपशक्यार्थस्य तट-रूपे परार्थे स्वात्मन उपसर्जनात् परार्थं स्वसमर्पणाल्लक्षणलक्षणा शुद्धा । इयमेव जहत्स्वार्थेतिनाम्नापि प्रसिद्धा ।

**(३) सारोपा लक्षणा शुद्धा**

सारोपपदस्यार्थः प्रदीपकारेणैवं विवृतः '**विषयविषयिणोर्भेदेनोपन्यासस्या-त्रारोपपदार्थत्वात्**' ।[2] तेन '**विषयविषयिणोर्भेदेनोपन्यास आरोपः**' इत्यर्थः । तथा सति यत्रारोप्यमाणो विषयी अप्रस्तुतः, प्रस्तुतेनारोपविषयेण सह भेदेनो-पन्यस्यते, तत्र सारोपा । यथा **आयुर्घृतमित्यादौ** आयुर्घृतयोरुभयो विषय-विषयिणोः शब्देन कथनं कृत्वा द्वयोः सामानाधिकरण्यं प्रतिपाद्यते । अतोऽत्र तयोर्भेदेनोपन्यासात् सारोपा लक्षणा । शुद्धा चेयं, उपचारव्यतिरिक्तकार्य-कारणभावदर्शनात् । तथाहि—अत्रायुः कार्यं तद्वर्धकं घृतञ्च कारणमिति भेदेनोपन्यस्तयोर्विषयविषयिणोर्मध्ये कारणकार्यभावदर्शनादुपचारामिश्रा शुद्धा सारोपा लक्षणा ।

**(४) साध्यवसाना लक्षणा शुद्धा**

विषयिणा विषयतिरोभावोऽध्यवसानपदार्थः ।[3] तद्यथा—**आयुरेवेद**मित्यादौ विषयिण आयोरेव कथनं, तेन च विषयस्य घृतस्यापह्नवः । अतो विषयिणा आरोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तःकृते निगीर्णे सति, साध्य-वसाना लक्षणा । अत्र विषयविषयिणोः कार्यकारणभावेनावस्थानादुपचारामिश्रा शुद्धा साध्यवसाना लक्षणा ।[4]

---

१. मम्मटः, काव्यप्रकाशः, २,१० ।

२. पण्डितदुर्गाप्रसादः, गोविन्दठक्कुरकृतः काव्यप्रदीपः, पृ० ३१.

३. तत्रैव, पृ० ३२ ।

४. सारोपान्यातु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥
मम्मटः, काव्यप्रकाशः, २,११ ।

एवमुपादानलक्षणारोपसाध्यवसानैः शुद्धाया लक्षणायाश्चतुर्विधो विभाग उपपन्नः ।

### गौणीलक्षणाया द्वौ भेदौ

गौणी लक्षणा त्वारोपसाध्यवसानाभ्यां द्विविधैव ।

**(१) सारोपा लक्षणा गौणी**

**गौर्वाहीकः** इत्यत्र भेदेनोपन्यस्तयो र्विषयविषयिणो र्गोवाहीकयो र्जाड्यमान्द्यादिगुणमहिम्ना सामानाधिकरण्यमतोऽत्रोपचारसम्बन्धेन विषयविषयिणोरवस्थानात् सारोपा लक्षणा गौणी ।

**(२) साध्यवसाना लक्षणा गौणी**

**गौरेवायमित्यत्र** वाहीकस्य विषयस्यानुपादानात् विषयिणो गोरेवोपादानात् विषयिणा विषयनिगीर्णनात् साध्यवसाना लक्षणा । अगौरपि वाहीको गोपदव्यपदेश्यो जाड्यमान्द्यादिगुणानां साहचर्यात् । अतः सादृश्यसम्बन्धस्योपचारस्य सद्भावादुपचारमिश्रा साध्यवसाना गौणी लक्षणा ।

ननु गौण्यपि लक्षणा शुद्धालक्षणावत् स्वार्थोपादानेन परित्यागेन च चतुर्विधा सम्भवति । तद्यथा—**गौर्वाहीकः** इत्यत्र गोपदशक्यार्थस्य गोत्वस्य सर्वथा परित्यागः । नहि वाहीकः स्वरूपतो गौरतो गोत्वरूपो मुख्योऽर्थः स्वार्थमुपसर्जनीकृत्य लक्ष्यमर्थं बोधयति, अतो गौणी जहत्स्वार्था लक्षणात्र स्फुटा ।[१]

गोवाहीकोभयविषये **गाव एते समानीयन्तामित्यादौ** वाहीकेन लक्ष्यार्थेन सह गोत्वरूपिणः शक्यार्थस्याप्युपादानात् उपादानलक्षणा भवति । अतो यादृशी वार्ता **छत्रिणःप्रविशन्तीत्यादावजहत्स्वार्थायां** लक्षणायां तादृश्येवात्रापि गौण्यां लक्षणायाम् । शक्यार्थस्योभयत्र लक्ष्येऽर्थेन्वयात् । अतो गौणी लक्षणापि जहदजहत्स्वार्थत्वेन पुनर्भिद्यते शुद्धावदिति गौण्या लक्षणाया अपि चतुर्विधो विभाग उपपन्न इति पूर्वपक्षिण आशयः ।

अत्रोच्यते । अजहत्स्वार्थायां लक्षणायां हि शक्यार्थरूपस्य स्वार्थस्यात्यागः परमावश्यकः । अन्यथा अजहत्स्वार्थात्वमेव न स्यात् । तद्यथा—**कुन्ताः प्रविशन्तीत्यादौ** कुन्तपदस्य शक्यार्थस्य कुन्तरूपिणः कुन्तधारिभिः सहैव प्रतीतेः स्वार्थस्यात्यागः । नहि **कुन्तधारिणः** इति लक्ष्यार्थस्यावगतिः कुन्तरूपमुख्या-

---

१. 'गोवाहीकोभयानुगतजाड्यमान्द्यादिविशिष्टलक्षणाया जडो वाहीक इत्यन्वये गोरप्रवेशादिति भावः ।'

पण्डितदुर्गाप्रसादः, गोविन्दकृतःकाव्यप्रदीपः, वैद्यनाथतत्सत्कृता टीका, पृ० २८ ।

र्थव्यतिरिक्ता भवति । अतोऽजहत्स्वार्थायां लक्षणायां स्वार्थस्य सर्वथोपादानम् । तच्च सादृश्यनिबन्धनायां लक्षणायां नोपपद्यते । '**तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यमि**'ति तल्लक्षणम् । विभिन्नयोर्मुखचन्द्रयोरेवाह्लादकत्वादिगुणसामान्यात् सादृश्यमुपपन्नं भवति । अतो गौण्यां लक्षणायां सादृश्यसम्बन्धात् विषयविषयिणोर्भिन्नयोरेवाभेदः प्रदर्श्यते । नहि मुखस्य मुखेन सह चन्द्रस्य चन्द्रेण सह वौपमम्यवचनं स्वारसिकम् । विभिन्नावेव मुखचन्द्रावाह्लादकत्वादिगुणवशादुपचारेणाभिन्नौ प्रतीयेते ।

गौण्या लक्षणाया यद्यजहत्स्वार्थत्वेनापरो भेदः सम्प्रतिपद्यते, तदा स्वार्थोपादानात् सादृश्यसम्बन्धोऽसम्भवः । नहि स्वेन स्वस्य सादृश्यं क्वचिद् दृश्यते । यदि गौण्यां लक्षणायां सादृश्यसम्बन्धःशक्यलक्ष्यार्थयोर्मध्ये नान्तरीयकः, तदा स्वार्थस्य परित्याग आवश्यकः । यदि सादृश्येतरः सम्बन्धः शक्यलक्ष्यार्थयोरूररीक्रियते, तर्हि लक्षणाया गौणीत्वमेव न स्यात्, गौण्या लक्षणायाः सर्वथा सादृश्यसम्बन्धनिबन्धनत्वात् । अतः सादृश्यसम्बन्धेऽभ्युपगतेऽजहत्स्वार्थात्वमनुपपन्नम् ।[1]

## अप्पयदीक्षितमतेन शुद्धाया लक्षणायाः सारोपसाध्यवसानभेदखण्डनम्

अप्पयदीक्षितेनाचार्येण शुद्धाया लक्षणाया मम्मटभट्टादिप्रतिपादितौ आरोपाध्यवसानमूलौ भेदावपि प्रत्याख्यातौ । तद्यथा—**आयुर्घृतमायुरेवेदमित्यादौ** यत्कारणकार्यभावनिबन्धना सारोपा साध्यवसाना लक्षणा चोदाह्रियते, तदयुक्तम् । तयो र्द्वयोरप्युपादानलक्षणलक्षणाभ्यामव्यतिरेकात् । **आयुर्घृतमि-**

---

१. (क) मुख्यार्थसादृश्येन लक्षणा गौणी । न च तत्रैव तत्सादृश्यमस्ति येन मुख्येऽपि गौणीवृत्तिः स्यात् । शुद्धा त्वजहल्लक्षणा 'कुन्ताः प्रविशन्ती'त्यादौ विशेषणवाचिनो विशिष्टस्य सम्भवति, विशिष्ट विशेषणयोरेकदेश्येकदेशभावरूपसम्बन्धसत्वात् । अतः 'गाव एते समानीयन्ताम्' इत्यादावभिधालक्षणाभ्यामेवार्थद्वयप्रतिपादनम् । 'गङ्गायां जलं घोषश्च तिष्ठती'त्यत्रैवेति न गौण्या जहदजल्लक्षणाभेदसम्भवः ।'

अप्पयदीक्षितः, वृत्तिवार्तिकम्, पृ० १८,१९

(ख) अत्रोपचारबीजं सम्बन्धः सादृश्यमन्यो वा । आद्ये शक्यासादृश्यस्य शक्यावृत्तितया कथं शक्यस्यापि लक्ष्यता येनोपादानलक्षणा स्यात् । अन्त्ये कथं गौणी, सादृश्यसम्बन्धप्रयुक्तलक्षणाया एव गौणीत्वात् ।

पण्डितदुर्गाप्रसादः, गोविन्दकृतः काव्यप्रदीपः, पृ० २९

त्यादौ स्वार्थः परार्थं स्वात्मानमर्पयति, ततो **गङ्गायां घोषः** इतिवज्जहल्लक्षणात्वमस्याः सिद्धम् । नापि चायुर्घृतयोरभेदप्रतीतिरस्या जहत्स्वार्थातो भेदिका न्याय्या, **गङ्गायां घोषः** इत्यादावपि शक्यार्थलक्ष्यार्थयोरभेदेनैव प्रतीतेः । अन्यथा शैत्यपावनत्वादिधर्माणां प्रतीतिरेव न स्यात् । नापि च कार्यकारणभाव एव व्यावर्तकः, आश्रयाश्रयिभावस्यापि दर्शनादिति शुद्धाया जहदजहत्स्वार्थरूपेण द्वावेव भेदौ वृत्तिवार्तिककारेण अप्पयदीक्षितेन सिद्धान्तरूपेणाभ्युपगतौ ।[1]

**मुकुलभट्टाचार्यमतेन लक्षणाया भेदाः**

मुकुलभट्टाचार्येण निरन्तरार्थविषयत्वात्सान्तरार्थनिष्ठत्वाच्च एक एवाभिधाव्यापारो द्विविधः प्रोक्तः । अतो लक्षणाव्यापारोऽभिधायामेवान्तर्भवति तन्मते ।[2] तेन लक्षणा **'सान्तरार्थनिष्ठव्यापारः'** इति नाम्ना स्वीकृता । तदनुकृत्यैव मम्मटाचार्येण लक्षणां व्याख्यायता तस्याः सान्तरार्थनिष्ठत्वं प्रोक्तम् । इयं लक्षणा मुकुलभट्टाचार्यमते शुद्धत्वादुपचारमिश्रत्वाच्चादौ द्विविधा । तन्मत उपचारो द्विविधः । शुद्धो गौणश्च । परं मम्मटभट्टादिभिरालङ्कारिकैरेकविध एवोपचारः स्वीकृतः । तत्र मुकुलभट्टमते जाड्यमान्द्यशैत्याह्लादकत्वादिसादृश्यसम्बन्धव्यतिरेकेणान्येन कार्यकारणभावादिसम्बन्धेन वस्त्वन्तरस्योपचरणं शुद्ध उपचारः । प्रसिद्धं सादृश्यसम्बन्धमवलम्ब्य प्रवर्तमान उपचारो गौणोपचारः । स एव मम्मटभट्टप्रभृतिभिर्गौण्या लक्षणाया निबन्धनत्वेन स्वीकृतः । अतो गौणोपचारः प्रसिद्धोपचारापरपर्याय एव । द्विविधोऽयं शुद्धगौणरूप उपचार आरोपाध्यवसानाभ्यां पुनर्द्विधा विभज्यते मुकुलभट्टमतेन । इत्थमुपचारमिश्राया लक्षणायाश्चतुर्विधत्वम् । एवं मुकुलभट्टेन तेषु चतुर्षु भेदेषु शुद्धाया जहत्स्वार्थाजहत्स्वार्थरूपौ प्रसिद्धौ भेदौ संमेल्य लक्षणायाः षड्भेदाः प्रतिपादिताः ।[3] तद्यथा—

---

१. अत्रेदं प्रतिभाति—शुद्धासु साध्यवसायलक्षणाभेदकथनमयुक्तम्, परार्थं स्वसमर्पणस्याविशेषेण तस्य जहल्लक्षणानतिरेकात् । नहि तदविशेषेऽपि सारोपलक्षणायां विषयवाचकसामानाधिकरण्यकृतवैचित्र्यान्तरमस्ति येन तद्वदेव जहल्लक्षणातः पृथगुदाह्रियेत ।
अप्पयदीक्षितः, वृत्तिवार्तिकम्, पृ० १६

२. एवमयं मुख्यलाक्षणिकत्वविषयोपवर्णनद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च ।
मुकुलभट्टः, अभिधावृत्तिमातृका, पृ० ४

३. एतेन चतुर्विधेनोपचारेण सह पूर्वोक्तौ द्वौ लक्षणाभेदौ संकलय्य षट्प्रकारा लक्षणा वक्तव्या ।
मुकुलभट्टः, अभिधावृत्तिमातृका, पृ० १०




**मम्मटाचार्यदिशा लक्षणाया भेदाः**

मम्मटभट्टाचार्येण लक्षणाया भेदा एवं प्रतिपादिताः । तेनोपचार एकविध एव प्रोक्तः । तन्मते शुद्धा लक्षणा चतुर्विधा । गौणी च द्विविधैव । एवं मम्मटमतेऽपि लक्षणा षड्विधा ।[1] तद्यथा—




१. लक्षणा तेन षड्विधा
मम्मटः, काव्यप्रकाशः २,१२ ।

अत्रेदं प्रतिभाति यन्मुकुलभट्टोन्मीलितदिशमेवानुसृत्य मम्मटभट्टेन लक्षणायाः षड्भेदाः प्रोक्ताः। केवलमुच्चारपदस्यान्यथा अन्यथा व्याख्यानं कृतं द्वाभ्यामाचार्याभ्याम्। अनेनैतत् स्पष्टं यत् पूर्ववर्तिनो मुकुलभट्टाचार्यस्य प्रभावो लक्षणानिरूपणविषये परवर्तिनि मम्मटाचार्ये स्फुटं विभाव्यते।

## लक्षणाया निबन्धनं प्रयोजनं द्विविधम्। गूढमगूढञ्च

गूढं प्रयोजनं यथा **मुखं विकसितस्मितमि**[1] त्यादौ। अत्र विकासस्य पुष्पधर्मत्वान्मुखेऽनुपपत्तिरिति मुख्यार्थबाधः। परं विकासेनासङ्कुचितत्वसम्बन्धेन मुखस्य हृदयहारित्वं लक्ष्यते। तेन च सौरभादिरर्थो व्यङ्ग्यः सन् विशदीभूते सहृदयहृदयमुकुरे गोप्यमानतया चकास्ति। सर्वथा वशितसमुच्छलितादिभिरनन्वितैः पदैः सुन्दरीजनललामभूतेयं रमणीति गूढोऽर्थोऽभिव्यज्यते। अत एवंविधं प्रयोजनं गूढम्।

**उपदिशति कामिनीनां यौवनमद एव ललितानी**त्यादौ[2] चेतनेष्वेवोपदेशदानसामर्थ्याद् यौवने तदभावान्मुख्यार्थबाधः स्पष्टः। अत्र सामान्यविशेषसम्बन्धेन यौवनमदो ललितान्याविष्करोतीति लक्ष्यार्थावगतिर्भवति। यौवनोद्भेदे सति कामिनीनां ललितानि स्फुटीभवन्तीति व्यङ्ग्योऽर्थ उत्तानो गोप्यत्वं निधानवन्नापेक्षते। अतोऽसहृदयैरपि सौकर्येण तद्ग्रहणाद् व्यङ्ग्यार्थस्य लक्षणायाः प्रयोजनायितस्य स्फुटत्वमान्ध्रीवधूटीकुचकुम्भवदिति।

एवं मम्मटमते षड्विधा लक्षणा प्रयोजनस्य गूढागूढत्वेन द्वादशविधा भवति। एतेषु द्वादशभेदेषु रूढिलक्षणायाः समावेशात् साकल्येन त्रयोदश भेदा लक्षणाया भवन्ति। तद्यथा—

---

१. मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्।
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः॥
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरम्।
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते॥
मम्मटः, काव्यप्रकाशः, पृ० ५६

२. श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि॥
मम्मटः, काव्यप्रकाशः, पृ० ५७।




## विश्वनाथमतेन लक्षणाया भेदाः

साहित्यदर्पणकारेण विश्वनाथाचार्येण लक्षणाया अशीतिर्भेदाः समाख्याताः। तेन रूढिलक्षणाया उपादानलक्षणारोपाध्यवसानादिभिरष्टौ भेदाः प्रोक्ताः। प्रयोजनवत्याश्च लक्षणायाः प्रयोजनस्य गूढागूढत्वेन धर्मिधर्मगतत्वेन च द्वात्रिंशद् भेदाः। एवं पूर्वोक्तैरष्टभेदै द्वात्रिंशद्भेदान् संकलय्य चत्वारिंशल्लक्षणाभेदाः। अनन्तरं पदगतत्वेन वाक्यगतत्वेन च लक्षणाया अशीतिर्भेदा भवन्ति। तद्यथा—संलग्नं पत्रं द्रष्टव्यम्

## जयदेवमतेन लक्षणाया भेदाः

चन्द्रालोककारेण जयदेवेनापि लक्षणाया द्वाचत्वारिंशद् भेदाः कथिताः। तथाहि—लोकप्रसिद्धिवशाल्लक्षणा रूढा। व्यक्तिवेद्यं प्रयोजनञ्चापेक्ष्य व्याप्रियमाणा लक्षणा प्रयोजनवतीति भेदप्रदर्शनं प्राचीनपरिपाटीमनुरुध्य कृतम्। अनन्तरं प्रयोजनस्य गूढागूढत्वेन लक्षणायाः पुनर्विस्तरः। स्फुटास्फुटप्रयोजनयोश्च पुनस्ताटस्थ्यादर्थगत्वाच्च द्विविधो विभागः। अर्थस्थं प्रयोजनञ्चापि पुनर्लक्ष्यलक्षकनिष्ठत्वाद् द्विधा विभक्तं भवति। तदित्थं सर्वेषां भेदानां सम्मेलनेन प्रयोजनवत्या लक्षणायाः षट्त्रिंशद्भेदाः, रूढिलक्षणायाश्च षड्भेदाः,

सर्वेषां मिश्रणेन च द्वाचत्वारिंशद् भेदाः सम्पद्यन्ते । तद्यथा—




एवं जयदेवमतेन रूढिः लक्षणा षड्विधा । अनया दिशा प्रयोजनवत्यपि लक्षणा षड्विधा । तद्यथा—



लक्ष्यवाचकपदामीलनायाः (सारोपायाः) प्रयोजनवत्या लक्षणाया अपि रूढिलक्षणावत् सिद्धसाध्यसाध्याङ्गभेदतस्त्रयो भेदाः । लक्ष्यवाचकपदमीलनाया (साध्यवसानायाः) लक्षणाया अप्यनेनैव प्रकारेण त्रयो भेदाः । अनन्तरं लक्ष्यवाचकपदामीलनाया सिद्धलक्षणायाः प्रयोजनवत्याः पूर्वप्रदर्शितरेखाचित्रद्वारा षड्भेदाः ज्ञेयाः । साध्यसाध्याङ्गलक्षणयोरप्यनेनैव प्रकारेण षट् षट् भेदाः । एते भेदाः परस्परं मिलित्वा अष्टादश भवन्ति । लक्षकवाचकपदमीलनायाः (साध्यवसानायाः) अप्येवमेवाष्टा-

दश भेदा भवन्ति । एवं प्रयोजनाश्रयेण लक्षणायाः षट्त्रिंशद्भेदा भवन्ति । रूढिः लक्षणा च षड्विधैव । षट्त्रिंशद्भेदेषु षड् भेदान् संयोज्य साकल्येन जयदेवमते लक्षणाया द्वाचत्वारिंशद्भेदा भवन्तीति निष्कर्षः ।[1]

अयं लक्षणाभेदप्रपञ्चो न काञ्चिन्नवीनतामुद्घाटयति, ऋते जाटिल्यात् । एते भेदोपभेदाः परिगणिताः सन्तः सहस्रशाखिनो भवन्ति । लक्षणायां प्रयोजनं व्यक्तिवेद्यमिति कृत्वात्र लक्षणा सप्रपञ्चं निरूपिता । अविवक्षितवाच्यो ध्वनिर्लक्षणामुपजीव्य प्रवर्तते इत्यतोऽपि लक्षणास्वरूपविवेकः परमावश्यकः । किञ्च रूपकोपमोत्प्रेक्षादयोऽलङ्कारा लक्षणाभूमावङ्कुरिताः साहित्योद्याने पल्लविताः सन्तो विलसन्तीति तेषामियं प्रसवित्री । वस्तुतस्तु सर्वोऽप्यमलङ्कारप्रपञ्चः स्वशोभानिष्पत्तये लक्षणाव्यञ्जनावृत्तिद्वयमुखं प्रेक्षते । तथाहि—रूपकातिशयक्तौ चमत्कारः साध्यवसानलक्षणामूलः, समासोक्त्यादौ च व्यञ्जनाकृतं चारूत्वमिति लक्षणाव्यञ्जनाभ्यां सर्वमलङ्कारजगदोतप्रोतम् ।

---

१. लक्षणीयस्वशब्दस्य मीलनामीलनाद् द्विधा ।
लक्षणा सा त्रिधा सिद्धसाध्यसाध्याङ्गभेदतः ॥
स्फुटास्फुटप्रभेदेन प्रयोजनमपि द्विधा ।
विदुः स्फुटं तटस्थत्वादर्थगत्वाद् द्विधा बुधाः ॥
अस्फुटं चार्थनिष्ठत्वात्तटस्थत्वादपि द्विधा ।
लक्ष्यलक्षकनिष्ठत्वादर्थसंस्थमपि द्विधा ॥
जयदेवः, चन्द्रालोकः, ६,२-५ ।

# चतुर्थोऽध्यायः

## व्यञ्जनावृत्तिविचारः

**व्यञ्जनायाः स्वरूपम्**

अभिधालक्षणातिरिक्ता वृत्तिर्व्यञ्जना। तल्लक्षणं यथा—

**विरतास्वभिधाद्यासु ययार्थो बोध्यते परः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥[1]**

एवं वाच्यलक्ष्यार्थव्यतिरिक्तप्रतीयमानार्थद्योतकः शब्दस्यार्थस्य च व्यापारो व्यञ्जनेति फलितम्। इयं वृत्तिः काव्यशास्त्रज्ञैराविष्कृता। काव्ये नाभिधालक्षणाभ्यां निर्वाहः, यतोऽभिधा शब्दस्य मुख्यमर्थं लक्षणा च तत्सम्बद्धमर्थमवगमय्योपरमेते। परं काव्ये न केवलं वाच्यार्थलक्ष्यार्थाभ्यां कश्चिल्लाभः। दृष्टश्रुतोऽर्थः काव्ये यदि तथैवोपनिबध्यते, तर्हि न काचिच्चमत्कृतिस्तत्र। वाल्मीकिकालिदासादीनां काव्यं यत् सहृदसान् प्रीणयति, न तद् वाच्यवाचकभावेन लक्ष्यलक्षकभावेन वा, प्रत्युत प्रतीयमानार्थमहिम्नैव। प्रतीयमानोऽर्थश्च नाभिधया नापि च लक्षणया प्रत्याय्यः। अभिधा सङ्केतितमर्थमेव बोधयितुं प्रभवति। अतो यस्य शब्दस्य यस्मिन्नर्थे साक्षात् सङ्केतोऽसावभिधाया विषयः। अभिधायाश्च सामर्थ्यं नियतार्थप्रत्यायनपर्यन्तम्। लक्षणा च यद्यप्यभिधेयार्थातिरिक्तमर्थं बोधयति, परं तथाप्यसौ वाच्यार्थसम्बद्धमेवार्थं प्रत्याययति नासम्बद्धमर्थम्। अत एवाभिधापुच्छभूता लक्षणोच्यते। लक्षणया बोध्योऽर्थोऽपि सदा नियत एव। एवमभिधालक्षणाभ्यां नियतस्यैवार्थस्य प्रतीतेर्न्यायमीमांसादिशास्त्रेषु तयोरुपयोगः। परं सहृदयहृदयाह्लादके काव्ये वाच्यार्थलक्ष्यार्थातिरिक्तप्रतीयमानार्थस्य परमाह्लादकत्वेन ग्राह्यत्वादभिधालक्षणाभ्यां न निर्वाहः। अतएव यथा वाच्यार्थावगत्यर्थमभिधा वाच्यार्थसम्बद्धलक्ष्यार्थबोधार्थञ्च लक्षणाऽङ्गीक्रि-

---

१. (क) विश्वनाथः, साहित्य-दर्पणः, २.१२

(ख) यत्राभिधालक्षणयोर्न योगस्तात्पर्यशक्तेरपि न प्रसक्तिः।
शब्दस्य तत्र ध्वननाभिधानव्यापार एषोऽभिनवश्चकास्ति ॥
भट्टाचार्यः, शिवप्रसादः, मम्मट-काव्यप्रकाशः, श्रीधरी टीका, पृ० ४३

येते, तथैव प्रतीयमानार्थप्रत्यायनार्थं व्यञ्जना नाम्यतिरिक्ता वृत्तिः काव्यशास्त्रज्ञैः स्वीक्रियते।

प्रतीयमानार्थप्रत्यायनार्थं व्यञ्जनोपादीयत इत्यतः कोऽयं प्रतीयमानो नामार्थ इति प्रथमं ज्ञातव्यं भवति। शब्दानामर्थः प्राधान्येन द्विविधः। साक्षादभिहितोऽनभिहितश्च। तत्र साक्षादभिहितोऽर्थो यथा घटपदस्य घटत्वरूपोऽर्थः, पटपदस्य च पटत्वरूपोऽर्थः। अयमर्थो वाच्योऽभिधया बोध्यः। परं साक्षादनभिधेयोऽर्थो व्यङ्ग्यः प्रतीयमानः[1]। अयमर्थश्च व्यञ्जनया वेद्यतेऽतएव व्यङ्ग्योऽप्युच्यते। काव्ये चारुत्वं प्रतीयमानेनार्थेनैव न वाच्यार्थेन। यथोक्तमानन्दवर्धनाचार्येण—

**अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन। सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन।**[2]

प्रतीयमानेऽर्थ एव चमत्कारो न तु वाच्यार्थ इत्यधोलिखितेनोदाहरणेन स्पष्टं भवति।

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥**[3]

अत्र वाच्यप्रतीयमानौ द्विविधावर्थौ प्रतीतिपथमवतरतः। तत्र वाच्योऽर्थो नायिकाया विषयः। प्रतीयमानोऽर्थश्च तद्भर्तृविषयः।

अत्रायं वाच्यार्थः प्रथमं प्रस्फुटति। उपपतिमुपभुज्य गृहं प्रत्यागतां दष्टाधरां नायिकां दृष्ट्वा तदीयां प्रच्छन्नां रतिमभ्यूह्य तस्याः प्रियसखी प्रच्छन्नकामुकोपभोगरूपव्यलीकशङ्कानिराकरणार्थं नायिकाभर्तृसन्निधौ तामित्थं सम्बोधयति यदनीर्ष्यालोरपि भर्तुर्मनसि निजपत्न्याः सव्रणमधरं वीक्ष्य परपुरुषरतिशङ्का समुदेति। अतस्त्वया सभ्रमरपद्माघ्राणस्वभावात् महद्दुःखमामन्त्रितम्। खण्डिताधरां त्वां दृष्ट्वा तव भर्तावश्यमेव त्वां परपुरुषसम्भोगशङ्काकलङ्केन खलीकरिष्यति। यद्यपि तवाधरे व्रणं कमलाघ्राणशीलत्वाद् भ्रमरदंशजन्यं परं तथापि लोकोऽग्रत्वे युवतिजनचारित्र्यविषये सापवादः। मया त्वं

---

१. 'वस्तुचारुत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत्प्रतिपादयितुमिष्यते तद् व्यङ्ग्यम्' पण्डितः पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ४२६

२. तत्रैव, पृ० ५३३

३. तत्रैव, पृ० ७६

कार्यादस्मान्निवारिता, परं तथापि मद्वचनमनादृत्य त्वया सभ्रमरपद्माघ्राणरूपः स्वस्वभावो न परित्यक्तः। अतः स्वाग्रहस्य फलं त्वयाधुनावश्यमेव भोक्तव्यम्। नाहं किमपि कर्तुं समर्था।

अयं नायिकाविषयो वाच्यार्थः साक्षाच्छब्देनावेदितः। अयमर्थोऽविदग्धानामपि स्फुटः। नास्मिन्नर्थे काचिद् विच्छित्तिः। परं पद्यादस्मादेव वक्तृबोद्धव्यमहिम्ना निरन्तरं काव्याभ्यासवशात् विशदीभूतमनोमुकुरैः सहृदयैरपरोऽर्थोऽप्यास्वाद्यते। अयमेवार्थः प्रतिपत्तृप्रतिभानुप्राणितः प्रतीयमानः। तद्यथा-विदग्धा सखी नायिकायाः सविधे तद्भर्तारं दृष्ट्वा सव्रणस्याधरस्य दर्शनेन नायिकेयं भर्तुः कोपास्पदमवश्यमुपयास्यतीति शङ्कमाना सभ्रमरपद्माघ्राणवशादेवास्या अधरे व्रणं न तु कदापि परपुरुषसम्भोगवशादिति वैदग्ध्येन तद्भर्त्तारं ध्वनयति। अयमेवार्थोऽत्र चारुतामातनोति। स्वशब्दानावेद्यत्वादयमर्थो नाभिधेयः परं प्रतीयमानः। यथा यथा प्रकरणज्ञैर्विदग्धैरयमर्थो विचार्यते, तथा तथा घण्टानिर्ह्रादस्थानीयोऽयमर्थोऽपूर्वां विच्छित्तिमातनुते। नात्र नियतस्यैवार्थस्य प्रतीतिरभिधेयार्थवदपितु यथा यथा सहृदयै र्विचार्यते तथा तथा गाढीभवन्नपरिमेयो व्यङ्ग्योऽर्थः परिस्फुरति। तथाहि—**प्रियाया** इति सपत्नीविषयं पदं नायिकायाः सौभाग्यमुद्घाटयति। अद्येयं तव हृदयवल्लभा वाक्चातुर्येण परिरक्षिता व्यलीकशङ्काकलङ्कात्, पुनरेवमियं नोपभोग्या येन रदनदंशनादीनि सुरतचिह्नानि प्रकटितानि भवेयुरिति व्यङ्ग्यं चौर्यकामुकविषयम्। अहं परमविदग्धा यया खण्डिताधरादीनि सुरतचिह्नानि संगोप्य स्वसखी चौर्यरतिकलङ्कान्निरवकाशीकृतेति सख्या वैदग्ध्यं तटस्थसहृदयविषयं व्यङ्ग्यम्।

एवं वक्तृबोद्धव्यादीनामुपाधीनां पर्यालोचनयाऽनवधिर्व्यङ्ग्योऽर्थः परिस्फुरति। एवंविधः शब्देनानुक्तोऽर्थः साक्षाच्छब्देन नावेद्यते, प्रत्युत वक्तृबोद्धव्याद्युपाधिपर्यालोचनया सहृदयैरनुभूयते, अतो घण्टानिर्ह्रादस्थानीयोऽयमर्थः काव्ये परमरामणीयकाधायकः।[1]

काव्ये वाच्योऽर्थस्तु केवलमुपायमात्र एव। औपयिकोऽर्थस्तु प्रतीयमान एव। सहृदयाः काव्ये तावदेव वाच्यार्थमुपाददति, यावदसौ प्रतीयमानार्थद्योतने सहकारितामवलम्बते। तदवगतौ तेषामास्वाद्विषयोऽर्थः प्रतीयमान एव।

---

१. मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥
आनन्दवर्धनः, ध्वन्यालोकः ३, ३८।

रसिकजनललामभूतेनानन्दवर्धनाचार्येण प्रतीयमानार्थस्य स्वरूपमेवं निर्दिष्टमास्ते—

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥**[1]

अयमाशयः। यथा रमणीनां कामिजनहृदयवल्लभता नालङ्कारेषु नाप्यवयवेष्ववशिष्टा, प्रत्युत कटककेयूरावतंसकाञ्च्यादिलौकिकाभूषणव्यतिरिक्ते मुखाधरचिबुकाद्यवयवेभ्योऽप्यतिरिक्ते लावण्ये एव तासां कामिजनहृदयावर्जकता, तथा काव्येऽपि प्रतीयमानोऽर्थः सहृदयहृदयसमास्वाद्य आभूषणकल्पवाच्यार्थाद् व्यतिरिक्तः स्वशब्देनानुक्तो ललनालावण्यवच्चकास्ति। यथा काणत्वादिशरीरावयवदोषरहितायां विविधकटककेयूरादिविभूषणविभूषितायामपि कामिन्यां लावण्यादर्शनात् सौन्दर्यरत्नवैकटिकानां प्रीतिर्न जायते, तथैव विविधानुप्रासोपमाद्यलङ्कारभूषितो वाच्यार्थश्चारुत्वात्मनः प्रतीयमानार्थस्यादर्शनाल्लावण्यशून्याङ्गनावत् सहृदयहृदयं नावर्जयति। यथा च शरीरावयवोपस्कारकभूषणरहिताया अपि कामिन्या लावण्यमेव परमं भूषणम्, तथैव स्वशब्देनानभिधीयमानः प्रतीयमानोऽर्थ एव काव्यकामिन्या लावण्यकल्पं परमं सौभाग्यम्।

प्रतीयमानोऽर्थः साक्षान्नाभिधीयते, प्रत्युताभिव्यज्यते। अतएव रमणीयता तत्र पदं निदधाति। तद्यथा—

**सादरवितीर्णयौवनहस्तावलम्बं समुन्नमद्भ्याम्।**
**अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥**[2]

इत्यत्र त्वदीयोन्नतकुचावलोकनेन कस्य मन्मथो नोज्जृम्भत इति स्वशब्देनानभिहितः प्रतीयमानोऽर्थो यथा सहृदयहृदयानुरञ्जकः, न तथा तारुण्येनोन्नतौ तव स्तनाविति स्वशब्देनावेदितः स्फुटोऽर्थः।
यथावा—

**सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।**
**हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥**[3]

इत्यत्र प्रदोषसमये त्वयाऽऽगन्तव्यमिति स्वशब्देनानभिहितोऽर्थो हसन्नेत्रार्पिताकूतमित्यादिनाविष्कृतः। अतः शब्दस्य व्यञ्जकत्वविघटनाच्छब्देनैवोक्तोऽयमर्थोऽप्रतीयमानः काव्ये न चारुत्वाधायकः। परमसावेवार्थो यदा

---

१. तत्रैव १, ४
२. शास्त्री, पं० पट्टाभिरामः, ध्वन्यालोकलोचनभाष्यम्, पृ० २५६.
३. तत्रैव, ध्वन्यालोकः, पृ० २५०

शब्देन स्पष्टमनुक्त्वा ध्वन्यते, तदा तेन प्रतीयमानार्थेन काव्ये किमपि चारुत्वमधिकं जायते। **गम्भीरोऽहं न मे कृत्यं कोऽपि वेद न सूचितम्। किञ्चिद् ब्रवीमि** इत्यत्र गाम्भीर्यरूपोऽर्थः स्पष्टमेवावेदितः। अतोऽत्राभिधेयत्वादर्थस्य न काचिच्चमत्कृतिः। परं काव्ये यदा गोप्यमानतयार्थश्चकास्ति, तदा गूढत्वात्तस्य काप्यनवद्यता काव्ये पदं निदधाति। स्वत उक्तिं विना यत्रार्थोऽभिव्यज्यते, तत्र तथाविधस्य प्रतीयमानार्थस्याभिव्यक्त्यैव परमं माधुर्यं काव्यस्य। यथोक्तम्—

**अनुद्घुष्टः शब्दैरथ च रचनातः स्फुटरसः।**
**पदानामर्थात्मा जयति कवीनां बहुमदम्॥**
**यथा किञ्चित् किञ्चित् पवनचललोलाञ्चलतया।**
**कुचद्वन्द्वं कान्तिं किरति न तथोद्घाटितमुरः॥**[1]

प्रतीयमानोऽर्थस्त्रिविधः—वस्तुरूपः, अलङ्काररूपः, रसरूपश्चेति।

**१. वस्तुरूपः प्रतीयमानोऽर्थः**

रसाद्यङ्कारभिन्नमर्थं वस्तु, तस्य प्रतीयमानतायां वस्तुरूपः प्रतीयमानोऽर्थः। तद्यथा—

**शिखिपिच्छकर्णपूरा वधूर्व्याधस्य गर्विणी भ्रमति।**
**मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम्॥**[2]

अत्र व्याधस्य वधूः शिखिपिच्छमात्रकृतप्रसाधनापि मुक्ताफलालङ्कृतसपत्नीनां मध्ये सगर्वं भ्रमतीति वाच्योऽर्थ उत्तानः स्वशब्देनाभिहितोऽविदग्धानामपि विषयः। नात्र कश्चिच्चमत्कारस्तस्य स्फुटत्वात्। परं सहृदयैर्वक्तृबोद्धव्यादीनामुपाधीनां महिम्नातिरिक्तो व्याधवध्वाः सौभाग्यातिशयरूपोऽर्थः प्रतीयमानः सन्नास्वाद्यते। पूर्वं व्याधो मम सपत्नीष्वनुरक्तस्तासां सम्भोगपराङ्मुखो दूरदेशगमनव्यवधानानाकुलहृदयो हस्तिनोऽपि जघान, तद्गण्डस्थलविनिर्गतैर्मौक्तिकैश्च सपत्नीनां प्रसाधनं जातम्। पर यदा प्रभृत्यसौ मय्यनुरक्तस्तस्माद्दिवसान्निरन्तरसम्भोगरसिकतया मम विरहमसहमानो व्यग्रतया दूरं गन्तुमशक्तः सुखलभ्यमयूरपरभृतादिपक्षिणो हत्वैव सन्तुष्यति। अतएव शिखिपिच्छमात्रमेव ममालङ्करणम्। तेन मुक्ताफलरचितप्रसाधना अपि मम सपत्न्योऽधन्याः, अहं तु शिखिपिच्छमात्रकर्णपूरापि धन्या यस्यां व्याध एवमनुरक्तो यद् दूरदेशवर्त्यरण्यस्थान् गजादीनहत्वा समीपस्थमयूरमात्रमारणेनैव संतुष्यति। एवं व्याधवध्वाः सौभाग्यातिशयरूपो योऽर्थो गोप्यमानतया परिस्फुरति, तस्य वस्तुरूपत्वात् प्रतीयमानोऽर्थोऽत्र वस्तुरूपः।

---

१. गान्धी, लालचन्द्र-भगवानदासः, नरेन्द्रप्रभसूरी-अलङ्कारमहोदधिः, पृ० ३००

२. शास्त्री, पं० पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ३००

### (ख) अलङ्काररूपः प्रतीयमानोऽर्थः

उपमादीनां प्रसिद्धानामलङ्काराणां व्यङ्ग्यत्वेन प्रतीतौ अलङ्काराणां प्रतीयमानता । तद्यथा—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ।।[1]

अत्रादौ प्रणयकुपितामनन्तरञ्च कोपकालुष्यापगमात् प्रसादसुमुखीमपि नायिकां दृष्ट्वा नायकस्य मनसि मन्मथो नोज्जृम्भते । तेन समीपस्था सखी तयोः सङ्गममभिलषन्ती चातुर्येण नायकमधिक्षिपति । एवंविधां सन्ध्यारुणपूर्णशशधरमण्डलमुखीं चञ्चलेषद्विहसनशीलायतलोचनां नायिकां पश्यतोऽपि नायकस्यास्य मनसि यदि न रिरंसा समुदेति, तेनायं सुव्यक्तमेव जलराशिसमुद्रेण तुल्यो जडः । वस्तुतस्तु समुद्रेऽपि पूर्णचन्द्रोदयसमये विकारः सम्पद्यते । अयं तु नायकोऽस्यां पूर्वानुरक्तः पूर्णचन्द्रवद्विलसन्नायिकामुखं पश्यन्नपि चाटुकारैर्नायिकां न प्रीणयत्यतोऽयं समुद्रादप्यधमः ।

पद्येऽस्मिन् यद्यपि वस्तुरूप्यऽप्यर्थः प्रतीयते, परं तथाप्यनुरणनरूपं यद् रूपकं व्यङ्ग्यं मुखचन्द्रयोरभेदध्वननात्, तदेव सहृदयहृदयाह्लादकारि । अतस्त्वन्मुखचन्द्रावलोकनेन नायकस्य मनसि प्रीतिर्न समुदेतीति मुखचन्द्रयोरुपमानोपमेयभावः प्रतीयमानो रूपकालङ्कारप्राणायितश्चारुत्वमातनोति । यथोक्तमभिनवगुप्तपादाचार्येण—

**'अनुरणनरूपं यद्रूपकमर्थशक्तिव्यङ्ग्यं तदाश्रयेणेह काव्यस्य चारुत्वं व्यवतिष्ठते । ततस्तेनैव व्यपदेश इति सम्बन्धः' ।**[2]

एवमत्र रूपकालङ्कारः प्रतीयमानः, न तु स्वशब्देनाभिहितः ।

### (ग) रसरूपः प्रतीयमानोऽर्थः

रत्यादयः स्थायिभावा वासनात्मतया सहृदयहृदयेषु विद्यमाना यदा काव्ये विभावानुभावसञ्चारिणां संयोगादभिव्यज्यन्ते तदा शृंगारादयो रसा व्यपदिश्यन्ते । रत्यादीनां स्थायिभावानां विभावानुभावादिसंयोगेन व्यक्तिः

१. तत्रैव, पृ० २६१
२. पण्डितः पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, लोचनटीका, पृ० १६४

काव्ये परमानन्ददायिनी भवति। अतः रसः परमाह्लादमयः परब्रह्मानन्द-सविधः। वस्त्वलङ्काररूपिणोरर्थयोरभिधेयत्वमपि स्यात्, परं रसस्तु सर्वथा प्रतीयमान एव। तद्यथा—

**त्वं मुग्धाक्षि विनैव कंचुलिकया धत्से मनोहारिणीं**
**लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।**
**शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
**निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥**[1]

इत्यत्र रतिचित्तवृत्त्युचितकञ्चुलिकापसारणसस्मितावलोकनादीनां विभावानुभावानां योजनया स्वसंविदानन्दचर्वणागोचरो योऽर्थः प्रपानकरसन्यायेन सहृदयैरास्वाद्यतेऽसौ श्रृंगाररसव्यपदिष्टः। अयमर्थोऽभिलाषचिन्तानुरागादीनां शब्दानामप्रयोगे विभावानुभावादीनां सम्मेलनमहिम्ना परिस्फुरति। नह्यत्रवंविधः कश्चिच्छब्द उपात्तो यो नायको नायिकायामनुरक्त इत्यर्थं साक्षात् बोधयति। प्रत्युतावेगहर्षादीनां शब्दानामप्रयोगे एवायमर्थः सहृदयहृदय-सर्वस्वभूतः शब्दानां वाच्यार्थात् परिस्फुरति। अत एवायमनभिहितः प्रतीयमानः।




त्रिविधोऽयं प्रतीयमानोऽर्थ एवानन्दवर्धनादिभिराचार्यैर्ध्वनिनाम्ना काव्य-शास्त्रे व्यवस्थापितः।

ध्वनिवादिभिर्ध्वनिशब्दः पञ्चधा विभज्यते। तेन च ध्वनिशब्दस्य पञ्चार्थाः।

१—ध्वनति यः सः (व्यञ्जकः शब्दः) ध्वनिरिति विग्रहेण व्यञ्जकशब्दस्य ध्वनिरित्यभिधानम्।

२—ध्वनति ध्वनयति वा यः सः (व्यञ्जकोऽर्थः) ध्वनिरिति विग्रहेण व्यञ्जकस्यार्थस्य ध्वनिरिति संज्ञा।

---

१. भट्टाचार्यः शिवप्रसादः, मम्मट-काव्यप्रकाशः, पृ० ७८

३—ध्वन्यते अनेनेति ध्वनिरिति विग्रहेण शब्दार्थयोर्व्यापारो व्यञ्जनापि ध्वनिः।

४—ध्वन्यते इति ध्वनिरिति विग्रहेण व्यङ्ग्यस्य ध्वनितस्य वस्त्वलङ्कार-रसरूपिणस्त्रिविधस्यार्थस्यापि ध्वनिरिति नामकरणम्।

५—ध्वन्यतेऽस्मिन्निति ध्वनिरिति विग्रहेण यत्र वस्त्वलङ्काररसा ध्वन्यन्ते व्यञ्जनयाभिव्यज्यन्ते तत्रापि काव्ये ध्वनिव्यवहारः।

यथोक्तं ध्वनिप्रस्थानप्रबलपरिपोषकेणाभिनवगुप्तपादाचार्येण—

**स इति। अर्थो वा शब्दो वा, व्यापारो वा। अर्थोऽपि वाच्यो वा ध्वनतीति शब्दोऽप्येवम्, व्यङ्ग्यो वा ध्वन्यत इति व्यापारो वा**[1]

एवमभिनवगुप्तपादाचार्येण ध्वनिशब्दं पञ्चधा निरुच्य भर्तृहरिप्रणीत-वाक्यपदीयकारिकाणाञ्च स्वमतानुसंवादि व्याख्यानं विधाय सर्वथा भर्तृह-र्यादिप्रमुखवैयाकरणाविसंवादि ध्वनिशब्दस्य पञ्चधा निर्वचनमिति स्वोपज्ञे लोचनभाष्ये यौक्तिकया दृष्ट्या प्रतिपादितम्। तद्यथा—

(१—२) ध्वनति ध्वनयतीति वा यः शब्दोऽर्थो वा ध्वनिः। तस्य शब्द-स्यार्थस्य वा ध्वनिरित्यभिधानमधोलिखितभर्तृहरिप्रणीतवाक्यपदीयकारिका-नुकूलम्। तत्र भर्तृहरिणा—

**प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥**[2]

इत्यादिना प्रकाशकानां गकारौकारादीनां वर्णानां ध्वनिरिति संज्ञा कृता, तथैव ध्वनिवादिभिरपि व्यञ्जकौ शब्दार्थौ ध्वनिरिति नाम्नाभिधीयेते। अयमाशयः— यथा नादरूपाणामन्त्यवर्णसाहचर्येन स्फोटाभिव्यञ्जकानां वर्णानां प्रकाशकत्वाद् ध्वनिरित्यभिधानं वैयाकरणदर्शने, तथैव शब्दस्य स्वाभिधेयार्थमुपसर्जनीकृत्य अर्थस्य च स्वात्मानं गुणीकृत्य प्रतीयमानार्थद्योतनाच्छब्दार्थयोरुभयोः स्फोटा-भिव्यञ्जकवर्णसाम्याद् ध्वनिरित्यभिधानमुपपन्नम्।[3]

(३) ध्वन्यते अनेनेति ध्वनिर्व्यापारः। येन व्यापारेणार्थो ध्वन्यते, स व्यापारोऽपि ध्वनिः। व्यञ्जनाह्वव्यापारस्य ध्वनिरिति व्यपदेशोऽपि भर्तृ-

१. शास्त्री, पं० पट्टाभिरामः, ध्वन्यालोकलोचनभाष्यम्, पृ० १०५-६

२. भर्तृहरिः, वाक्यपदीयम्, १,८४

३. तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्यस्फोटाभिव्य-ञ्जकास्ते ध्वनिशब्देनोक्ताः। यथाह भगवान् स एव 'प्रत्ययैरित्यादि'। तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ।
—शास्त्री, पं० पट्टाभिरामः, ध्वन्यालोकलोचनभाष्यम्, पृ० १३४

हरिवचनेन सह सङ्गतिं भजते । स्फोटवादिभिः प्राकृतस्य ध्वनेर्नित्यत्वं वैकृतस्य चानित्यत्वं प्रोक्तम् । तथाहि—गौरिति शब्दस्य प्रसिद्धः प्राकृत उच्चारणव्यापार एक एव । शब्दानामुच्चारणे एक एव व्यापारः स च प्राकृतो नित्यः । यथोक्तम्—

**अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।**
**यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥**[1]

अयमाशयः । गौरिति पदस्य बालवृद्धादिभिः पृथक् पृथगुच्चारणे क्रियमाणे यः स्वरगतो भेदो द्रुतविलम्बितात्मा प्रतीयते, असौ वैकृतध्वनिजन्यः । एक एव शब्दो भिन्नैर्भिन्नैर्बालवृद्धादिभिर्यदा पृथक् पृथगुच्चार्यते, तदा शब्दस्योच्चारणे तु एकः प्राकृतो व्यापार एव सर्वत्र व्याप्रियते, परमनेन दीर्घमुच्चारितमनेन मन्दमिति द्रुतविलम्बितभेदो वैकृतध्वनिजन्य एव । वैकृतध्वनिनैवोच्चार्यमाणः शब्दो द्रुतविलम्बभावमापन्नः समुपोहितः सन् प्रतीयते । परं प्राकृतो ध्वनिस्त्वेकरूप एव । नहि तत्र कश्चिद्भेदः कृतो भवति ।[2]

तथास्थिते शाब्दिकैर्यथा द्रुतविलम्बितात्मन उच्चारणव्यापारस्य वैकृतेन ध्वनिना भिद्यमानस्योपचारवशाद् ध्वनिरिति संज्ञा क्रियते, तथैव ध्वनिवादिभिरपि प्रसिद्धाभिधालक्षणातिरिक्तस्य द्योतनात्मनो व्यापारस्य ध्वनिरिति व्यपदेशो विधीयते । अयं भावः । यथा प्रसिद्ध उच्चारणव्यापारः सर्वत्रैकभावेन व्यवस्थितो वैकृतेन वैखरीगतेन द्रुतविलम्बितरूपेण ध्वनिना परिवर्तमानः सोपाधिकः सन्नुपचारवशाद्ध्वनिरित्युच्यते, तथैव ध्वनिवादिनां ध्वनिरपि प्रसिद्धाभिधालक्षणाव्यापारातिरिक्तो विलक्षण एव व्यापारः । असौ चापि तत्साम्याद् ध्वनिरित्यभिधीयते । एवं व्यञ्जनाव्यापारस्यापि ध्वनिनामकरणं युक्तम् ।[3]

---

१. शास्त्री, स० क० रामनाथः, भट्टोम्बेक-श्लोकवार्त्तिक-व्याख्या, पृ० ४४५

२. वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥
स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥
भर्तृहरिः, वाक्यपदीयम्, १,७५-७७

३. किञ्च वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु, यथोक्तम्, 'अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः' इत्यादि इति । तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणव्यापाराद्भ्यधिकः स ध्वनिरुक्तः ।
पण्डितः पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, लोचनभाष्यम्, पृ० १३५

(४) ध्वन्यत इति व्युत्पत्त्या त्रिविधस्य वस्त्वलङ्काररसरूपिणोऽर्थस्य ध्वनिरित्यभिधानमधोलिखितवाक्यपदीयकारिकाश्रितम् । तद्यथा—

**यः संयोगविभागाभ्यां करणैरुपजन्यते ।**
**स स्फोटः शब्दजाः शब्दाः ध्वनयोऽन्यैरुदाहृताः ॥**[1]

इत्यत्रान्त्यवर्णबुद्धिनिर्ग्राह्यस्य शब्दजस्य शब्दस्य ध्वनिरिति व्यपदेशो भर्तृहरिणा कृतः, तथा ध्वनिवादिभिरप्याचार्यैर्वाचकैः शब्दैर्वाच्यैरर्थैर्वा अभिव्यक्तस्यार्थस्य ध्वनिरित्यभिधानं कृतम् । अत्र **शब्दजः शब्दः** इत्यस्याशयः शब्दानित्यत्ववादिभिर्वैयाकरणैरेवं व्याख्यातः—

**'करणैः कण्ठताल्वादिभिः संयोगविभागाभ्यां—वायुसंयोगविभागाभ्यां यः शब्दः प्रथममुपजन्यते, स स्फोटः बोधक उत्तरोत्तरशब्दानां कारणञ्च । ये च शब्दजाः—स्फोटाख्यात्—जाताः, ते ध्वनयः अन्यैः स्फोटकार्यत्ववादिभिराचार्यैः कथिताः'** ।[2]

अयमाशयः । स्फोटकार्यत्ववादिनामाचार्याणां मते प्रथमवर्णोच्चारणेनाभिव्यक्तः स्फोट उत्तरवर्तिनां ध्वनीनां बोधकः । इत्थं प्रथमवर्णोच्चारणाभिव्यक्तात् स्फोटात् घण्टानुरणनन्यायेनोत्तरवर्तिनां ध्वनीनां प्रकटीकरणं भवति । यथा घण्टानादे जाते प्रथमाभिव्यक्तो नाद उत्तरोत्तरे नादेऽनुस्यूतः पश्चाच्चरमे नादे पर्यवस्यति, तथा प्रथमवर्णोच्चारणाभिव्यक्तः स्फोटः परिवर्तिनां ध्वनीनां कारणभूतो घण्टानिर्ह्लादवच्चरमे ध्वनौ संक्रान्तस्तमभिव्यनक्ति । यथा शब्दस्य स्फोटाभिव्यक्तस्य शब्दस्य स्फोटानित्यत्ववादिभिः शाब्दिकैर्ध्वनिरिति संज्ञा कृता '**शब्दजाः शब्दाः ध्वनयोऽन्यैरुदाहृताः**' इति भर्तृहरिवचनप्रामाण्यात्, तथैव वस्त्वलङ्काररूपो व्यङ्ग्योऽर्थोऽपि घण्टानिर्ह्लादस्थानीयो ध्वनिरित्युच्यते । व्यङ्ग्यार्थस्य घण्टानिर्ह्लादस्थानीयत्वमित्थं स्पष्टम् । व्यञ्जकेभ्यः शब्देभ्यो व्यज्यमानो व्यङ्ग्योऽर्थ एककालावच्छेदेन न प्रकाशमुपयाति । परं प्रतिभावद्भिः प्रकरणादिपर्यालोचनायां कृतायां घण्टानर्ह्लादिवदसौ क्रमेणाभिव्यक्तिमुपयाति, अन्ते च निर्ह्लादवद् गूढताभुपगच्छन् परमास्वादरूपो भवति ।

यद्यप्यनया व्याख्यया रसरूपार्थस्य व्यङ्ग्यत्वं पराहतं भवति, परं वस्त्वलङ्काररूपिण्यर्थे घण्टानिर्ह्लादस्थानीये प्रोक्ते उपलक्षणेन असंलक्ष्यक्रमव्यङ्ग्यस्य रसस्यापि ध्वनित्वं युज्यते एव । इत्थं स्फोटाभिव्यक्तस्य शब्दस्य यथा ध्वनिरिति

१. भर्तृहरिः, वाक्यपदीयम्, १, १०३ ।

२. शुक्लनारायणः, वाक्यपदीय-टीका, १, १०२ ।

संज्ञा यौक्तिकी, तथा व्यञ्जकैः शब्दैरभिव्यक्तस्य घण्टानिर्ह्रादस्थानीयस्य व्यङ्ग्यार्थस्यापि ध्वनिरिति व्यपदेश उपयुक्त एव ।[1]

(५) एवं यत्र व्यञ्जकाच्छब्दादर्थाद्वा व्यञ्जनाव्यापारमहिम्ना प्रतीयमानोऽर्थः अभिव्यज्यते, तस्य काव्यस्यापि व्यञ्जकशब्दार्थव्यङ्ग्यार्थव्यञ्जनाव्यापारसम्मिश्रणाद् ध्वनित्वमुपपद्यते ।

आनन्दवर्धनाचार्यस्य '**वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति**'[2] ग्रन्थस्य या व्याख्या अभिनवगुप्तपादाचार्येण स्वकीये ध्वन्यालोकलोचने कृता,[3] तयेदं स्पष्टं भवति यदानन्दवर्धनाचार्यानुमतोऽयं ध्वनिशब्दस्यार्थपञ्चके प्रयोगः । तथाहि **वाच्यवाचकः** इत्यनेन शब्दार्थयोर्व्यञ्जकत्वं सिद्धम् । '**सम्मिश्र्यते विभावानुभावसंवलनयेति**' व्याख्यया **सम्मिश्र-शब्दो** व्यङ्ग्यार्थस्थानीयः, **शब्दात्मा** इत्यनेनाभिधादिविलक्षणस्य काव्यात्मभूतस्य व्यञ्जनाव्यापारस्य ग्रहणम् । **काव्यमित्यनेन** च काव्यस्यापि ध्वनिव्यपदेश उपपन्नः ।

एवं लोचनकाराणामिदमत्राकूतं यद् ध्वनिशब्दस्यार्थपञ्चके प्रयोगो भर्तृहर्यादिप्रमुखवैयाकरणसिद्धान्तानुमतः । परतश्च ध्वनितन्त्रप्रजापतिनाऽऽनन्दवर्धनाचार्येणायमुपात्तः । अतो ध्वनिपदस्य व्यञ्जकशब्दार्थव्यङ्ग्यार्थव्यञ्जनाव्यापाराद्यर्थेषु प्रयोगः परम्परानुमोदित इति सर्वथाभ्युपेयम् ।

एवं ध्वन्यपरपर्यायः न्यग्भावितवाच्यः प्रधानः प्रतीयमानोऽयमर्थो नाभिधीयते, नापि लक्ष्यते, प्रत्युत व्यज्यते । अत एव ध्वनिसिद्धान्तानुयायिभिर्व्यञ्जनावृत्तिरभिधालक्षणातिरिक्ताऽऽवश्यकी प्रोक्ता ।

---

१. श्रोत्रशष्कुलीं सन्तानेनागता अन्त्याः शब्दाः श्रूयन्ते इति प्रक्रियायां शब्दजः शब्दाः श्रूयमाणा इत्युक्तम् । घण्टानुरणनरूपत्वं तावदस्ति, ते च ध्वनिशब्देनोक्ताः, यथाह तत्र भवान् भर्तृहरिः—यः संयोगविभागाभ्यामित्यादि । एवं घण्टानिर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योप्यर्थो ध्वनिरिति व्यवहृतः ।

—शास्त्री, पट्टाभिरामः, ध्वन्यालोकलोचनभाष्यम्, पृ० १४०-४१

२. तत्रैव, ध्वन्यालोकः, पृ० १३३-३५

३. तेन वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिः, द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा । सम्मिश्र्यते विभावानुभावसंवलनयेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा । शब्दनं शब्दः शब्दव्यापारः न चासावभिधादिरूपः अपित्वात्मभूतः, सोऽपि ध्वननं ध्वनिः । काव्यमितिव्यपदेश्यश्च योर्थः सोऽपि ध्वनिः उक्तप्रकारध्वनिचतुष्टयत्वात् ।

—शास्त्री, पट्टाभिरामः, ध्वन्यालोकलोचनभाष्यम्, पृ० १२५

व्यञ्जना पिहितमर्थं द्योतयति । शब्दानां योऽर्थो गूढस्तमेव पिहितार्थं व्यञ्जना प्रकाशयति । अविदग्धा काव्ये परिस्फुरन्तं परमनभिहितमर्थमवगन्तुं न प्रभवन्ति । परं विदग्धा निरन्तरकाव्याभ्यासवशात् विशदीभूतया प्रतिभया गूढमप्यर्थमास्वादयन्ति । अत एव केवलं वाच्यवाचकार्थकृतपरिश्रमा मीमांसकतार्किकादयः काव्यमास्वादयितुं न प्रभवन्ति । प्रतीयमानोऽर्थः केवलं शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते, परं निर्मलप्रतिभावद्भिः संस्कारविशेषवशादेवास्वाद्यते ।[1] एवं प्रतिपत्तुः संस्कारविशेष एव काव्ये गूढमर्थं प्रकाशमानयति । सर्वथा गूढः स्वशब्दानावेद्योऽर्थो व्यञ्जनाया विषयः । अयमर्थः काव्य एवान्तर्हितः । परन्तु काव्यज्ञैरेवायमर्थोऽनुभूयते, नत्वकाव्यज्ञैर्वासनाशून्यैर्विविधशास्त्रकृतपरिश्रमैरपि विद्वद्भिः । इत्थं गूढस्यार्थस्य संस्कारविशेषवशादभिव्यक्तिर्व्यञ्जनेति निष्पीडितार्थः ।

## व्यञ्जनाया मूलम्

**ऋग्वेदे**

ऋचां द्रष्टा ऋषिर्व्यञ्जनाप्राणायितं रहस्यमिमं जानाति यच्छब्दानां प्रचलितादर्थादतिरिक्तोऽपि कश्चन रमणीयोऽर्थो भवति यं वाग्विदोऽवगच्छन्ति । साधारणा जनास्तु गूढं तमर्थं पश्यन्तोऽपि न पश्यन्ति, शृण्वन्तोऽपि न शृण्वन्ति, परं तत्त्वज्ञास्तं प्रच्छन्नमर्थं द्रष्टुं प्रभवन्ति । अनेनेदं स्पष्टं भवति यद्वाचि कश्चनार्थः पिहितो भवति योऽसौ प्रचलितादर्थात् सुतरां रमणीयो भवति ।[2] किञ्च ऋग्वेदस्य

**चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षःसु रुक्माँ अधि येतिरे शुभे ।**
**अंसेष्वेषां नि मिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः ॥**[3]

अस्मिन् मंत्रे 'व्यञ्जते' इत्यत्र अभिव्यक्तिप्राणाया ध्वनिवादिनां व्यञ्जनाया मूलमन्वेष्टुं शक्यम्, यतो हि अत्र **व्यञ्जते** इति पदमृषिणा **व्यक्तं कुर्वन्तीत्यर्थे** प्रयुक्तम् । एवमेव—

---

१. प्रज्ञावैमल्यवैदग्ध्यप्रस्तावादिविधायुजः ।
अभिधालक्षणायोगी व्यङ्ग्योऽर्थः प्रथितो ध्वनेः ॥
तैलंगः, मंगेशरामकृष्णः, मम्मटः, शब्दव्यापारविचारः, पृ० ६

२. उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥
ऋग्वे०, १०. ७१.४

३. ऋग्वे० १.६४.४

**व्यञ्जते दिवो अन्तेष्वक्तून् विशो न युक्ता उषसो यतन्ते।**
**सं ते गावस्तम आ वर्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू ॥**[1]

इत्यत्रापि **व्यञ्जते** इति पदं व्यक्तं कुर्वन्तीत्यर्थे प्रयुक्तं दृश्यते।

**निरुक्ते**

यास्को मुनिर्निरुक्ते उपसर्गाणामर्थद्योतकताविषये गार्ग्यशाकटायनाचार्ययोर्मतं निर्दिशति—**'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति'**।[2] अत्र द्योतनपदे व्यञ्जनाया मूलं निहितम्। परतो ध्वनिवादिभिर्द्योतनशब्दो व्यञ्जनापरपर्यायरूपेण स्वीकृत एव। यथोक्तं मम्मटेन—**तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्**[3]। अतएव उपसर्गाणां अर्थद्योतकतां लक्ष्यीकृत्य नागेशभट्टेन वैयाकरणानां कृते व्यञ्जनास्वीकार आवश्यकः प्रोक्तः।

**महाभाष्ये**

भगवता फणिना व्यञ्जनपदस्याभिव्यक्त्यर्थे बहुशः प्रयोगः कृतः। तद्यथा—**तिङभिहितेन भावेन कालपुरुषोपग्रहा अभिव्यज्यन्ते कृदभिहितेन पुनर्न व्यज्यन्ते। अथवा नान्तरेण क्रियां भूतभविष्यद्वर्तमानाः काला व्यज्यन्ते।**[4]

इत्थं गूढस्यार्थस्य व्यक्तिरिति विचारो न केवलं काव्यतत्त्वज्ञानन्दवर्धनोपज्ञ एव, परमयं विचार ऋग्वेदकालादेवारब्धो विभाव्यते।

**वेदान्तदर्शने**

तत्र वेदान्तदर्शनेऽपि सोऽहमस्मीति प्रतीतिरभिव्यक्तिरेव। मायोपहित ब्रह्म स्थूलोऽहं विपन्नोऽहमित्याद्यनुभवति। परं मायायां निराकृतायां गूढमद्वैतं शुद्धं ब्रह्माभिव्यक्तं भवति। एवं वेदान्तिनां मोक्षो नोत्पाद्यः, परं मायावरणनिराकरणेनाभिव्यक्तिरेव स्वस्वरूपस्य। माया ब्रह्मस्वरूपमावृणोति। यदा मायाया आच्छादनमपाक्रियते, तदा तत्त्वमसीति धीर्भवति। एवमाच्छादकापनयनेन स्वस्वरूपज्ञानं सोऽहमस्मीत्यभिव्यक्तिरेव गूढस्य स्वस्वरूपस्य। तथा सति गूढस्याभिव्यक्तिरिति व्यञ्जनाजीवातोः सूक्ष्मं बीजं वेदान्तदर्शने विभाव्यम्।

---

१. तत्रैव, ७.७६.२
२. यास्कः, निरुक्तम्, (आनन्दाश्रमसंस्कृतग्रन्थावलिसंस्करणम्) पृ० ३१
३. करमरकरः, र० दा०, मम्मट-काव्यप्रकाशः, पृ० ६३
४. महाभाष्यम्, III १.६७.१४।५७

**सांख्यदर्शने**

सांख्यदर्शनस्य सत्कार्यवादेऽप्यभिव्यक्तिविचारो दृश्यते। तत्र कारणस्य कार्ये आविर्भावोऽभिव्यक्तिसहोदर एव। कार्यं कारणे गूढं सन्तिष्ठते। एवं कारणे गूढस्य कार्यस्याविर्भावोऽभिव्यक्तिरेव। तद्यथा—मृदि घटो गूढोऽनभिव्यक्तः सन् विद्यते। परं कुम्भकारेण घटे चिकीर्षिते सति मृद्यव्यक्तो घटः कारणावस्थायां पिहितः, कार्यावस्थायामाविर्भूय घटो भवति, जलानयनाद्यनेककार्येषु चोपयुज्यते। एवं कारणात्मनो मृदः कार्यावस्थायां याभिव्यक्तिरसावेव घटः।

अनेन प्रकारेण सांख्यदर्शनशास्त्रानुमते सत्कार्यवादेऽप्यभिव्यक्तिविचारावलोकनेन व्यञ्जनाया सूक्ष्मातिसूक्ष्मं रूपं सांख्यदर्शनेऽपि संभाव्यते।

**नाट्यशास्त्रे**

भरतमुनिप्रणीतं नाट्यशास्त्रं काव्यशास्त्रस्याकरभूतो ग्रन्थः। तत्र रसालङ्कारगुणादीनां विचारः। काव्यशास्त्रे परमप्रसिद्धः रससिद्धान्तस्तु नाट्यशास्त्र एव प्ररूढः। ध्वनिवादिभिराचार्यैः रसस्याभिव्यक्तिरेव सिद्धान्त्यते[1]। रामोऽयं सीतायामनुरक्त इति स्पष्टमभिधानेन न रसास्वादः। परं विभावानुभावसम्मेलनेन सहृदयानां चेतसि रसोऽभिव्यक्तो भवति। यदि रत्यादयो भावाः स्वशब्देनावेद्यन्ते, तदा न रसानुभूतिः। परं यदोचिताः विभावानुभावादय उपनिबध्यन्ते तदा तैः रसोऽभिव्यज्यते। रत्यादीनां भावानां स्वशब्देनावेदने कृते चारुत्वं सर्वथा विलुप्यते, परं त एव भावा यदा विभावानुभावादिभिरभिव्यज्यन्ते तदा परमाह्लादोऽनुभूयते। एवं रसानुभूती रसाभिव्यक्तिरेव। वासनात्मतया सहृदयहृदयेषु गूढा रत्यादयः स्थायिभावा विभावानुभावादिसहकारिसामग्रीवशादभिव्यज्यन्ते रसताञ्चोपगच्छन्ति। इत्थमभिव्यक्तेः रसास्वादप्राणत्वाद् व्यञ्जनाया मूलं रससिद्धान्तसंस्थापके नाट्यशास्त्रे मार्गणीयम्। तत्र वी० वी० सोवनीमहोदयैः, सुशीलकुमार डे प्रभृतितिभिर्विपश्चिद्भिः—

"**अत्राह—यदान्योऽन्यार्थसम्भूतैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः**

---

१. नहि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसत्वप्रतीतिरस्ति। यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः। केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्। न त्वभिधेयत्वं कथञ्चित्।
—शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ८१-८६

सामान्यगुणयोगेन अभिनिष्पद्यन्ते रसास्तत्कथं स्थायिन एव भावाः रसत्वमाप्नुवन्ति"

इत्यत्र नाट्यशास्त्रोद्धरणे व्यञ्जितैरित्यत्र ध्वनेर्मूलमुत्प्रेक्षितम् ।[1]

यद्यपि 'व्यञ्जितैः' इति पदमत्र व्यञ्जनाव्यापारेण व्यञ्जितमिति पारिभाषिकेऽर्थे न प्रयुक्तं, तथापि विभावानुभावैर्भावानां व्यञ्जनं भरतमुनिसम्मतमित्युन्नेतुं शक्यते । सम्पूर्णे नाट्यशास्त्रे वृत्तिरूपेण न व्यञ्जनाविचारः कुत्रापि । परं भावानां ने व्यक्तिरिति विचारोऽस्फुटरूपेण मुनेर्मनसि परिस्फुरन् दृश्यते । यतो हि नाट्यशास्त्रे बहुधा मुनिना भावानां व्यञ्जनं प्रोक्तम् ।[2] इत्थं व्यञ्जनाया बीजं नाट्यशास्त्रस्य व्यञ्जितमिति पदे उत्प्रेक्षितुं शक्यम् ।

**स्फोटदर्शने**

सिद्धान्तपक्षे तु वैयाकरणानां स्फोटदर्शने एव व्यञ्जनाया बीजम् । आनन्दवर्धनमम्मटप्रभृतीनां ध्वनिवादिनां वचनप्रामाण्यादिदमेव निश्शङ्कमभिधातुं शक्यते ।[3]

---

१. (a) Here we may note that the underlined expressions anticipate the Vyañjanā function of the Dhvani Theory as also the Bhāvakatva function advocated by Bhaṭṭanāyaka.

V.V. Sovani : Pre-Dhvani School of Alaṁkāra, Sir R. G. Bhandarkar Commemorative Volume, p. 388

२. (क) 'तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः हर्षादींश्चाधिगच्छन्ति ।

Kavi M. Ramkrishna, Nāṭyaśāstra of Bharata Muni. p. 289.

(ख) एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः ।

तत्रैव, पृ० २४८

३. (क) प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम् । ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति । तथैवान्यैस्तन्मतानुसारिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः ।

—शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १३४-३५

यथा ध्वनिवादिनां दर्शने गूढः प्रतीयमानोऽर्थो व्यञ्जनया द्योत्यते तथैव स्फोटदर्शनेऽपि क्षणभङ्गुरैर्ध्वनिभिर्नित्यः स्फोटोऽर्थप्रत्यायकोऽभिव्यक्तो भवति। एवं यथा स्फोटादर्थप्रतीतिर्वैयाकरणदर्शने तथैव ध्वनिसिद्धान्तेऽपि व्यञ्जनयार्थ-प्रतीतिः। अभिव्यक्तितौल्यात् स्फोट-व्यञ्जनयोः सहोदरभावः।

अधुना कोऽयं स्फोट इति विवेक्तव्यं भवति। स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुट्यते व्यज्यते वर्णैरिति स्फोटः, स्फुटति स्फुटीभवत्यस्मादर्थ इति स्फोटो-ऽर्थप्रत्यायक इति स्फोटशब्दव्युत्पत्तिः।

अयं स्फोटः स्वयं प्रकाशोऽपि स्तिमितपिण्डीभूतपवनेन प्रतिरुद्ध इति तदव-रोधनिराकरणद्वारा स्वाभिन्नत्वेनैव स्फोटं प्रकाशयति, पूर्वप्रदर्शितव्युत्पत्त्या च अर्थनिष्ठविषयतानिरूपकोपस्थितिजनकतावच्छेदकशक्तिमतश्शब्दस्य स्फोटपदार्थ-तया कल्पितसुप्तिङन्ततदादिरूपपदतत्समुदायरूपवाक्येतरस्य प्रकृतिप्रत्ययादेर्ग्र-हणं बोध्यम्। अत एको नित्यो व्यापकः स्फोटो नानारूपध्वनिरूपाक्रान्तो ज्ञातवृत्तिकोऽनेकरूपेण भासमानस्सन् अन्तिमवर्णाभिव्यक्तोऽर्थं बोधयति। अय-मेव प्राकृतध्वनिर्वर्णशब्देन व्यवह्रियते।[1]

अयमाशयः। गोशब्दे उच्चरिते या गोत्वरूपिणोऽर्थस्य प्रतीतिः सा स्फोटद्वारिकैव। नहि गोपदे गकारौकारविसर्जनीयेभ्य उच्चरितप्रध्वस्तेभ्यो क्षणावस्थायिभ्यो ध्वनिभ्यः कस्यचिदर्थस्य प्रतिपत्तिः सम्भवा। तद्यथा—गौरित्युच्चरिते यावद् वक्त्राद् गकार उदीर्यते, तावन्नौकारो नापि च विसर्ज-नीयाः, औकारोच्चारणसमये नापि गकारः, नापि च विसर्जनीयाः, याव-द्विसर्जनीया उच्चार्यन्ते, तावद्गकारौकारवर्णयोर्लोपः। अत एकैकवर्णवर्ति-त्वाद् वाचः, उच्चरितप्रध्वंसितत्वाच्च वर्णानाम्, गोत्वरूपिणोऽर्थस्य प्रतीतिर्वर्णे-भ्यो दुरुपपादा।[2]

अतो न समुदायेन वर्णैरर्थप्रतीतिः, नापि विकल्पेन पृथक् पृथग्वर्णेभ्यः।

---

१. जोशी, र० वि०, स्फोट-समाम्नायः, सागरिका (पत्रिका)
सं० २०१९ पृ० ४५९-६४

२. एकैकवर्णवर्त्तिनी वाक्। न द्वौ वर्णौ युगपदुच्चारयति। तद्यथा। गौरि-त्युक्ते यावद् गकारे वाक् प्रवर्त्तते, तावन्नौकारे न विसर्जनीये। याव-दौकारे न गकारे न विसर्जनीये। यावद् विसर्जनीये न गकारे नौकारे। उच्चरितप्रध्वंसितत्वाच्च वर्णानाम्। उच्चरितः प्रध्वस्तश्च अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः।
पतञ्जलिः, महाभाष्यम्, ६, ३, ५९

तद्यथा गकारवर्णोच्चारणेनैव यदि गोत्वरूपिणोऽर्थस्यावगतिः स्यात्, तदौकार-विसर्जनीयानामानर्थक्यप्रसङ्गः। गोत्वरूपिणोऽर्थस्य प्रत्यायनार्थं 'ग' इत्यस्यैवोच्चारणं पर्याप्तं स्यात्। नान्येषां वर्णानाम्। परमेतदनुभवविरुद्धम्। गकारौकारविसर्जनीयानां त्रयाणां सम्मिलितानां वर्णानामुच्चारणे कृते सत्येवार्थावगतिर्भवति, न केवलेन गकारवर्णोच्चारणेन। अतो न संहतेभ्यो वर्णेभ्योऽर्थप्रतीतिः, नाप्यसंहतादेकैकस्माद् वर्णात्।[1] उभौ पक्षौ असम्भवदोषपराहतौ।

अत एव शाब्दिकैः स्फोटादर्थप्रतीतिरिति सिद्धान्तितम्। तेषां मते शब्दो द्विविधो नित्योऽनित्यश्च। वैखरीगतो नादरूपः स्फोटाभिव्यञ्जको गकारौकार-विसर्जनीयरूपो ध्वन्यात्मा शब्दोऽनित्यः। परं गकारौकारादिभिः क्षणावस्थायिभिरुच्चरितप्रध्वस्तैर्ध्वनिभिरभिव्यक्तो गोत्वाद्यर्थबोधकः स्फोटात्मा शब्दो नित्योऽखण्डश्च। अतो गोशब्दाद् ध्वनिरूपादभिव्यक्तेन स्फोटेनार्थप्रतीतिर्भवति।

ननु स्फोटेनार्थप्रतीतावपि तदवस्थ एव दोषः। वर्णानामुच्चरितप्रध्वस्तत्वादिति क्षणावस्थायिभ्यो वर्णेभ्यः कथं स्फोटस्याप्यभिव्यक्तिः सम्भवेति चेन्न गोरिति शब्दस्य प्रथमवर्णप्रतीत्या किञ्चित्प्रकाशितस्य अन्त्यवर्णबुद्ध्या च निश्शेषतो ग्राह्यस्य गोपदस्फोटस्यार्थप्रत्यायकत्वात्। गौरित्युच्चरिते प्रथमवर्णस्य गकारस्य संस्कार उत्तरोत्तरेषु वर्णेषु औकारविसर्जनीयेषु संक्रान्तोऽन्त्यवर्णस्य विसर्जनीयस्योच्चारणे कृते गोपदस्फोटरूपेणाभिव्यक्तो भवति। नहि सकृद् वा द्विर्वा ज्ञानेन स्फोटः सम्यक्तया ज्ञायते, किन्तु सकलध्वनिभिः सम्यगभिव्यक्तस्य स्फोटस्य स्वरूपज्ञानं भवतीत्याशयोऽत्रानुसन्धेयः। यद्यपि गकारवर्णोच्चारणमात्रेणैव गोपदस्फोटः किञ्चिदभिव्यज्यते, परं तथापि यावत् सम्पूर्णानां ध्वनीनां नोच्चारणं क्रियते, तावदीषदभिव्यक्तोऽपि स्फोटोऽस्फुटः सन्नार्थप्रत्यायने प्रभवति। यदा सम्पूर्णं गौरिति पदमुच्चार्यते, तदैव प्रथमवर्णोच्चारणेन किञ्चिदभिव्यक्तोऽपि स्फोट उत्तरोत्तरवर्णोच्चारणसाह्येन पूर्णरूपेण प्राकट्यमायाति, अर्थप्रत्यायकश्च भवति। यथान्धकाराच्छन्ने सद्मनि विद्यमानो घटो दीपप्रज्वलनसमय एव पूर्णरूपेण प्रतिपत्तिविषयतां नाप्नोति।

---

१. (a) Dr. Umesh Mishra, Physical Theory of Sound and Its Origin into Indian Thought, Allahabad University Studies, Volume II, P. 260
(b) Sarvadarśana saṁgraha of Sāyaṇa Mādhava, ed. M. Vasudeva Shastri, p. 299

किन्तु किञ्चित्कालानन्तरं यदा शनैः शनैः पूर्णरूपेण प्रकाशविषयतामागच्छति, तदैव घटज्ञानं सम्पद्यते। अत एव घटोऽयमित्याकारिका धीर्न दीपप्रज्वलनवेला-सहभाविनी, अपितु दीपप्रकाशेन गृहे निरन्तरं दीपिते सति घट एवायमित्याकारकं यथार्थज्ञानं पश्चाद्भावि। यथा वा सकृच्छ्लोके पठिते सति, स्वाध्याय-परस्य ब्रह्मचारिणो मनसि झटित्येव तस्य श्लोकस्य संस्कारः सुस्थिरतां नोपयाति, परं मुहुर्मुहुः पठनेनासावेव श्लोकः बुद्धिस्थः सन् करतलबदरवत् स्पष्टतामुपयाति[1]। एवमेव पूर्ववर्णोच्चारणेनाभिव्यक्तोऽपि स्फोटो मन्दसंस्कार-रूपेणावतिष्ठमानोऽन्त्यवर्णोच्चारणेन प्राकट्यमुपयातो घटत्वपटत्वाद्यर्थबोधको भवति।[2]

एव व्यञ्जनाया मूलं स्फोटदर्शने विभाव्यम्। न केवलं व्यञ्जनाया मूलमेव स्फोटदर्शने दृश्यतेऽपितु ध्वनिशब्दोऽपि काव्यतत्त्वज्ञैर्वैयाकरणेभ्य एवोपात्तः। स्फोटदर्शने क्षणावस्थायिनां कत्वखत्वादीनां वर्णानां स्फोटाभिव्य-क्तिहेतुत्वाद् ध्वनिरिति संज्ञा। एवमाशुविनाशिनो वर्णा ध्वनयो वैयाकरणानां मते। अयं ध्वनिशब्दो वैयाकरणेभ्य आदाय ध्वनिवादिभिः पारिभाषिकेऽर्थे व्यवहृतः। यथाङ्गीकृतमानन्दवर्धनाचार्येण—

**परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहारः।**[3]

---

१. यथानुवाकः श्लोको वा सोढत्वमुपगच्छति।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते॥
—भर्तृहरिः, वाक्यपदीयम्, १,८३

२.(क) एके तावदाचक्षते प्रथमवर्णश्रवणवेलायां स्फोटोऽभिव्यक्तो भवति। न च द्वितीयादिवर्णवैफल्यं तदवगतेरेवातिशयकरणाद्यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपमलंप्रकाशमानमपि पुनः पुनः परीक्ष्यमाणानां चरमे चकास्ति निरवद्यं रत्नतत्त्वम्, एवमिहापि प्रथमवर्णश्रुत्या व्यक्तेऽपि स्फोटे स्फुटतरप्रतीत्यै वर्णान्तराणि प्रयोक्ष्यन्ते।
शुक्लः, सूर्यनारायणः; जयन्तभट्टः, न्यायमञ्जरी, पृ० ३४०

(ख) स्फुटत्यर्थोऽस्मादिति स्फोट उच्यते। न च वर्णोच्चारणवैयर्थ्यम्। पूर्वपूर्व-ध्वनिजनिताव्यक्तज्ञानजन्याखिलसंस्कारसहकृतस्यान्त्यध्वनेः स्फोटाभि-व्यक्तिहेतुत्वात्।
भट्टाचार्यः, शिवप्रसादः, मम्मटः, काव्यप्रकाशः, संकेतटीका, पृ० २३४,

३. पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ४४३-४४

## व्यञ्जनाया विकासः

यद्यपि प्राचीनेषु दर्शनग्रन्थेषु व्यञ्जनाया मूलं दृश्यते, काव्यशास्त्रज्ञैश्च प्राचीनान् ग्रन्थानेवाश्रित्य व्यञ्जना-विचारः कृतः, तथापि यथा ध्वनिवादिभिः पारिभाषिकेऽर्थे व्यञ्जनापदं व्यवह्रियते, काव्ये तन्माहात्म्यञ्च जेगीयते, न तथा आनन्दवर्धनाचार्यात् प्राक् केनाप्याचार्येण व्यञ्जनाव्यापारो ध्वनिर्वा विचारितः। आनन्दवर्धनाचार्येण तदनुयायिनाऽभिनवगुप्तपादाचार्येणैव वैयाकरणानां स्फोटदर्शनेन सह व्यञ्जनायाः साम्यं प्रदर्श्य काव्ये तदुपयोगः प्रकाशमानीतस्तन्माहात्म्यञ्चोन्मीलितम्। एवं काव्यशास्त्रे व्यञ्जनायाः संस्थापकौ आनन्दवर्धनाभिनवगुप्तपादाचार्यावेव ।

### आनन्दवर्धनाचार्यात् प्राक् व्यञ्जनाविषये आलङ्कारिकाः

#### भामहोद्भटौ

आनन्दवर्धनाचार्यात् प्राक् भामहप्रभृतिभिराचार्यैः प्राचीनशास्त्रकारानुमोदितयोरभिधालक्षणयोः शब्दशक्त्योस्तूल्लेखः कृतः।[1] परं व्यञ्जनानाम्ना काऽपि वृत्तिस्तैर्न विचारिता। नापि च ध्वनिचर्चा तैः कृता। तेषां काव्यशास्त्रेषु वाच्यवाचकधर्ममूलानामलङ्कारवृत्तिरीतीनां विचारः समुपलभ्यते, परं न ध्वनेर्नापि च तज्जीवातुभूताया व्यञ्जनावृत्त्याः। परं तथापि ध्वनितत्त्वं तदनुप्राणिका व्यञ्जना च तेषां बुद्धावस्फुटस्फुरितं दृश्येते।

स्पष्टतो ध्वनिमनुल्लिखद्भिरपि भामहादिभिराचार्यैर्भङ्ग्यन्तरेणालङ्कारगुणछद्मनासौ स्वीकृतः। भामहोद्भटाचार्याभ्यां पर्यायोक्तालङ्काररूपेण प्रतीयमानोऽर्थः स्वीकृतस्तस्य चानभिधेयत्वं कण्ठतः प्रोक्तम्। एतद्धि पर्यायोक्तालङ्कारलक्षणप्रसङ्गे स्फुटं प्रमाणीभवति।

उद्भटविवेचिते पर्यायोक्तालङ्कारे प्रच्छन्नरूपेण प्रतीयमानार्थप्रत्यायनार्थमभिधातिरिक्तायाः कस्याश्चन वृत्तेः स्वीकारः कृतो दृश्यते। कासौ वृत्तिर्भवेदिति तु भामहोद्भटाचार्याभ्यां न प्रोक्तम्, परन्तु काप्यभिधातिरिक्ता वृत्तिरवश्यं स्वीकरणीया भवति। पर्यायोक्तालङ्कारे वाच्यवाचकवृत्तिभ्यां न निर्वाहस्तत्र पर्यायेणान्यरूपेणार्थसामर्थ्येनार्थस्याभिधानात्। अयमन्यरूपेणार्थप्रत्यायकता न व्यञ्जनाबाह्या। यदि पर्यायोक्तेऽलङ्कारे वाच्यवाचकवृत्तिभ्यां शून्यः कश्चिदभिधाभिन्नः प्रकार एषणीयोऽर्थावगमनार्थम्, तदाभिधातिरिक्तो यो व्यापारोऽवशिष्यते, असौ व्यञ्जनैव।

---

१. भट्टोद्भटवामनादिना। भामहोक्तं 'शब्दश्छन्दोऽभिधानार्थः' (१,९) इत्यभिधानस्य—शब्दाद् भेदं व्याख्यातुं भट्टोद्भटो बभाषे—शब्दानामभिधानमभिधाव्यापारः, मुख्यो गुणवृत्तिश्च। वामनोऽपि सादृश्याल्लक्षणा वक्रोक्तिः (४.३.८) इति।

—प्रो० कुप्पुस्वामी शास्त्री, ध्वन्यालोकलोचनम्, पृ० ६८

एवं यद्यप्युद्भटाचार्येण कण्ठतो व्यञ्जनाव्यापारो न सम्प्रतिपन्नः परं तथापि पर्यायोक्तादौ वाच्यव्यतिरिक्तस्यार्थस्य सद्भावस्तस्य च वाच्यवाचकभावभिन्नेन प्रकारान्तरेण प्रत्यायनमुद्भटाचार्येणाङ्गीकृतमेव ।[1]

इत्थमानन्दवर्धनाचार्यात् प्राक् प्रतीयमानोऽर्थस्तद्द्योतनपरोऽभिधातिरिक्तो व्यापारश्च काव्यलक्ष्मविधायिनां भामहोद्भटादीनां मनस्सु स्फुरिताववश्यं विभाव्येते। स एवास्फुट-स्फुरितो विचार आनन्दवर्धनाचार्येण ध्वनिनाम्ना व्यवस्थापितः। उद्भटकृतकाव्यालङ्कारसारसङ्ग्रहस्य प्रतिहारेन्दुराज-राजानक-तिलककृताभ्यां टीकाभ्यामपीदं स्पष्टं भवति यत्पर्यायोक्तेऽलङ्कारेऽर्थान्तर-प्रतीतिर्नाभिधया नापि च तात्पर्यवृत्त्या प्रत्युत तद्व्यतिरिक्तेन प्रकारान्त-रेणैव ।[2]

**दण्डी**

दण्ड्याचार्येणापि भामहोक्तदिशा पर्यायोक्तलक्षणमुपनिबद्धम् ।[3] एवं

---

१. पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥
उद्भटः, काव्यालङ्कारसारसंग्रहः, ४, ६

२. (क) वाचकस्याभिधायकस्य स्वशब्दस्य वृत्तिर्व्यापारो वाच्यार्थप्रत्याय-नम् । वाच्यस्य त्वभिधेयस्य व्यापारो वाच्यान्तरेण सहाकांक्षा-सन्निधियोग्यतामाहात्म्यात् संसर्गगमनम् । एवंविधश्च यो वाच्यवाचकयोर्व्यापारस्तमन्तरेणापि प्रकारान्तरेणार्थसामर्थ्यात्म-नावगमस्वभावेन यदवगम्यते तत्पर्यायेण स्वकण्ठानभिहितमपि सान्तरेण शब्दव्यापारेणावगम्यमानत्वात् पर्यायोक्तं वस्तु ।
बनहट्टी, नारायणदासः, उद्भटकृतकाव्यालङ्कारसारसंग्रहः,
प्रतिहारेन्दुराजकृता लघुवृत्तिटीका, पृ० ५५.

(ख) वाचकवृत्तिरभिधा । वाच्यवृत्तिराकांक्षासन्निधियोग्यतावशात् संसर्गगमनम् । ताभ्यां विनार्थसामर्थ्यात्मनाऽवगमस्वभावेन यत् प्रतिपाद्यते तत्पर्यायेणान्येन रूपेणाभिधानमिति पर्यायोक्तम् ।
रामास्वामी, क० स०, उद्भटकृतकाव्यालङ्कारसारसङ्ग्रहः,
राजानकतिलककृता विवृतिटीका, पृ० ३५

३. अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ।
यत्प्रकारान्तराख्यानं पर्यायोक्तं तदीदृशम् ॥
दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यामास्यतामिह ॥

दण्ड्याचार्यमतेऽपि पर्यायोक्तेऽलङ्कारेऽर्थः साक्षान्नाभिधीयते, प्रत्युत प्रकारान्तरेणोच्यते। ध्वनिवादिभिरपि ध्वनेर्गोप्यमानतोदितचारुत्वात्मकं स्वरूपं प्रोक्तम्। ध्वनावपि प्रतीयमानोऽर्थः साक्षान्नाभिधीयते, प्रत्युत प्रकारान्तरेण गम्यते। एवं पर्यायोक्तालङ्कारभङ्ग्या प्रतीयमानोऽर्थो दण्डिनाप्यभ्युपगत एव।

दण्डिनाचार्येण न केवलमलङ्कारगुणादिभङ्ग्या प्रतीयमानोऽर्थ एव स्वीकृतः, प्रत्युत काव्ये लक्षणाया उपयोगं प्रदर्शयता व्यञ्जनावृत्तिरप्युत्सूत्रिता।

**निष्ठ्यूतोद्गीर्ण-वान्तादयश्शब्दा लाक्षणिकत्वादेव मनोहराः, न तु वाचकत्वात्।**[1] अतः काव्ये लक्षणामङ्गीकृत्य प्रयोजनरूपार्थप्रत्यायनार्थं व्यञ्जनाप्याश्रयणीया भवति। एवं काव्ये लक्षणाचमत्कारवादिना प्रकारान्तरेण व्यञ्जनाप्यभ्युपगता भवति।

किञ्च दण्डिनाचार्येण ध्वनिवादिमतानुकूलं स्पष्टमभिहितोऽर्थो ग्राम्यत्वात्तुच्छः प्रोक्तः। यथाहि—

**कन्ये कामयमानं मां त्वं न कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्याय प्रकल्पते॥**[2]

इत्यत्र प्रेमरूपार्थस्य स्पष्टाभिधानाद् दण्डिनात्र ग्राम्यता प्रोक्ता। परमयमेवार्थो यदा नाभिधीयते, प्रकारान्तरेण प्रोच्यते तदा तस्यार्थस्य प्रतीयमानत्वात् काप्यनवद्या चारुतोदेति। तद्यथा—

**कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः॥**[3]

---

संगमय्य सखीं यूना सङ्केते तद्रतोत्सवम्।
निर्वर्तयितुमिच्छन्त्या कयाऽप्यपसृतं तया॥
दण्डी, काव्यादर्शः, २,२९५-९७

१. निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥
पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः।
इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति॥
दण्डी, काव्यादर्शः, १,९४-७९

२. तत्रैव, १,६३

३. तत्रैव, १,६४

पूर्वोक्त एवार्थोऽत्र स्पष्टमनभिधायेत्थं प्रकारान्तरेण प्रतिपाद्यते। अतोऽत्र किमप्यधिकं चारुत्वं प्रादुर्भवति। अन्यथार्थस्य स्पष्टावेदने ग्राम्यतैव सहृदय-हृदयोद्वेजिनी। इत्थमर्थस्य प्रतीयमानस्याभिधादिभिन्नेन प्रकारान्तरेण कथनं गुणवृत्तेश्च चमत्कारो दण्डिना सर्वथाभ्युपेयेते। ध्वनिवादिभिरपि साक्षा-दभिधेयेऽर्थे चारुत्वमनभिनन्द्य प्रतीयमानेऽर्थ एव परमा चमत्कृतिः स्वीकृता।

**वामनः**

वामनाचार्येणापि **सादृश्याल्लक्षणा वक्रोक्ति**[1]रिति वदता दिङ्मात्रं व्यञ्जना प्रदर्शिता। तन्मते सादृश्यनिबन्धना लक्षणा वक्रोक्तिः। एवं वक्रोक्ता-वलङ्कारे यश्चत्कारोऽसौ लक्षणोत्थाप्यः। तथाहि—

**उन्मिमील कमलं सरसीनां कैरवञ्च निमिमील मुहूर्त्तात्।**[2]

इत्यत्रोन्मीलननिमीलनौ नेत्रधर्मौ कमलकैरवयोरनुपपन्नौ सादृश्यसम्बन्धाद् विकास-सङ्कोचौ लक्षयतः, तेनात्र लक्षणा चमत्कारमादधाति। कमलकैरवौ विकसतः सङ्कुचत इत्यभिधाने न काचिच्चमत्कृतिः। उन्मीलननिमीलनाभ्यां लाक्षणिकाभ्यां पदाभ्यामेवात्र वक्रोक्त्यलङ्कारः। वामनाचार्येण लक्षणायां झटित्यर्थप्रत्यायनक्षमत्वाच्चमत्कृतिरभ्युपगता। अतो वक्रोक्त्यलङ्कारे लक्षणा चमत्काराधायिनी। एवमेव—

**इह च निरन्तरं नवमुकुलपुलकिता हरति माधवी हृदयम्।**
**मादयति च केसराणां परिणतमधुगन्धि निःश्वसितम्॥**[3]

इत्यत्र निःश्वसितमिति पदस्य लाक्षणिकत्वात्तेन च सादृश्यनिबन्धनमुखेन परिमलनिर्गमरूपिणोऽर्थस्य प्रतीतौ चमत्कारः। तथात्वे वक्रोक्तौ सादृश्यनिबन्धन-लक्षणामूलश्चमत्कारः काव्यज्ञान् प्रीणयतीति वामनमतेन सिद्धम्।

**रुद्रटः**

रुद्रटाचार्येण भावालङ्कारं लक्षयता व्यञ्जनायाः कपाटमुद्घाटितम्। यतो हि भावालङ्कारे व्यञ्जनाद्योतितस्य व्यङ्ग्यार्थस्य स्वरूपं सुतरां स्फुटं परि-लक्ष्यते। रुद्रटप्रोक्तोऽयं भावालङ्कारो द्विविधः। प्रथमे भेदे वाच्यार्थः स्वसिद्धये व्यङ्ग्यमर्थमाक्षिपति, द्वितीये भेदे अभिधेयार्थः परार्थं स्वं समर्पयति। तद्यथा—

---

१. वामनः, काव्यालङ्कारसूत्रवृत्तिः ४, ३, ८
२. सूरिः श्रीकृष्णः, वामन-काव्यालङ्कारसूत्रवृत्तिः, पृ० १३०
३. तत्रैव, पृ० १३०

यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन ।
गमयति तदभिप्रायं तत्प्रतिबन्धञ्च भावोऽसौ ॥[१]

इति प्रथमस्य भावस्य लक्षणम् । अस्योदाहरणम्—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥[२]

इत्यत्र नायिकाया मुखमालिन्यं वाच्यं स्वोपपत्तयेऽनया कस्यचित्तरुणस्य कृते वञ्जुलगहने सङ्केतोऽकारि कर्मान्तरव्यासङ्गाच्च न तत्र संप्राप्ता इति व्यङ्ग्य-माक्षिपति । परत इदमेवोदाहरणं मम्मटेन गुणीभूतव्यङ्ग्यव्याख्याने प्रदत्तम् । ध्वनिवादिदिशा अत्र वाच्यार्थस्य तरुण्या मुखमालिन्यस्य प्राधान्यमाक्षिप्तञ्च वञ्जुललतागहने नायिकाया अनागमनरूपं व्यङ्ग्यं गुणीभूतं वाच्यार्थ-मेवोपस्करोतीति गुणीभूतव्यङ्ग्यता ।

भावालङ्कारस्यान्यः प्रकारः रुद्रटेनैवं लक्षितः—

अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम् ।
अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥[३]

अस्योदाहरणम्—

एकाकिनी यदबला तरुणी तथाहमस्मिन् गृहे गृहपतिश्च गतो विदेशम् ।
किं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥[४]

अत्र प्रकटप्रतिषेधरूपोऽर्थो वाच्यो वासं याचमानं तरुणपथिकं प्रति प्रोषितपति-कायाः कामान्धायाः कस्याश्चिद्योषितोऽभिलाषं व्यङ्ग्यं द्योतयति । वाच्यार्थो व्यङ्ग्यार्थसिद्धये स्वं समर्पयतीति कृत्वात्र व्यङ्ग्यार्थस्य प्राधान्यम् । अयमेव ध्वनिवादिनां वस्तुध्वनिः । यतो हि ध्वनिप्रस्थानपरमाचार्येण मम्मटभट्टेना-स्यैवानुध्वनिः कृतो वस्तुध्वनिमुदाहरता ।[५]

इत्थं रुद्रटाचार्यस्य भावालङ्कार आनन्दवर्धनोद्भावितस्य ध्वनेरग्रदूत इति कथयितुं शक्यते ।

---

१. रुद्रटः, काव्यालङ्कारः, ७, ३८

२. तत्रैव, ७, ३९

३. तत्रैव, ७, ४०

४. तत्रैव ७, ४१

५. पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥
करमरकरः, र० दा०, मम्मट-काव्यप्रकाशः, पृ० १३३

**अग्निपुराणम्**

अग्निपुराणे गुणालङ्कारादीनां काव्याङ्गानां वर्णनं दृश्यते । तत्रैव शब्दार्थालङ्कारविचारप्रसङ्गेऽभिधादीनां वृत्तीनामपि विवेचनम् । तत्रैवाभिव्यक्ति-र्नामालङ्कारोऽग्निपुराणकारेण प्रोक्तः । अस्य भेदोपभेदा अधोलिखितप्रकारेणोह्याः—




अत्राग्निपुराणकारेण श्रुतिनाम्नाभिधालक्षणे व्याख्याते । तत्र पारिभाषिकी श्रुतिरभिधासहोदरी, औपचारिकी श्रुतिश्च लक्षणासब्रह्मचारिणी ।

**सा (स्वा) भिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः ।**
**यया शब्दो निमित्तेन केनचित् सौपचारिकी ॥**
**सा च लाक्षणिकी······ ॥[2]**

इत्यनेन स्पष्टं यदौपचारिकीश्रुतिनाम्नाऽग्निपुराणकारेण शास्त्रप्रसिद्धा लक्षणा व्याख्याता ।

एवं श्रुतिनाम्नाऽभिधालक्षणे विचार्याग्निपुराणकारेणाक्षेपनाम्ना व्यञ्जना प्रोक्ता । यथा ध्वनिवादिनां व्यञ्जनाऽभिधालक्षणाभ्यामलभ्यमर्थमवगमयितुं प्रगल्भते, तथाक्षेपेणापि श्रुत्यलभ्योऽर्थो बोध्यते । अयमाक्षेप एव ध्वनिः । ध्वनौ

---

१. प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि ।
तस्या भेदो श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणम् ।
भवेन्नैमित्तिकी पारिभाषिकी द्विविधैव सा ।
सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी ।
मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा ॥
अग्निपुराणम्, ३४५, ७६

२. अग्निपुराणम्, ३४५, ९—१०

शब्दार्थौ स्वात्मानमुपसर्जनीकृत्य व्यङ्ग्यमर्थं बोधयतः, आक्षेपे चाग्निपुराणकारप्रोक्ते विशेषार्थाभिधानेच्छया इष्टस्य वस्तुनः प्रतिषेध इव भवति। उभयत्र शब्दार्थयोरुपसर्जनीभावः, विशेषार्थस्य च ग्रहणम्। अत आक्षेपव्यञ्जनयोस्तुल्ययोगक्षेमत्वादुभयोः सब्रह्मचारित्वम्। यथोक्तमग्निपुराणकारेण—

**श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतसाम्।**
**स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः।**
**शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम्।**
**प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।**
**तमाक्षेपं ब्रुवन्त्यत्र ... ... ...॥**[१]

अनेनोद्धरणेनेदमवदातं भवति यदग्निपुराणकार आक्षेपनाम्ना व्यञ्जनाव्यापारं विवृणोति, ध्वन्यालोकग्रन्थे व्यवस्थापितं ध्वनिञ्चाक्षेपालङ्कारशरीरेऽन्तर्भावयति। आनन्दवर्धनोपनिबद्धं ध्वनिलक्षणमग्निपुराणकारः पर्यायान्तरेण प्रतिपादयति। तथा सत्याक्षेपलक्षणमग्निपुराणकारप्रोक्तं सर्वथा ध्वननव्यापारानुसंवादीतिकृत्वाग्निपुराणे सुस्पष्टं ध्वनेर्विचारः पारिभाषिकेऽर्थे विभाव्यते।

अत्रेदं चिन्त्यं यदग्निपुराणध्वन्यालोकयोर्मध्ये कतरो ग्रन्थः प्राचीनतरः। तत्र पाण्डुरङ्गवामनकाणे, सुशीलकुमार डे, ए० शङ्करनप्रभृतिभिः काव्यशास्त्रगवेषकैर्विपश्चिद्भिः प्रबलाभिर्युक्तिभिरग्निपुराणस्थकाव्यशास्त्रविषयकाणामध्यायानां रचनाकालो ध्वन्यालोकात् परवर्ती निर्धारितः।[२]

**'शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम्'**[३]

---

१. अग्निपुराणम्, ३४५, १४—१३
यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
आनन्दवर्धनः, ध्वन्यालोकः, १, १३

२. (a) Therefore, the Agnipurāṇa is later than Bhāmaha, Daṇḍin, Dhvanyāloka and probably Bhoja and has no claim to be regarded as the original work on the Alaṁkāraśāstra. Kane, P. V., History of Sanskrit Poetics, p. 10
(b) Vide-De, Sushil Kumar, Sanskrit Poetics, Vol I, p. 98
(c) Vide-Shankaran A., The Theories of Rasa and Dhvani, p. 39

३. अग्निपुराणम् ३४५, १५

इत्यग्निपुराणे दृश्यमानं श्लोकार्धम्—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ**[1]

इति ध्वन्यालोकस्य कारिकार्धभागमनुध्वनति। तत्र ध्वन्यालोककारेणाग्निपुराणकाराद् ध्वनिलक्षणमुपात्तं भवेदिति तु न शङ्क्यम्। यतो ह्यग्निपुराणकारो भरतभामहरुद्रटादीनामाचार्याणां श्लोकान्नामग्राहमुद्धरति। यदा ध्वन्यालोककारसमानकालभाविनां रुद्रटरुद्रभट्टादीनां श्लोका अग्निपुराणकारेण संगृहीतास्तदा ध्वन्यालोकस्य कारिकाया अपि किञ्चित् परिवर्तनेनोल्लेखः सम्भव इत्यनुमातुं शक्यम्। एवं पुराणकारेणैव ध्वनिलक्षणं ध्वन्यालोकादुपात्तं भवेदिति कल्पना युक्ता।

किञ्च

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं प्रतिपद्यते॥**
**शृंगारी चेत् कविः काव्ये जातं रसमयं जगत्।**
**स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥**[2]

इत्यानन्दवर्धनाचार्यलिखितं श्लोकद्वयमभिनवगुप्तपादाचार्येण तन्नाम्ना स्पष्टमभिनवभारत्यां स्वकीयायां नाट्यशास्त्रटीकायां समुट्टङ्कितम्।[3] इदं श्लोकद्वयमग्निपुराणेऽपि यथा लिखितरूपेणाङ्कितं समुपलभ्यते।[4] तेनैतत् स्पष्टं यदग्निपुराणस्य काव्याङ्गविचारपरोऽध्यायः ध्वन्यालोकात् पश्चाद्वर्ती।

एवमग्निपुराणस्य काव्यशास्त्रविषयकस्याध्यायस्यानन्दवर्धनाचार्यानन्तरं जातत्वात्, आनन्दवर्धन एव ध्वनेः काव्यशास्त्रे लिखितरूपेण व्यवस्थापक आद्य आचार्यः सिध्यति।

अनेन विवेचनेनैतत् स्पष्टं भवति यदानन्दवर्धनाचार्यात् प्राक् काव्ये गुणवृत्तिव्यवहारं स्वीकुर्वद्भिर्दण्डिवामनादिभिराचार्यैर्भावालङ्कारं व्याकुर्वता रुद्रटाचार्येण च व्यञ्जनावृत्तेः सूत्रं किञ्चिदुत्सूत्रितम्। यतो गुणवृत्तिः सर्वदा व्यञ्जनामुखप्रेक्षिणी। गुणवृत्तौ प्रयोजनस्य सर्वथापेक्षा तद्विना लक्षणायां चमत्काराभावे तदग्राह्यत्वात्। प्रयोजनञ्च लक्षणायाः प्रवर्तकं व्यञ्जनैकगम्यमिति निश्चप्रचम्। तथात्वे गुणवृत्तिव्यवहारमङ्गीकुर्वद्भिर्वामनादिभिः

---

१. आनन्दवर्धनः, ध्वन्यालोकः १,१३

२. शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ४९८

३. तत एवोक्तं शृङ्गारी चेत् (ध्व० ३,४२) इत्यादि आनन्दवर्धनाचार्येण। आचार्यो विश्वेश्वरः, हिन्दी अभिनवभारती, पृ० ५५१

४. अग्निपुराणम्, ३४५, १८

कण्ठतो व्यञ्जनामनभ्युपगम्य भङ्गयन्तरेणासौ स्वीकृता।[1] प्रतीयमानोऽर्थश्च यो ध्वनिवादिभिर्ध्वनिनाम्ना मूर्धाभिषिक्तः कृतः, सोऽप्यानन्दवर्धनात् पूर्ववर्तिभिरालङ्कारिकैर्गुणालङ्कारेष्वेवान्तर्भावितः।[2] परं ध्वनिशब्देन तैर्व्यवहारो न कृतः। सर्वथा काव्ये प्रतीयमानार्थमहिमा तैरभ्युपगत एव।

एवं यद्यपि भामहोद्भटादिभिराचार्यैर्गुणवृत्तेः काव्ये व्यवहारं प्रदर्शयद्भिर्व्यञ्जनाया दिङ्मात्रमुन्मीलितम्, रुद्रटाचार्येण च भावालङ्कारभङ्गया ध्वन्यमानः प्रतीयमानोऽर्थः स्वीकृतः, तथापि तैः पृथग्वृत्तिरूपेण व्यञ्जना न स्वीकृता, प्रतीयमानोऽर्थश्च व्यञ्जनावेद्यो वाच्यवाचकधर्मेष्वलङ्कारेष्वेव समावेशितः, न तु तद्व्यतिरिक्तः प्रोक्तः। परं ध्वनिसिद्धान्ते प्रतीयमानोऽर्थः सर्वथाऽलङ्कारव्यतिरिक्तः स्वतन्त्रः प्रभुः। वृत्तिश्च व्यञ्जनैव तत्प्रत्यायिका।

आनन्दवर्धनाचार्येणालङ्कारेष्वन्तर्हितोऽसौ प्रतीयमानोऽर्थो ध्वनिनाम्ना प्रकाशमानीतोऽलङ्कारेभ्यश्चासौ सर्वथा विविक्तो व्यञ्जनावेद्य एवेति सयुक्तिकं प्रदर्श्य ध्वनिनाम्नासौ मूर्धाभिषेकं दत्त्वा काव्यशास्त्रे व्यवस्थापितः। ध्वनिवादिनां मते प्रतीयमानार्थस्यालङ्कारान्तर्गतत्वाद् गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्। परं प्रतीयमानेऽर्थे वाच्यातिशयिनि सत्युत्तमं ध्वनिकाव्यम्। एवं प्रतीयमानोऽर्थो ध्वनिसिद्धान्ते तदैव ध्वनिनाम्ना व्यपदिश्यते यदासौ वाच्यार्थमतिशेते।

---

१. यद्यपि च ध्वनिशब्दसङ्कीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित् प्रकारः प्रदर्शितः, तथापि अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक् स्पृष्टोऽपि न लक्षितः।
विष्णुपादः, भट्टाचार्यः, आनन्दवर्धन—ध्वन्यालोकः, उद्योतः प्रथमः; पृ० १६

२. (क) इह तावद् भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयाऽलङ्कारपक्षनिक्षिप्तं मन्यन्ते। तथाहि—पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्योपस्कारकत्वेन 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः। रुद्रटेन तु भावालङ्कारो द्विविधैवोक्तः। रूपकदीपकापह्नुतितुल्ययोगितादावुपमाद्यलङ्कारो वाच्योपस्कारकत्वेनोक्तः। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता। रसवत्प्रेयःप्रभृतौ रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। तदित्थं त्रिविधमपि प्रतीयमानमलङ्कारतया प्रख्यापितमेव।
वी० राघवन्, रुय्यक—अलङ्कारसर्वस्वम्, पृ० ३-४

यदि प्रतीयमानोऽर्थः अप्रधानः सन् वाच्यार्थमुपस्करोति, तदा पर्यायोक्तसमासोक्त्याद्यलङ्कारता । प्रतीयमानार्थस्य च गुणीभावे मध्यमं गुणीभूतव्यङ्ग्यं काव्यम् । परं यदा प्रतीयमानोऽर्थोऽङ्गी उपमाद्यलङ्कारैर्भूष्यते, तदा तस्य प्राधान्याद्ध्वनिः ।[1] एतदेवावलम्ब्य मम्मटाचार्येण ध्वनिगुणीभूतव्यङ्ग्ययोर्भेद इत्थं प्रदर्शितः स्वकीये काव्यप्रकाशे—

**इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः ।[2]**
**अतादृशि गुणीभूतव्यङ्ग्यम् व्यङ्ग्ये तु मध्यमम् ।[3]**

एवमानन्दवर्धनाचार्यात् पूर्वं भामहोद्भटप्रभृतिभिर्गुणीभूतव्यङ्ग्यं मध्यमं काव्यमेव व्याख्यातम्, नतूत्तमं ध्वनिकाव्यमुन्मीलितम् । असौ ध्वनिर्यद्यप्यलङ्काराणां भङ्ग्या तेषां बुद्धौ किञ्चित् स्फुरित आसीत्, परं प्रकाशे नायातः । सोऽयं चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वो ध्वनिरानन्दवर्धनाचार्येण ध्वन्यालोके परमां प्रतिष्ठां प्रापितः ।

## व्यञ्जनाया महत्त्वम्

काव्ये ध्वनितत्त्वस्य प्रतिष्ठा अभिधातात्पर्यलक्षणातिरिक्ताया: व्यञ्जनावृत्तेः स्वीकारेणैव भवति । मीमांसान्यायादिदर्शनग्रन्थेषु अभिधातात्पर्यलक्षणावृत्तीनामेव विचारः, नतु व्यञ्जनावृत्तेः । एवं प्राचीनशास्त्रकारानुमोदितशब्दवृत्तीनां सद्भावे व्यञ्जनारूपायास्तुरीयवृत्तेः परिकल्पनं न सर्वथा निरुपद्रवमासीत् । अत एव मीमांसकैर्नैयायिकैश्च व्यञ्जनायास्तुरीयवृत्तित्वेनाविष्कारः सर्वथा खलीकृतः । तस्याश्चाभिधालक्षणयोरन्तर्भावः प्रोक्तः । इत्थं प्राचीनशास्त्रकारानुल्लिखितचराया व्यञ्जनाया विचारमकुर्वाणैर्भामहोद्भटप्रभृतिभिश्चिरन्तनालङ्कारकारैः परिस्फुरितोऽपि ध्वनिर्व्यञ्जनावृत्त्यभावे उपेक्षितः । ध्वनितत्त्वस्य प्राणभूतेयं व्यञ्जना । तदनभ्युपगमे ध्वनिरप्यव्याकृत एव भवति । एवं वाल्मीकिकालिदासादीनां काव्येषु व्यक्तोऽपि ध्वनिर्व्यञ्जनावृत्तेरनन्वेषणादव्याख्यात एवासीद्भामहोद्भटादिविरचितेषु काव्यशास्त्रग्रन्थेषु । परं तथापि

---

१. व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थाऽनुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥
शास्त्री, पं० पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १३०-३१

२. मम्मटः, काव्यप्रकाशः, १,४

३. तत्रैव १,५

काव्यतत्त्वान्वेषकाः सहृदयाः काव्येऽलङ्कारैरतुष्यन्तस्तद्व्यतिरिक्तं काव्यचारुत्वमवश्यमन्यत्र मार्गणे तत्परा भवेयुरिति संलक्ष्यते । अलङ्कारगुणरीतिव्यतिरिक्तं तत् काव्यचारुत्वं तेषां मते ध्वनिरूपेणैव व्यवस्थितमभवत् । एवं सहृदयैर्गोष्ठीषु चर्चितः काव्यलक्ष्मविधायिभिर्भामहादिभिरव्याकृतो ध्वनिरानन्दवर्धनाचार्येण व्यञ्जनामतिरिक्तवृत्तित्वेन संस्थाप्य ध्वन्यालोके दार्ढ्यमानीतः । तदेवानुकृत्य मम्मटादिभिः परवर्तिभिरालङ्कारिकैः प्रबलाभिर्युक्तिभिर्ध्वनिः प्रतिष्ठापितः ।

आनन्दवर्धनाचार्यात् प्राक् कैराचार्यैरयं ध्वनिर्गोष्ठीषु चर्चित इति तु स्फुटं न विभाव्यते । न केनापि ध्वनिवादिनाचार्येण तेषामुल्लेखः कृतः । परम्—

**सत्काव्यतत्त्वनयवर्त्मचिरप्रसुप्तकल्पं मनस्सु परिपक्वधियां यदासीत् ।**
**तद्व्याकरोत् सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः ॥[1]**

इत्यनेनानन्दवर्धनकृतपद्येनेदं प्रतीयते यदानन्दवर्धन एव स्फुरितप्रसुप्तकल्पस्य शास्त्रेष्वव्यवस्थापितस्य बुधैर्गोष्ठीष्वेव चर्चितस्य ध्वनितत्त्वस्य काव्ये प्रतिष्ठापक आद्य आचार्यः । व्यञ्जनाया उद्भावकः कोऽप्यज्ञातनामा सहृदयो भवेन्नाम, परं ध्वनेः काव्यशास्त्रे व्यवस्थापकस्तस्य च प्रबलः पोषक आचार्य आनन्दवर्धन एव विभाव्यते ।

अत एवानन्दवर्धनाभिनवगुप्तप्रभृतीनां व्यञ्जनायाः प्रबलपरिपोषकाणामाचार्याणां पश्चात् मम्मटहेमचन्द्रविद्याधरप्रभृतिभिराचार्यैर्न कोऽपि नवीनः सिद्धान्त आविष्कृतः, प्रत्युत युक्तिपुरस्सरं ध्वनिसिद्धान्त एव परिपोषितः । वस्तुतस्तु व्यञ्जनामहिम्ना ध्वनिसिद्धान्ते पूर्णतां गते नास्ति किमपि काव्यतत्त्वरत्ननिकषोपलान्तरम् । ध्वनौ सर्वं काव्यसौन्दर्यं परिपूर्णम् ।

आनन्दवर्धनाचार्यात् प्राक् भरतमुनेः रसप्रस्थानम्, भामहोद्भटादीनामलङ्कारप्रस्थानं, दण्डिनो गुणप्रस्थानं, वामनाचार्यस्य रीतिप्रस्थानञ्चेमानि प्रस्थानानि काव्यलक्षणग्रन्थेषु प्रख्यापितान्यासन् । परमिमानि प्रस्थानान्यपूर्णान्यासन् । दृश्यकाव्यविवेचनपरं रसप्रस्थानं श्रव्यकाव्यमुपेक्षते । रत्यादयः स्थायिभावा विभावानुभावानां समुचितयोजनया रसे पर्यवस्यन्तः सहृदयानानन्दाकूपारे प्लावयन्तीति रसप्रस्थानं भरतमुनिना नाट्यशास्त्रे उत्सूत्रितम् । परं कथं स्थायिभावा रसतामायान्ति, परमाह्लाददायकाश्च भवन्तीति मुनिना स्पष्टं नोक्तम् ।

भरतमुनिप्रोक्तस्यास्य रसस्य स्वरूपं ध्वनिसिद्धान्त एव सम्यग्विवृतं

---

१. शास्त्री पं० पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ५५२-५३

विभाव्यते, व्यञ्जनां विना रतिशोकादीनां स्थायिभावानां रसतानुपगमात्। रत्यादीनां भावानां व्यञ्जनयाभिव्यक्तिरेव सहृदयहृदयानुरञ्जिका। रत्यादीनां भावानां केवलं स्वशब्देनावेदने कृते न काचित्सरसता। एवंविधोऽहृद्योऽर्थो नास्वादकोटिमारोहति। परमसावेवार्थो यदा विभावानुभावादिभिरभिव्यज्यते, तदा तस्याभिव्यक्तिरेव परमानन्ददायिनी भवति। एवं व्यञ्जनाबलेनैव भरतमुनिव्यवस्थापितो रससिद्धान्तः पूर्णतामुपयाति। व्यञ्जनामहिम्नैव ध्वनिवादिभिः रससिद्धान्तो ध्वनावन्तर्भावितः परिपूर्णताञ्चानीतः। आनन्दवर्धनाभिनवगुप्तादीनां ध्वनिप्रस्थानसंस्थापकानामाचार्याणां रस एव दृढो निर्भरः।[1] परं रसोऽसौ व्यञ्जनयाभिव्यज्यते इति तैः सयुक्तिकं सिद्धान्तितम्। यथोक्तमभिनवगुप्तपादाचार्येण—

**प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव। रसश्च व्यङ्ग्य एव। तस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव।[2]**

एवं व्यञ्जनाव्यापारबलेनैव रसाभिव्यक्तिर्भवतीति व्यञ्जनायाः काव्यशास्त्रे परमं माहात्म्यम्।

—:o:—

१. कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतंत्रेण भवितव्यम्, तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत् तदेमां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्।
शास्त्री पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ३३६

२. तत्रैव, लोचन-भाष्यम्, पृ० ६८—६९

## पञ्चमोऽध्यायः

# शाब्दी व्यञ्जना

व्यञ्जना द्विविधा। शाब्दी व्यञ्जना आर्थी व्यञ्जना चेति। यथोक्तं गोविन्दठक्कुरमहाभागैः—

**अथ व्यञ्जकशब्दलक्षणाय व्यञ्जना निरूपणीया। सा च द्वेधा। शब्दनिष्ठा अर्थनिष्ठा च।**[1]

### (१) शाब्दी व्यञ्जना

शब्दनिष्ठा व्यञ्जना शाब्दी। शाब्द्यां व्यञ्जनायां शब्दस्यैव प्राधान्येन व्यञ्जकत्वम्। यदि व्यञ्जकं शब्दं परिवर्त्य तत्पर्यायान्तरः शब्दः प्रयुज्यते, तर्हि व्यङ्ग्यार्थस्याप्रतीतौ शब्दस्य व्यञ्जकता सर्वथा त्रुट्यति। अतः परिवृत्ति पर्यायशब्देन परिवर्तनमसहिष्णोः शब्दस्य सद्भावे व्यङ्ग्यार्थोल्लासात्तदभावे च तदननुभवाच्छब्दमवलम्बमाना व्यञ्जना शाब्दी। नहि शाब्द्यां व्यञ्जनायां व्यञ्जकशब्दस्य तत्पर्यायवाचिशब्दान्तरेण विपर्यये कृते व्यङ्ग्यार्थस्य प्रतीतिः। नियतः परिवृत्तिमसहमान एव शब्दोऽत्र व्यञ्जकः। अतो व्यञ्जकता सर्वथा परिवृत्त्यसहशब्दायत्तेति कृत्वा शब्दनिष्ठा व्यञ्जना शाब्दीति व्यपदिश्यते।[2] तद्यथा—

**भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।**
**यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥**[3]

---

१. (क) पण्डितदुर्गाप्रसादः, गोविन्द-काव्यप्रदीपः, पृ० ४९

(ख) द्वेधा चैषा—शाब्दी आर्थी चेति। शाब्दी द्वेधा—अभिधालक्षणा-मूलत्वात्।

पण्डितशिवदत्तः, विद्याभूषण-साहित्यकौमुदी, पृ० १६

२. (क) शब्दस्य पर्यायपरिवृत्त्यसहत्वाच्च शाब्दत्वं व्यञ्जनाया बोद्धव्यम्। अभ्यङ्करः, वासुदेवशास्त्री, मम्मट-काव्यप्रकाशः, उद्योतटीका, पृ० ६२

(ख) तत्र येषां शब्दानां विनिमयः कर्तुं न शक्यते, तदाश्रया व्यञ्जना शर्मा बटुकनाथः, आशाधर-त्रिवेणिका, पृ० २५

३. करमरकरः, रघुनाथदामोदरः, मम्मट-काव्यप्रकाशः, पृ० ६२

इत्यत्र भद्रकरादयश्शब्दा यथाश्रुतगृहीताः कल्याणपाणीत्यादिभिः पर्यायशब्दैः परिवर्तनमसहमाना गजरूपिणमर्थमभिव्यञ्जन्ति, नतु विपर्ययेणेतिकृत्वा नियतानां परिवृत्तिमसहिष्णूनां शब्दानां व्यञ्जकत्वे शब्दस्य व्यञ्जना शाब्दी। अयमाशयः। पूर्वोक्ते पद्ये भद्रादयश्शब्दा नृपगजरूपौ द्वावर्थौ बोधयतः। तत्र नृपपक्षे राजाऽयमुच्चान्वयः, शत्रुभिरप्रधर्ष्यः सततं दानादिभिः परेषामुपकारक इत्यर्थः। गजपक्षे च भद्रजातीयोऽयं हस्ती गण्डस्थलनिष्यन्दिमदपिपासुभिर्भ्रमरकुलैः परिवृतोऽत्युच्चो बलिष्ठश्चेत्यर्थः। अत्र भद्रादीनां शब्दानां परिवर्तनं कृत्वा तत्स्थाने कल्याणादिपर्यायशब्दा यदि प्रयुज्येरन्, तदाऽनयोर्द्वयोरर्थयोः प्रतीतिर्व्याहन्येत। एवं परिवृत्तिमसहमानैः भद्रकरादिपदैरेवात्र नृपगजरूपिणोरर्थयोः प्रतीतिः। राजवर्णनप्रसङ्गे नृपरूपिणोऽर्थस्य प्रतीतिः प्राकरणिकी, परं गजरूपिणोऽर्थस्य प्रतीतिरप्राकरणिकी। आद्योऽर्थः प्राकरणिकत्वादभिधया बोध्योऽन्त्यश्च व्यञ्जनया। व्यञ्जनात्र कल्याणादिपर्यायपदपरिवृत्तिमसहमानैर्भद्रादिपदैर्गजरूपिणमर्थं ध्वनयतीति कृत्वा शब्दनिष्ठा शाब्दीति व्यपदिश्यते।

शाब्दी व्यञ्जनापि द्विविधा। अभिधामूला लक्षणामूला चेति।[1]

### (क) अभिधामूला शाब्दी व्यञ्जना

अभिधा मूले यस्याः सा अभिधाश्रिता व्यञ्जना अभिधामूला। अभिधामूलेति नामकरणे बीजद्वयम्। प्रथमं बीजं तावत् नानार्थशब्दस्थले प्रथममभिधा प्राकरणिकमर्थमभिदधाति, अनन्तरञ्चाभिधायां प्रकरणादिप्रतिबन्धकसामग्रीवशात् प्राकरणिकेऽर्थे नियंत्रितायां सत्यां तत्रैव परिस्फुरन्तमप्राकरणिकमर्थमभिव्यञ्जयितुं व्यञ्जनावतरति। एवमभिधायाः प्राकरणिकेऽर्थे नियंत्रणात्, अप्राकरणिकमभिधाऽशक्यसमर्प्यमर्थमवगमयितुं व्यञ्जनाङ्घ्रि निदधातीत्यभिधानन्तरभावित्वात्तस्या अभिधामूला व्यञ्जनेति व्यपदेशो युक्तः। द्वितीयं बीजं हि नानार्थशब्दस्थले प्रतीतिपथमवतीर्णा उच्चावचा अर्था अभिधेया एव, नानार्थकानां शब्दानां तेषु सङ्केतात्। यथा हरिरिति नानार्थकश्शब्दो विष्णुवानरादिषु नानार्थेषु गृहीतसङ्केतः[2]। अतो विष्णुवानरादयोऽभिधेयार्था हरिरिति पदस्य। परं प्रकरणादिप्रतिबन्धकवशान्नानार्थकानां

---

१. अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा।

—विश्वनाथः, साहित्यदर्पणः, २,१३

२. यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥

अमरसिंहः, अमरकोषः, ३,१७५

शब्दानां शक्तिः प्राकरणिकेऽर्थे नियंत्रिता भवति। अतोऽनेकार्थकस्य शब्दस्य सङ्केतितान्नानार्थान् बोधयितुं क्षमाप्यभिधा प्रकरणादिप्रतिबन्धकनिगडीकृता तानर्थान् बोधयितुं न खलु पारयति। तत्राप्राकरणिकमर्थं प्रतिबन्धकसामग्रीशृङ्खलीकृतया अभिधया अशक्यसमर्प्यं व्यञ्जना द्योतयति। अतो व्यञ्जना अभिधेयार्थमेवाभिदधाति, योऽसावर्थः प्रकरणादिप्रतिबन्धकसामग्रीवशान्नाभिधाबोध्यः। इत्थं योऽर्थोऽभिधया प्रतिपाद्यः स एवार्थो व्यञ्जनया बोध्यते इति कृत्वाऽसावभिधामूलेत्युच्यते। अतोऽभिधानन्तरोत्थानात् प्रकरणनिरुद्धस्याप्यभिधेयस्यैवार्थस्य च प्रत्यायनादिति द्वाभ्यां बीजाभ्यां शाब्दी व्यञ्जना अभिधामूलेति। तल्लक्षणं यथा—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया॥**[1]

अयमाशयः। भर्तृहरिणा स्वकीये वाक्यपदीये—

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥**[2]

संयोगादयोऽनेकत्रगृहीतशक्तिकानां हरिरित्यादीनां पदानामेकस्मिन्नर्थे नियामकाः प्रोक्ताः। तेन नानार्थकोऽपि शब्दः प्राकरणिकमेवार्थमभिदधाति, नाप्राकरणिकम्। तद्यथा **सशङ्खचक्रो** हरिरित्यत्र संयोगे प्रतिबन्धके जागरूके सति नानार्थकस्यापि हरिशब्दस्य शक्तिर्विष्णुरूपिण्यर्थे एकत्र नियमिता। शङ्खचक्रयोर्विष्णुना सहैव सम्बन्धान्नान्येन वानरादिना सह। अतः संयोगनियंत्रितशक्तिको नानार्थकोऽपि हरिशब्दो विष्णुरूपिणमर्थमेवाभिदधाति नेतरं वानरादिकम्। **रामलक्ष्मणौ** इत्यत्र परशुरामबलरामादिनानार्थेषु गृहीतशक्तिकोऽपि रामशब्दः साहचर्यवशाद्दशरथसुतं रामरूपमर्थमेवाभिदधाति, रामशब्दस्य शक्तेः साहचर्यात् राघवरूपिण्यर्थे नियंत्रणात्। एवमनेकत्रगृहीतशक्तिकानामपि पदानां शक्तिः संयोगादिषु प्रतिबन्धकेषु जाग्रत्सु सत्सु प्राकरणिकार्थेतरमर्थं सङ्केतितमपि बोधयितुं न प्रगल्भते। प्रत्युत संयोगादिभिः प्रतिबन्धकैर्नियन्त्रिताया

१. विश्वनाथः, साहित्य-दर्पणः, २,१४
२. (क) भर्तृहरिः, वाक्यपदीयम्, २,३१७ (ख) मम्मट-काव्यप्रकाशः, २,२९ (ग) पण्डितशिवदत्तः, हेमचन्द्र-काव्यानुशासनम्: पृ० ३९

अभिधायाः प्राकरणिकार्थप्रत्यायने एवोपक्षयः। अत एवंविधेषु स्थलेषु या अप्राकरणिकार्थप्रतीतिः सा शक्तिभिन्नेनान्येन व्यापारेणैव निर्वाह्या। स एवाप्राकरणिकार्थबुबोधयिषुर्व्यापारो व्यञ्जनाऽभिधामूला। तद्यथा—

दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥[1]

इत्यस्मिन्नुदाहरणे प्रकरणवशान्नानार्थकानां दुर्गभोगिविभूत्यादीनां पदानां शक्तिर्वर्ण्ये भानुदेवरूपिण्यर्थे नियंत्रिता। तेन चानेकत्र गृहीतशक्तयः अपीमे शब्दा 'भानुदेवनृपोऽद्भुतपराक्रमशाली, रूपेण कामदेवमप्यतिशयानः, स्वाधीनीकृतनृपमण्डलः, भगवतो महादेवस्य परमो भक्त' इत्यमुमेवार्थमभिधाय कृतकृत्याः। परमेभिरेव शब्दैः परिवृत्तिमसहमानैः 'पार्वतीवल्लभश्चन्द्रभूषणो विभूतिविभूषितशरीरः परमेश्वरो महादेव' इत्यर्थोऽपि सहृदयानां प्रतीतिपदवीमधिरोहति। नायमपरोऽर्थो महादेवरूपः अभिधया प्रतिपाद्यः। तस्याः प्रकृते भानुदेवनृपरूपिण्यर्थे संयोगादिवशान्नियंत्रितत्वात्। यद्युभावर्थौ प्राकरणिकौ स्यातां तर्हि संयोगादिप्रतिबन्धकाभावे अभिधाबोध्यत्वं तयोरुपपद्येत। परं यत्र प्राकरणिकेन सहाप्राकरणिकस्याप्रस्तुतार्थस्य प्रतीतिरुदेति तत्र व्यापारान्तरमभ्युपेयम्। न ह्यशक्तः शब्दः कदाप्यर्थं बोधयितुं प्रभवति। शक्तिश्चाभिधा। सा च नियंत्रिता प्रकृतेऽर्थे भानुदेवरूपे संयोगादिना प्रतिबन्धकेन। नापि च लक्षणा, मुख्यार्थबाधादिसहकारिसामग्र्यभावात्। अतो यद्व्यापारान्तरमवशिष्यते, तद्ध्वननमेव[2]। दुर्गभोगिभूत्यादीनां पदानां परिवृत्त्यसहत्वात् तदवस्थेभ्य एव तेभ्यो महादेवरूपिणोऽर्थस्य ध्वननात्, तत्र भवन्त्या व्यञ्जनायाः शाब्द्यभिधामूलेति नामकरणं सर्वथा युक्तियुक्तम्।

नानार्थकेभ्यश्शब्देभ्योऽभिव्यक्तः प्राकरणिकार्थेतरोऽर्थो द्विविधः। वस्तु-

---

१. शिवदत्तः, विश्वनाथ-साहित्यदर्पणः, (बम्बई संस्करण) पृ० ६९

२. 'अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिः द्वयोरभिधेयत्वेन पूर्वपश्चाद्भावनैयत्यासम्भवात्। किञ्च द्वितीयार्थबोधने धर्मिकल्पनातो वरं धर्मकल्पनेति भिन्नशब्दकल्पनात् भिन्नैव व्यञ्जनाख्या वृत्तिरङ्गीकर्तुमुचिता।

शिवप्रसादभट्टाचार्यः, मम्मट-काव्यप्रकाशः,
काव्यप्रकाशदर्पणटीका, पृ० ४८

रूपोऽलङ्काररूपश्चेति । वस्त्वात्मकेऽर्थे व्यङ्ग्ये सति वस्तुव्यङ्ग्या अभिधामूला शाब्दी व्यञ्जना, अलङ्काराणामुपमादीनाञ्च ध्वनने सत्यलङ्कारव्यङ्ग्याऽभिधामूला शाब्दी व्यञ्जना । यथोक्तं मम्मटेन—

**अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥**[1]

**वस्तुव्यङ्ग्या अभिधामूला शाब्दी व्यञ्जना**

परिवृत्त्यसहैर्व्यञ्जकैः शब्दैर्वस्तुरूपिणोऽर्थस्य व्यङ्ग्यत्वे वस्तुव्यङ्ग्या अभिधामूला व्यञ्जना । तद्यथा—

**पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥**[2]

अत्र नानार्थकस्य पयोधरशब्दस्य शक्तिर्मेघरूपिण्यर्थे नियंत्रिता । अतः स्तनरूपोऽर्थोऽत्र व्यञ्जनया प्रत्याय्यः । तेन च यद्युपभोगक्षमोऽसि तदाऽऽस्व इति वस्त्वात्मा व्यङ्ग्योऽर्थः परिस्फुरति । अयमाशयः । अत्र काचित्तरुणी प्रावृट्समये पथिकं कञ्चन ग्रामागतं वदति यदस्मिन् ग्रामे कटाद्यास्तरणानामभावः । अतो ग्रामोऽयं न वासयोग्यः । परं तथापि वियति मेघान् दृष्ट्वा धारासम्पातवृष्टिशङ्कया यदि तवात्र विश्रामेच्छा तदा विस्रब्धं विश्रम्यताम् । अयमर्थः प्राकरणिकोऽभिधाबोध्यः । पयोधरादीनां पदानां शक्तेर्मेघाद्यर्थे नियन्त्रणात् । अनन्तरं शब्दशक्तिमूलध्वनिमहिम्ना परिवृत्त्यसहैः पयोधरादिभिः पदैः प्रवृद्धमदनकातर्यायाश्चौर्यरतलुब्धायाः कस्याश्चिदविनयवत्या उपभोगविषयोऽभिलाषो व्यङ्ग्यो वस्तुरूपोऽभिव्यक्तो भवति । अस्मिन् ग्रामे मूर्खाणां ग्रामीणानां शास्त्रादिज्ञानं नास्ति, अतोऽनुपभुक्तौ कामिजनमन्मथोज्जृम्भकौ ममोन्नतौ कुचकुम्भौ दृष्ट्वा यदि कामुकोऽसि, तदोपभोगार्थं त्वयाऽवश्यमेवात्र स्थातव्यमित्यर्थो ध्वनितो भवति । अयमर्थो वस्तुरूपः परिवृत्तिमसहिष्णुभिः पयोधरादिपदैरेवाभिव्यक्तो भवति । तद्विपर्यये मेघादिशब्दप्रयोगे तादृशार्थस्फुरणात् । अतोऽत्र शाब्दी वस्तुव्यङ्ग्याभिधामूला व्यञ्जना स्फुटा ।

---

१. करमरकरः, दामोदररघुनाथः, मम्मट-काव्यप्रकाशः, पृ० १२८

२. तत्रैव, पृ० १३३

**अलङ्कारव्यङ्ग्या अभिधामूला शाब्दी व्यञ्जना**

परिवृत्तिमसहमाना अनेकत्र गृहीतशक्तिकाः शब्दाः यदा अभिधाव्यञ्जनाभ्यां प्राकरणिकाप्राकरणिकोभयविधमर्थं बोधयन्ति, तदा विभिन्नयोरनयोरर्थयोः सम्बन्धः कश्चिदवश्यं कल्पनीयः, अन्यथा असम्बद्धार्थाभिधानदोषप्रसङ्गः। असौ सम्बन्ध उपमोत्प्रेक्षालङ्काररूपः। तेन प्राकरणिकाप्राकरणिकयोरर्थयोः परस्परमुपमेयोपमानभावेनावस्थानान्नासम्बद्धार्थदोषप्रसङ्गः। एवं नानार्थकेभ्यः शब्देभ्योऽलङ्काराणां व्यङ्ग्यत्वे सत्यलङ्कारव्यङ्ग्या अभिधामूला शाब्दी व्यञ्जना भवति। तद्यथा—

**उल्लास्य कालकरवालमिवाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन।**
**निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः॥**[1]

इत्यत्रानेकत्र गृहीतशक्तिकैर्देवादिपदैः नृपदेवेन्द्ररूपिणोरर्थयोः प्रतीतिः। तत्र नृपरूपोऽर्थः प्राकरणिको देवेन्द्ररूपश्चाप्राकरणिकः। प्राकरणिके नृपवर्णनप्रसङ्गे कालकरवालादीनां पदानां शक्तिः संयोगादिभिः प्रतिबन्धकैः कृपाणाद्यर्थेषु नियम्यते। निगडितायां अभिधायाः पुनरुत्थातुमशक्यत्वादेभिरेव पर्यायान्तरमसहिष्णुभिः पदैरप्राकरणिकदेवेन्द्रार्थसम्बद्धानां मेघाद्यर्थानां प्रतीतिर्ध्वननशक्तिमहिम्ना। अनन्तरमप्राकरणिकस्येन्द्रदेवरूपिणोऽर्थस्य प्राकरणिकेन नृपरूपेणार्थेन सह सम्बन्धोऽपि कश्चिदन्वेष्टव्यः। अन्यथा देवेन्द्ररूपः अर्थोऽसम्बन्धत्वाद्धेय एव स्यात्। सम्बन्धश्चात्रोपमानोपमेयरूपः। तथा सति महेन्द्र एवायं राजेति नृपमहेन्द्रयोरभेदात् रूपकालङ्कारोऽभिव्यक्तो भवति। अतएव नात्रासम्बद्धार्थकथनदोषकलङ्कः, प्रत्युत रूपकालङ्कारस्य घण्टान्यायेन ध्वननाद् गुणोऽधिकः। रूपकालङ्कारश्चात्र व्यङ्ग्य एव, महेन्द्र एवायं राजेति स्वशब्देनानावेदनात्। एवमिन्द्रादिपर्यायान्तरपदमसहमानैर्देवादिपदै रूपकालङ्कारस्य ध्वनने कर्त्तव्येऽलङ्कारव्यङ्ग्या अभिधामूला शाब्दी व्यञ्जनात्र सूरिभिर्विभाव्या।

## (अ) अभिधामूलायाः शाब्द्या व्यञ्जनाया विषये आनन्दवर्धनाचार्यस्य मतम्

आनन्दवर्धनाचार्येण शाब्द्या अभिधामूलाया व्यञ्जनाया लक्षणमित्थमुपनिबद्धम्—

---

१. करमरकरः, दामोदररघुनाथः, मम्मट-काव्यप्रकाशः, पृ० १२६

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥[1]

अयमाशयः । यत्र परिवृत्त्यसहशब्दसामर्थ्येनालङ्कारान्तरं व्यङ्ग्यं स्वशब्दानावेदितं सत् प्रकाशते, तत्र शब्दशक्तिमूलो ध्वनिः । यत्रालङ्कारस्य न प्रतीयमानता, प्रत्युत अभिधानशक्त्या वाच्यः सन् साक्षादलङ्कारो ऽभिधीयते, तत्र न ध्वनिरपितु श्लेषादयो वाच्यालङ्काराः । एवमानन्दवर्धनाचार्यमते अलङ्काराणां प्रतीयमानतायामेव शब्दशक्तिमूलो ध्वनिः । तद्यथा—

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥[2]

अत्र केनचिदनुरागिणा व्यामोहितेन कस्याश्चिद् हृदयवल्लभायास्तरुण्या रत्नहारविभूषितं कालागुरुलेपननीलं मन्मथोज्जृम्भकं कामिजनसर्वस्वायमानं कुचकुम्भयुगलं प्रशस्यते । सुन्दरीकुचकलशरूपोऽर्थोऽभिधया समुपस्थाप्यः । एभिरेव पदैः प्रावृण्मेघरूपोऽर्थोऽपि प्रस्फुटति । अत्र स्तनमेघरूपावर्थौ यद्यप्यभिधेयौ, पयोधरशब्दस्योभयत्र शक्तेस्तथापि स्तनमेघयोः परस्परं या रूपणा उपमारूपकादीनामलङ्काराणां प्रसवित्री, असावनभिधेया व्यङ्ग्यत्वेनैव भाति, चमत्कृतिञ्चातनोति । एवं मेघस्तनरूपिणोरर्थयोः प्रतीतिरभिधया भवेन्नाम, परं द्वयोरर्थयोर्या रूपणा सा त्वनभिधेयत्वाद् व्यङ्ग्यैव ।

अनेनेदमायाति यदानन्दवर्धनाचार्येण नानार्थकेभ्यः पदेभ्य अलङ्काराणामेव व्यङ्ग्यत्वे शब्दशक्तिमूलो ध्वनिः सम्प्रतिपन्नः । यदि वस्तुरूपिणोऽर्थस्य प्रतीतिस्तदा न ध्वनिस्तत्र श्लेषाद्यलङ्कारा वाच्याः । नानार्थशब्दस्थले उपमानोपमेयभाव उपमोत्प्रेक्षादीनां प्राणभूतः सर्वदाऽनभिधेयः । वस्तुरूपः प्राकरणिकोऽर्थस्तु शब्दस्य स्वार्थं एव । परमलङ्काराणां गोप्यमानतया परिस्फुरणात् तद्वैपरीत्ये वस्तुरूपिणः प्राकरणिकार्थस्य च साक्षादभिधेयत्वाच्छब्दशक्तिमूलो ध्वनिः सर्वदाऽलङ्काररूप एवाचार्यानन्दवर्धनमते ।

इत्थं पूर्वोदाहृते पद्ये पयोधरेत्यादिपदैः प्रोक्तौ स्तनमेघरूपिणौ द्वावर्थावभिधेयावेव शब्दानां तत्र सङ्केतात् । परं स्वशब्दावेदितोऽभिधेयोऽपि मेघरूपोऽर्थो न स्वात्मनि विश्रान्तिं भजते, प्रत्युतोपमानभावेनावतिष्ठमानः स्तनरूपेणार्थेन सह रूपणामुपगच्छन् वाक्यार्थं बुभूषयन् रूपकालङ्कारस्य

१. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोक; २, २१
२. तत्रैव, पृ० २४२

व्यङ्ग्यत्वे निबन्धनमुपयाति । यदि तन्व्याः कुचकुम्भरूपार्थप्रतीत्युत्तरमनुभूयमानो मेघरूपोऽर्थोऽभिधेयोऽसम्बद्ध एव तदा परिहेय एव स्यात् । अतोऽसम्बद्धार्थाभिधानमेवंविधेषु प्रसङ्गेषु मा भूदिति कृत्वा नानार्थकपदलभ्ययोरर्थयोः सम्बन्धः कश्चित् कल्प्यते । असौ च न स्वशब्दाभिधेयः, परं व्यङ्ग्योऽलङ्काररूपः । अयमलङ्कारो व्यङ्ग्यः सर्वदा नानार्थवद्भिः पदैरेव परिस्फुरति, अतः शब्दशक्तिमूलः ।

एवमानन्दवर्धनाचार्यमते शाब्दी व्यञ्जनाऽलङ्कारव्यङ्ग्यैव । वस्तुरूपः अप्राकरणिकोऽर्थः शब्दानां तत्र साक्षात् सङ्केतादभिधेय एव । तथा सत्यलङ्काराणां व्यङ्ग्यत्वे शब्दशक्तिमूलो ध्वनिः । वस्तुरूपार्थप्रतीतौ तु श्लेषाद्यलङ्काराणां विद्यमानत्वे न शब्दशक्तिमूलो ध्वनिः ।[1]

## (आ) अभिनवगुप्तपादाचार्यमतम्

आनन्दवर्धनाचार्यव्यवस्थापितं शब्दशक्तिमूलध्वनावलङ्काराणां व्यङ्ग्यत्वं न कस्यापि विमतिपदपतितम् । परं वस्त्वात्मनोऽर्थस्यापि व्यङ्ग्यत्वमिति दिगभिनवगुप्तपादाचार्येणैवादावुत्सूत्रिता । तथाहि—

**अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासः महाकालः ।[2]**

इत्यत्रानेकत्र गृहीतशक्तिकेभ्यो महाकालादिपदेभ्यो ग्रीष्मर्तुभीषणदेवतारूपिणोर्द्वयोरर्थयोः प्रतीतिः । ग्रीष्मर्तुवर्णनप्रसङ्गे महाकालपदस्य ग्रीष्मर्तुरूप्यर्थः प्राकरणिकः । भीषणदेवतारूपश्चार्थोऽप्राकरणिकः । अत्रानन्दवर्धनाचार्याः भीषणदेवतारूपोऽप्राकरणिकोऽर्थोऽसम्बद्धो न स्यादिति कृत्वा प्राकरणिकाप्राकरणिकयोरर्थयोरुपमानोपमेयभावं परिकल्प्य रूपकादीनामलङ्काराणां व्यङ्ग्यत्वं सिद्धान्तयन्ति ।

परमभिनवगुप्तपादाचार्याणां मते अप्राकरणिकोऽर्थो भीषणदेवतारूपोऽपि व्यङ्ग्य एव । तथाहि—महाकालादीनां पदानां शक्तिर्ग्रीष्मर्तुरूपिण्यर्थे नियन्त्रिता । ग्रीष्मर्तुवर्णनप्रसङ्गे प्रयुक्तानि महाकालादीनि नानार्थकानि पदानि प्रकरणमहिम्नैकस्मिन्नर्थे नियन्त्रितशक्तीनि । अतस्तानि प्राकरणिकार्थेतरमर्थमभिधातुं

---

१. यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते, स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम् । वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः ।

—शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन—ध्वन्यालोकः, पृ० २३५

२. तत्रैव, पृ० २४१

नैव पारयन्ति । एतादृशेषु स्थलेषु अप्राकरणिकस्य भीषणदेवतारूपिणोऽर्थस्य प्रतीतिर्नाभिधया, तस्याः प्राकरणिकेऽर्थे नियन्त्रणात् । अतोऽप्राकरणिकोऽर्थो व्यञ्जनया द्योत्यः सन् व्यङ्ग्य एव स्वीकरणीयः ।[1]

अनेनेदमुन्नीयते यद् वस्त्वात्मनोऽर्थस्यापि व्यङ्ग्यत्वमुपपन्नमभिनवगुप्तमते । तेन शाब्द्या अभिधामूलाया व्यञ्जनाया द्वौ भेदौ ।

वस्तुतस्तु नानार्थशब्दस्थलेऽप्राकरणिकोऽर्थोऽभिधेयो व्यङ्ग्यो वेति विवादास्पदम् । अभिनवगुप्तपादाचार्येण विषयममुं सूक्ष्मेक्षिकया पर्यालोचयता चत्वारि मतानि समुपस्थापितानि स्वकीये ध्वन्यालोकलोचने । तेनेदमुन्नीयते यदानन्दवर्धनाचार्यादारभ्याभिनवगुप्तपादाचार्यपर्यन्तं ध्वनिवादिनां गोष्ठीषु अभिधामूलायां व्यञ्जनायां शब्दस्य व्यञ्जकतामुद्दिश्य गहनातिगहनो विचारः प्रावर्तत । तेषामेवाचार्याणां मतसरणिरभिनवगुप्तपादाचार्येण चत्वारि मतान्युपस्थापयता प्रदर्शिता ।

### वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्र अभिनवगुप्तप्रोक्तं प्रथमं मतम्

**"अत्र केचन मन्यन्ते । यत एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टम्, ततस्तथाविधे अर्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यत्वं चेत्यविरुद्धम्" ।[2]**

अयमाशयः । नानार्थवतश्शब्दस्य येषु येष्वर्थेषु सङ्केतो नियतो भवति, ते ते अर्था अवगतसङ्केतेन प्रतिपत्त्रा ज्ञायन्ते । तद्यथा—हरिरिति शब्दो वानरसूर्याद्यर्थेषु नियतः । अतस्तत्तच्छब्दस्य तेषु तेषु सर्वेष्वर्थेषु येन केनचित् पूर्वं यथासमयो ज्ञातः, तस्य तादृश्येव प्रतिपत्तिर्भवति । परं येनैतेषां शब्दानां पूर्वं सर्वेषु विविधेषु अर्थेषु समयो न ज्ञातः, तस्य नानार्थज्ञानं तस्य

१. अत्र ऋतुवर्णनप्रस्तावनियन्त्रिताभिधाशक्तयः, अतएव 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एतमेवार्थमभिधाय कृतकृत्या एव। तदनन्तरमर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् ।
शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोकलोचनटीका, पृ० २४१

२. तत्रैव

तस्य शब्दस्य न भवति । यथाहि—हरिरिति शब्दस्य येन केनचित् वानर-रूपेऽर्थे एव सङ्केतः पूर्वं गृहीतः, तस्यैकार्थविषयिण्येव प्रतिपत्तिः । परं येन हरिरिति शब्दस्यापरेष्वर्थेष्वपि सङ्केतो गृहीतः, तस्य तच्छब्दस्यापरार्थविषयिण्यपि प्रतिपत्तिः । अतो नानार्थकस्य हरिरित्यादिकस्य पदस्य सर्वेऽर्थास्तेषामेव बोधविषया भवन्ति, यैस्तस्य तस्य शब्दस्य समयः पूर्वं तेषु तेष्वर्थेषु गृहीतः । परं यदाऽनेकार्थकस्य पदस्य नानार्थप्रतिपत्तिर्नियामकेन संयोगादिना शृङ्खलीक्रियते तदाप्रस्तुतस्यापरार्थस्य बोधो ध्वननव्यापारात् । नहि नियामकेन संयोगादिना निगडीकृताऽभिधा अप्रस्तुतार्थबोधने प्रभवति । भवति चार्थप्रतीतिरतःकेनापि व्यापारेण तत्र भाव्यम् । स च व्यापारो व्यञ्जना । अतः प्रकरणादिकेन प्रतिबन्धकेन प्रस्तुतेऽर्थेऽभिधायां नियन्त्रितायां सत्याम्, अप्रस्तुतस्यार्थस्य या प्रतीतिः सा व्यञ्जनयैवेति प्रथममतावलम्बिनामाशयः । एतदेवोपजीव्य मम्मटभट्टस्य अभिधामूलाया शाब्द्या व्यञ्जनाया लक्षणं प्रवर्तते ।[1] तदनुकृत्यैव साहित्यदर्पणकारेण विश्वनाथेनापि प्रोक्तम्—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥[2]**

**वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्र अभिनवगुप्तप्रोक्तं द्वितीयं मतम् ।**

**"अन्ये तु साभिधैव द्वितीया अर्थसामर्थ्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते, ततो ध्वननव्यापाररूपोच्यते ।"[3]**

अयमाशयः । यथाभिधया प्राकरणिकोऽर्थोऽभिधीयते, तथैवाप्राकरणिकोऽपि । परमियान् खलु विशेषः । प्राकरणिकमर्थं बोधयन्ती शक्तिरभिधैव । अप्राकरणिकमर्थमपि प्रत्याययन्ती शक्तिः सैव । परं प्रथमाऽभिधा प्राकरणिकमर्थं बोधयन्ती सङ्केतग्रहणमात्रमेव सहकारित्वेनापेक्षते, अतस्तस्या अभिधात्वं निर्बाधम् । परमप्रस्तुतार्थबोधिका द्वितीयाभिधा सङ्केतग्रहणमात्रातिरिक्तमर्थसामर्थ्यादिकमप्यधिकं किञ्चित् सहकारितया अपेक्षते, अतो द्वितीयाभिधा सहकारिसामग्रीवशात्

---

१. अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥
मम्मटः, काव्यप्रकाशः २,१९

२. विश्वनाथः, साहित्यदर्पणः २,१४

३. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोकलोचनटीका, पृ० २४२

प्रथमातः अभिधातो भिद्यते। द्वितीयाभिधा प्रथमातोऽभिधातो भिन्नं सहकारिकारणमपेक्षते, अतो द्वितीयाभिधैवोपचारतो व्यञ्जनोच्यते। तद्यथा—

**अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासः महाकालः।**[1]

इत्यत्र महाकालादयश्शब्दा **रूढिर्योगाद्बलीयसीति** न्यायमपाकुर्वन्तः शक्त्या ग्रीष्मर्तुरूपिणमर्थमभिदधति। ततश्च भीषणदेवतादिकस्यातिरिक्तस्यार्थस्यापि प्रतीतिरेभिरेव शब्दैर्भवति। परं भीषणदेवतादिकमर्थमभिदधती द्वितीयाभिधा महाकालग्रीष्मर्तुरूपिणमुपमानोपमेयभावं सहकारित्वेनापेक्ष्य प्रवर्तते, अतस्तस्या उपचारेण नामान्तरम्। भीषणदेवरूपार्थबलेन सादृश्यमत्र ध्वन्यते। द्वितीयाभिधा सहकारिणार्थान्तरेणोपोद्वलिता उपमादीनामलङ्काराणां व्यङ्ग्यत्वे निबन्धनत्वमुपयाति। अत एवान्यधर्मस्य सङ्क्रमणात् भक्त्या द्वितीयाया अभिधाया ध्वनिरिति नामकरणमुपपन्नम्। अतिरिक्तनिमित्तमपेक्षमाणा द्वितीयेयमभिधा न शब्दस्य स्वाभाविकी वृत्तिः प्रथमाभिधावत्, अपित्वौपचारिकी वृत्तिर्व्यञ्जनावत्। तथा सति द्वितीयाभिधैव व्यञ्जनेत्यभिधीयते उपाधिवशात्।

परं नैषः पक्षो युक्तियुक्तः। योपमा अप्राकरणिकार्थप्रतीत्यनन्तरं स्वात्मलाभं लभते, सैव कथमप्राकरणिकार्थप्रतीतौ सहकारित्वमुपयातुं प्रभवति। यद्युपमानोपमेयभावप्रतीतिः प्रथमं भवेत्तदा द्वितीयामभिधां प्रत्यसौ निमित्ततामुपेयात्। यतो निमित्ततैव न सम्भाव्यते, अतो द्वितीयाभिधाप्रसरणं सर्वथाऽसम्भवम्। एवमन्योऽन्याश्रयदोषदुष्टमिदं मतं सर्वथाऽग्राह्यम्।

## वस्तुरूप्यर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्राभिनवगुप्तप्रोक्तं तृतीयं मतम्

**एके तु शब्दश्लेषे तावद्भेदे सति शब्दस्य, अर्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते। स च कदाचिदभिधाव्यापारात् यथोभयोरुत्तरदानाय श्वेतो धावतीति प्रश्नोत्तरादौ वा तत्र वाच्यालङ्कारता। यत्र तु ध्वननव्यापारादेव शब्द आनीतः, तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमेव युक्तम्।**[2]

अयमाशयः। यत्र श्लेषादौ द्व्यर्थकात् पदादर्थद्वयप्रतिपत्तिः प्राकरणिकी तत्राभिधैव व्यापार उभयार्थविषये। यथाहि—**को धावति, किंरूपश्चेति**

१. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोकलोचनटीका, पृ० २४१

२. तत्रैव।

प्रश्नद्वयोत्तरे केनचिदुच्यते **श्वेतो धावतीति**। अत्र 'श्वेतः' इति पदं भङ्क्त्वा श्वा इतो धावतीति को धावतीत्यस्य प्रथमप्रश्नस्योत्तरम्। किंरूपश्चेति द्वितीयप्रश्नस्य श्वेतो धावतीत्युत्तरम्। अत्रोभयोः प्राकरणिकयोरर्थयोरभिधयैव प्रतीतिः श्लिष्टपदमर्यादया, पूर्वत्र पदं त्रोटयित्वा, अपरत्र च यथाश्रुतग्रहणेन। परमुभयोरर्थयोः प्रतीतिः प्राकरणिकत्वादभिधयैव। यतः सभङ्गश्लेषे शब्दस्य भञ्जनेनासमानशब्दाभ्यामर्थद्वयावगतिरभिधया। यथा **सर्वदो माधवः** इत्यत्र सर्वं ददातीति सर्वदो माधवः श्रीकृष्ण इत्यर्थबोधकौ शब्दौ विद्येते। अतः पदभञ्जनं विनैव तत्तच्छब्दाभ्यां तत्तदर्थप्रतीतिरभिधया। '**सर्वदो माधवः**' इत्याभ्यां पदाभ्यामेव **सर्वदा सर्वकालमुमायाः पार्वत्या धवो वल्लभो महादेवः** इत्यस्यार्थस्यापि प्रतीतिः। अयमर्थः '**सर्वदा-उमाधवः**' इत्येवं पदत्रोटनेनायाति। परं शिवरूपार्थबोधकः **उमाधवः** इति शब्दः श्रीकृष्णरूपार्थबोधकात् माधवशब्दाद्भिन्नः एव। सभङ्गश्लेषे उभयार्थप्रतीतिर्नैकस्माच्छब्दात्, परं भिन्नाभ्याम्। तथा सत्यभिधैवार्थद्वयप्रत्यायने समर्थेति स्पष्टम्। यत्र चार्थश्लेषस्तत्राप्यपरार्थप्रतीत्यर्थं द्वितीयः शब्द आनीयते, तत्राप्यपरार्थप्रतीतिः परिकल्पिताच्छब्दादभिधयैव। तद्यथा—**पयोधरः** इत्यत्र स्तनमेघरूपिणोरर्थयोः प्रतीतिः शब्दमभङ्क्त्वैव भवति। यदि स्तनरूपोऽर्थः प्रथममपयोधरशब्देनाभिधीयते, तर्हि मेघरूपापरार्थबोधार्थम् अपरः पयोधरशब्दस्तत्र परिकल्प्यते। तेन स्तनरूपार्थप्रतीतिः प्रथमात् पयोधरशब्दात्, मेघरूपार्थप्रतीतिश्च द्वितीयात् परिकल्पितात् पयोधरशब्दात्। एवमर्थश्लेषेऽपि अपरशब्दपरिकल्पनया शक्त्यैवापरार्थप्रतीतिः। इत्थं शब्दश्लेषो भवेदर्थश्लेषो वा उभयत्र शब्दद्वयसद्भावे योभयार्थप्रतीतिरसावभिधयैव। तत्र चोभयार्थयोः प्राकरणिकत्वे श्लेषादिवाच्यालङ्कारता अशक्यशङ्का। परं यत्र द्व्यर्थकात् पदात् ज्ञायमानोऽपरोऽर्थोऽप्राकरणिकः, तत्र परिकल्प्यमानोऽप्यपरश्शब्दो नाभिधया अप्राकरणिकमर्थमभिदधाति, परन्तु व्यञ्जनयापरार्थं ध्वनयति। अयमपरोऽर्थः अप्राकरणिकः सन् प्रतीयमानः। अतोऽनभिधेयत्वात्तस्यार्थस्य ध्वननमेव युक्तियुक्तम्। एवं परिकल्पितादपि शब्दादवसीयमानोऽप्राकरणिकोऽर्थः शब्दश्लेषार्थश्लेषवद्वा नाभिधया बोध्यः। परमप्राकरणिकत्वात् प्रतीयमानः सन् स्वात्मलाभार्थं शक्तिभिन्नं व्यञ्जनमेव व्यापारान्तरं नितान्तमपेक्षते। यद्ययमर्थोऽप्राकरणिकः प्रतीयमानः तर्हि तत्प्रत्ययानपरस्य शब्दस्यापि व्यञ्जनाव्यापारमुखप्रेक्षित्वं दैवसिद्धम्।

इदमपि मतं नोपपत्तिपूर्वकमुपन्यस्तं दृश्यते। यद्यप्राकरणिकोऽर्थः प्रतीयमानः स्यात्तदैव तद्द्योतनार्थं प्रवृत्तो व्यापारोऽभिधाभिन्नो भवेत्। परमप्राकरणिकोऽप्यर्थः शब्दानां तत्र सङ्केतादभिधेय एव पर्यवस्यति। यदि संयो-

गादिना प्रतिबन्धकेन अभिधानियन्त्रणादप्राकरणिकार्थस्यानभिधेयत्वं प्रोच्यते तेन च तस्यार्थस्य प्रतीयमानतायां ध्वननमङ्गीक्रियते, तर्हि तार्तीयीकस्यास्य मतस्य प्रथममतान्न कश्चिद्भेदः। केवलं भङ्ग्यन्तरेणास्योत्थापनं क्रियते। अतोऽस्मिन् मते न कश्चिद्विशेषः।

**वस्तुरूपयर्थोऽभिधेयो व्यङ्ग्यो वेत्यत्राभिनवगुप्तप्रोक्तं चतुर्थं मतम्**

**इतरे तु द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते ततश्च द्वितीयोऽर्थोऽभिधीयते एव न ध्वन्यते, तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद्भात्येव, न चान्यतः शब्दादिति सा ध्वननव्यापारात्। तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात्[1]।**

अत्र चतुर्थपक्षावलम्बिनः पूर्वपक्षं व्यपाकृत्य स्वमतमेवं सिद्धान्तयन्ति। प्राकरणिकाप्राकरणिकयोरर्थयोः शक्तिवेद्यता अनपलपनीया, तत्तच्छब्दानां तत्तदर्थेषु पूर्वं सङ्केतात्। अतो येषु अर्थेषु शब्दस्य सङ्केतः पूर्वं नियतस्तांस्तानर्थानसौ शक्त्या बोधयत्येव। परमेवंविधेषु स्थलेषु शक्तिबोध्यानां प्राकरणिकाप्राकरणिकार्थानां परस्परं यदि न कोऽपि सम्बन्धस्तदाऽसम्बद्धार्थदोषकथनप्रसङ्गस्तत्र समापतेत्। अतः प्राकरणिकाप्राकरणिकयोरर्थयोः सम्बन्धः कश्चिदवश्यं कल्प्यते। असौ सम्बन्धो न कदाचिदभिधया बोध्यस्तत्र शब्दानां सङ्केताकरणात्। तद्यथा—

**अत्रान्तरे कुसुमसमययुगमित्यादौ** पूर्वोक्ते गद्यभागे यद्यपि महाकालशब्दस्य ग्रीष्मर्तुभीषणदेवतारूपिणावर्थौ अभिधाबोध्यौ स्तस्तथापि तयोः परस्परमुपमानोपमेयभावेनावस्थानरूपो यः सम्बन्धस्तत्र महाकालादीनां पदानां न शक्तिः। असौ सम्बन्धः रूपणात्मकः प्रतीयमानत्वाद् व्यञ्जनाद्योत्य एव। नहि प्राकरणिकाप्राकरणिकयोः ग्रीष्मर्तुमहाकालरूपिणोरर्थयोः प्रत्यायने प्रभवन्ती शक्तिरभिधा शब्देन स्पष्टमनावेदितं गूढमुपमानोपमेयभावात्मकम् उपमोत्प्रेक्षाद्यलङ्काराणां जनकमर्थं द्योतयितुं स्वप्नेऽपि प्रभवति। अतः **आश्रान् पृष्टः कोविदारानाचष्ट** इत्याभाणकवचनवत् प्राकरणिकाप्राकरणिकयोरुभयोरभिधाभिहितयोरर्थयोरसम्बद्धार्थता मा प्रसज्येतेति कृत्वा सर्वदाऽनभिधेया रूपणा व्यञ्जनासमुपस्थाप्यैव। रूपणा चासावलङ्काराणां प्रसवित्री केवलं परिवृत्तिमसहमानाच्छब्दादेव सम्भाव्यते, नान्येन प्रकारेणेति नानार्थकप्रतीतिस्थले

---

१. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोकलोचनटीका, पृ० २४२

शब्दशक्तिमूलध्वन्यभ्युपगमः सर्वथाऽऽवश्यकः । इदमेव मतमानन्दवर्धनाचार्यसम्मतम्, पश्चाच्चाप्पयदीक्षितेन वृत्तिवार्त्तिके समुपोद्बलितम् ।

## (इ) तत्र महिमभट्टाचार्यमतम्

महिमभट्टाचार्येण शब्दशक्तिमूलो ध्वनिः सर्वथा निराक्रियते । तन्मते शब्दस्याभिधातिरिक्तव्यापाराभावात् ।[1] **अत्रान्तरे कुसुमसमययुगमुपसंहरन्नित्यादौ** आनन्दवर्धनाचार्येण यः शब्दशक्तिमूलोऽलङ्कारध्वनिः प्रोक्तः, असौ महिमभट्टमते साध्यसाधनभावमूलानुमितिपर्यवसायी । तद्यथा—पूर्वोक्ते स्थले अप्राकरणिको भीषणदेवतारूपोऽर्थोऽत्र साध्यः, तत्प्रतीतिश्चाट्टहासयुगसंहाररूपाभ्यां साधनाभ्याम् । यथा साधनेन धूमेन साध्यो वह्निरनुमीयते, तथैवाट्टहासयुगसंहाररूपाभ्यां हेतुभ्यां तत्सम्बद्धो भीषणदेवताविशेषरूपोऽर्थोऽनुमितो भवति । अट्टहासयुगसंहारयोर्महाकालेन सह सम्बन्ध आगमप्रमाणसिद्धः । एवं नियताद्धेतोर्नियतस्य सम्बन्धिनोऽन्यादेः प्रतीतिर्यथानुमानम्, तथैवाट्टहासादीनां महाकालाख्यदेवेन सहागमप्रमाणसिद्धसाहचर्येणावस्थानाल्लिङ्गलिङ्गिभावमूलानुमितिर्न खलु ध्वनिः ।[2]

यत्र च साध्यसाधनभावो नोह्यस्तत्राप्राकरणिकस्यार्थस्य प्रतीतिरेव निराक्रियते महिमभट्टेन । तद्यथा—

> **दत्तानन्दाः प्रजानां समुचितसमयक्लिष्टसृष्टैः पयोभिः**
> **पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।**
> **दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः**
> **गावो वः पावनानां परममपरिमितां प्रीतिमुत्पादयन्तु ॥**[3]

इत्यत्राप्राकरणिकस्य सुरभिरूपिणोऽर्थान्तरस्योत्पत्तौ कार्यकारणभावस्य

---

१. यः शब्दशक्तिमूलोऽन्यः प्रभेदो वर्णितो ध्वनेः ।
सोऽयुक्तोऽन्यत एवासौ तत्रेष्टार्थान्तरे गतिः ।
शब्दे शक्त्यन्तराभावस्यासकृत् प्रतिपादनात् ॥
महिमभट्टः, व्यक्तिविवेकः, १,१०४-१०५

२. इत्यत्राप्राकरणिकमहाकालाख्यदेवताविशेषविषया प्रतीतिस्साध्या तस्याश्चाट्टहाससम्बन्धो युगसंहारव्यापारश्चेत्युभयं साधनं तस्य तत्कार्यत्वात् कार्यकारणभावश्चानयोरागमप्रमाणमूलः इति
—शास्त्री, मधुसूदनः, महिमभट्ट-व्यक्तिविवेकः, पृ० ४१७

३. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० २४४

निबन्धनस्य अदर्शनादप्राकरणिकार्थप्रतीतिर्न समुदेति महिमभट्टमते ।[1]

महिमभट्टमते सामग्रीवशादेव शब्दो नानार्थबोधको भवति, न तु तन्निरपेक्षः । अतो यत्राप्राकरणिकार्थबोधिकायाः सामग्र्या अवस्थानं तत्राश्लिष्टेभ्योऽपि पदेभ्यो नानार्थावगतिः । यत्र तु तथाविधसामग्र्यभावस्तत्र तु नानार्थकेभ्योऽपि पदेभ्यो न विविधार्थप्रत्ययः । यथा समासोक्तौ—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥**[2]

**शशिना** इति पदमश्लिष्टमेव नायकरूपिणमप्रस्तुतमर्थं बोधयति **उपोढरागेणेति** सामग्रीवशात् । **गावो वः पावनानामित्यादौ** नानार्थकान्यपि पदानि सादृश्यसूचकेवादिपदाभावे अप्राकरणिकं सुरभिरूपिणमर्थं नैवावगमयन्ति ।[3] तथा सति **गावो वः पावनानामित्यादौ** विशेषणविशेष्यपदयोरनेकार्थकत्वेऽपि सुरभिरूपार्थप्रत्यायकमिवादिपदं किमपि निबन्धनं वक्तव्यमेव । तद्विना नापरार्थप्रतीतिः ।

एवं पूर्वोक्ते उदाहरणे आनन्दवर्धनाचार्येण यत् सूर्यकिरणसुरभिरूपिणोरर्थयोरुपमानोपमेयभावेनावस्थानात् रूपकालङ्कारस्य प्रतीयमानतायामलङ्कारध्वनिः समाख्यायि, तत् महिमभट्टेनोपमानानां सुरभ्यादीनामुपमेयेन सूर्यकिरणरूपेणार्थेन सह सम्बन्धाभिधायिनो वाचकस्येवादिपदस्यानुपादानादवश्यंवाच्यावचनाद्दोषायैवेति वदता दूरमपास्तम् ।[4]

---

१. एवञ्चास्य वाच्यव्यतिरेकिणोऽर्थान्तरस्य प्रतीतिरेव न समस्तीति, यत्राप्रस्तुताभिधानप्रसङ्गभयात्तयोरुपमानोपमेयभावपरिकल्पनं तदपि निर्मूलमेवेत्यवगन्तव्यम् ।

२. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १०९

३. किञ्च न स्वभावत एव शब्दानामर्थप्रतीतिक्रम इति नियमसम्भवः, किन्तर्हि सामग्रीवशात् । सा हि यदर्थानुगुणोपलभ्यते, तमेव तस्यार्थं कल्पयतीति सर्वः शब्दः सर्वार्थविषयः सर्वश्चार्थः सर्वशब्द विषयो भवितुमर्हति । ततश्च अतदर्थोऽप्यन्यः शब्दः सामग्रीवशात् समासोक्तिन्यायेन तमवगमयितुं क्षम एव, न पुनस्तदर्थोऽपि सामग्रीविकलो गवादिशब्दः ।
शास्त्री, मधुसूदनः, महिमभट्ट-व्यक्तिविवेकः, पृ० ४१९

४. अत्र हि गाव इत्येतस्य विशेष्यवाचि तु उपमानाभिमतार्थान्तरवृत्तित्वेऽपि विशेषणानां चोभयार्थानुगुण्येऽप्युपमानस्य तत्सम्बन्धाभिधायिनश्चावश्यवाच्यावचनं यत् स दोष इत्येतद्धितनिष्यते ।
तत्रैव पृ० ३६६

मम धिया नतन्मतं युक्तियुक्तम् । शाब्द्यामभिधामूलायां व्यञ्जनायां सहृदयहृदयसमास्वाद्यौ वस्त्वलङ्काररूपावर्थौ वाच्याया इवादिसामग्र्या अभावे नैवानुभूयेते इति यन्महिम्ना रसिकजनानुभवमपलपमानेन प्रोद्घुष्यते, तत्तस्य आहोपुरुषिकामेवोद्घाटयति, अर्थप्रतीतिर्न भवतीत्यत्र विनिगमनाभावात् । **दत्तानन्दाः प्रजानामित्यादाविवादिसामग्र्युपादानेऽर्थस्य** व्यङ्ग्यत्वमेव त्रुटचेत्, तस्यार्थस्येवादिपदोपादानेन वाच्यत्वात् । अत इवादिसामग्र्यनुपादाने सुरभिरूपिणोऽर्थस्य गूढत्वाद्गुणोऽधिको न खलु दोषः । व्यङ्ग्यत्वेनैवार्थश्चारुत्वमातनोति न तु वाच्यत्वेनेति सहृदयानुभवप्रामाण्यात् ।

## (ई) मम्मटाचार्यमतम्

मम्मटभट्टोऽभिनवगुप्तपदाङ्कानुगः । स शाब्द्या अभिधामूलाया व्यञ्जनाया लक्षणमित्थमुपनिबध्नाति स्वकीये काव्यप्रकाशे—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ।।**[1]

एतेन संयोगादिभिः प्रतिबन्धकैर्नानार्थकस्य शब्दस्याभिधायामेकस्मिन्नर्थे नियन्त्रितायां सत्याम्, तस्मादेव परिवृत्त्यसहाच्छब्दात् यार्थान्तरप्रतीतिरसौ व्यञ्जनयैवेत्यर्थेन अप्राकरणिकस्यार्थस्य व्यङ्ग्यत्वं सिद्धं मम्मटभट्टमतेन । इत्थमसावपि वस्तुरूपिणोऽप्राकरणिकार्थस्य ध्वननं स्वीकुर्वन् शाब्द्या व्यञ्जनाया वस्त्वलङ्काराभ्यां द्वौ भेदौ व्यवस्थापयति ।[2]

## (उ) हेमचन्द्राचार्यमतम्

**नानार्थकस्य मुख्यस्य शब्दस्य संयोगादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः**[3] इत्येवं हेमचन्द्राचार्येण काव्यानुशासने शाब्दी व्यञ्जना लक्षिता । अस्मिंल्लक्षणेऽपि शाब्द्या अभिधामूलाया व्यञ्जनाया हेमचन्द्रेण तदेव स्वरूपं निर्दिष्टं यन्मम्मटभट्टादिभिः पूर्वं प्रोक्तम् । केवलं पदवाक्यगतत्वेनाभिधामूलाया व्यञ्जनाया हेमचन्द्राचार्येण पुनर्विभागः कृतः । तन्मते वस्त्वलङ्कारव्यङ्ग्याभ्यां

---

१. मम्मटः, काव्यप्रकाशः, २,१९

२. अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन स ज्ञेयश्शब्दशक्त्युद्भवो द्विधा ।।
मम्मटः, काव्यप्रकाशः,४,३८

३. पण्डितशिवदत्तः, हेमचन्द्रः—काव्यानुशासनम्, पृ० ३७

द्विधा विभक्ता शाब्द्यभिधामूला व्यञ्जना वस्त्वलङ्काररूपिणो व्यङ्ग्यार्थस्य पदवाक्यवशत्वात् पुनर्भिद्यते ।

## (ऊ) विश्वनाथाचार्यमतम्

साहित्यदर्पणे विश्वनाथाचार्यस्य शाब्द्या अभिधामूलाया व्यञ्जनाया निरूपणं मम्मटभट्टमतानुरोधि। न तत्र किञ्चिन्नवीनं तत्त्वं समुपलभ्यते। केवलं मम्मटेन शाब्द्यभिधामूला व्यञ्जनेति नाम्ना स्पष्टं तल्लक्षणं न प्रतिपादितम्, संयोगाद्यैरवाच्यर्थधीकृद्व्यापृतिरञ्जनमित्येवमेव लक्षणं कृतम्। परं विश्वनाथाचार्येण निर्मलं स्पष्टञ्च लक्षणं दत्तम्। तद्यथा—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ॥**[1]

एवं विश्वनाथाचार्यमतेऽप्यप्राकरणिकार्थप्रतीतिर्व्यञ्जनयैव भवति, अभिधाया प्राकरणिकेऽर्थे निरोधात्। अनन्तरं विश्वनाथेनापि शाब्द्या अभिधामूलाया व्यञ्जनाया वस्त्वलङ्कारयोर्व्यङ्ग्यत्वे सति द्वैविध्यं प्रतिपादितम्।[2]

## (ए) अप्पयदीक्षिताचार्यमतम्

अप्पयदीक्षिताचार्यो नानार्थशब्दस्थले अप्राकरणिकार्थस्याभिधेयत्वं प्रतिपादयंस्तस्य व्यङ्ग्यत्वं विरुणद्धि। तन्मते नानार्थकस्य शब्दस्य प्राकरणिकाप्राकरणिकोभयविधार्थयोः शक्तेरप्रस्तुतोऽप्यर्थः शब्दस्य वाच्य एव। नहि संयोगादयो नियामका अनेकत्र गृहीतशक्तीनां पदानां शक्तिं नानार्थेषु प्रसरणान्निवारयन्ति। यत्र शब्दस्य संकेतो गृहीतस्तत्र शब्दस्य शक्तेरभिधेयत्वमेव तत्तदर्थस्य। नह्येतद् वक्तुं युक्तं यत्प्राकरणिकोऽर्थोऽप्राकरणिकार्थप्रतीतिं निरुणद्धि, अप्राकरणिकार्थेनापि प्राकरणिकार्थनिरोधसम्भवात्। प्राकरणिकोऽर्थ एव प्रथमं स्फुरेन्नाप्राकरणिकोऽर्थ इति विनिगमनाभावात्। तद्यथा—

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥**[3]

अत्र चन्द्रोदयवर्णनप्रसङ्गे योऽप्राकरणिको भूपत्यभ्युदयविशिष्टोऽर्थः प्रतीयते असावभिधेय एव नानार्थकानां करादिपदानां शक्तेरुभयत्र प्रसरणात्।

---

१. विश्वनाथः, साहित्यदर्पणः, २,१४

२. वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ॥
—विश्वनाथः, साहित्यदर्पणः, ४,७

३. शर्मा, पण्डितशिवदत्तः, अप्पयदीक्षित-वृत्तिवार्त्तिकम्, पृ० ९

प्राकरणिकाप्राकरणिकयोरर्थयोः करादिपदैरनिरुद्धप्रतीतेश्च ।[1]

किञ्च जलार्थिभिर्जलाशयाज्जलं क्षेत्रेष्वानेतुं कुल्या विरच्यन्ते । जलाशयान्निर्गच्छज्जलं सर्वासु कुल्यासु समानभावेन प्रवहति । कुल्यासु कृतासु जलाशयात् प्रवहतो जलस्याभिमतकुल्यायामेव प्रसरणमनभिमतकुल्यायाञ्चासञ्चरणमिति न नियमेन वक्तुं शक्यम् । यथा प्रवहतो जलस्य सर्वास्वभिमतानभिमतकुल्यासु समानभावेन प्रसरणमुपपन्नम्, तथैव नानार्थकस्यापि पदस्यानेकत्र शक्तिग्रहे सति प्रकृताप्रकृतार्थेषु समान एव सङ्केतः । एवमनेकेष्वर्थेषु शब्दस्य शक्तेः कुल्याजलवत् प्रसरणात् प्राकरणिकवदप्राकरणिकोऽप्यर्थोऽभिधाबोध्योऽवगन्तव्यः तत्कृते व्यञ्जनाश्रयणं निर्निबन्धनम् ।[2]

एवं यद्यप्यप्राकरणिकस्यार्थस्य नानार्थकशब्दस्थले व्यञ्जनागम्यत्वं विप्रतिपद्यतेऽप्पयदीक्षिताचार्येण, परं तथापि नानार्थकशब्दस्थलेऽलङ्काराणां व्यङ्ग्यत्वं नापह्नोतुं शक्यम् । अलङ्काररूपोऽर्थस्तु न शब्दस्य सङ्केतितोऽर्थो येनाभिधा तत्र सञ्चरेत्, असावर्थस्तु स्वशब्देनानुक्तो व्यङ्ग्य एवेति पुरा प्रोक्तमेव । अत एवालङ्काराणां ध्वननमङ्गीकुर्वता अप्पयदीक्षितेन आनन्दवर्धनाचार्यमतं समुपोद्वलितम् ।[3]

## (ऐ) पण्डितराजजगन्नाथमतम्

पण्डितराजजगन्नाथेनापि विवादग्रस्तोऽयं विषयो भृशं विचारितो रसगङ्गाधरे । तेन सूक्ष्मेक्षिकया अभिधामूला शब्दस्य व्यञ्जकता तर्कनिकषोपले

---

१. वयं तु ब्रूमः 'असावुदयमारूढः' इत्यादौ प्राकरणिकेऽर्थे प्राकरणिकवदप्राकरणिकेऽपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचकानां समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्व इव प्राकरणिकाप्राकरणिकरूपत्वेऽप्युभयत्राभिधैव व्यापारः ।

—शर्मा, पण्डितशिवदत्तः, अप्पयदीक्षित—वृत्तिवार्त्तिकम्, पृ० १०

२. तत्रैव, पृ० ११

३. यत्तु प्राचामप्रस्तुते शक्तिमूलव्यञ्जनवृत्त्यभिधानं तदप्रस्तुतार्थप्रतीतिमूलके यथा 'उदयमारूढः' इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति, एवं तथाभूतश्चन्द्रमा मृदुलैः किरणैः इत्यादिरूपेण प्रतीयमाने उपमाद्यर्थालङ्कारे तदवश्यंभावदृढीकरणाभिप्रायेण ।

तत्रैव, पृ० १५

सुपरीक्षिता। तत्रादौ तेन नानार्थशब्दस्थले व्यञ्जनामङ्गीकुर्वतां ध्वनिकारानुयायिनामाचार्याणां विचारसरणिः प्रथममतद्वितीयमतरूपेण द्विधोपस्थापिता। अनन्तरञ्च मतद्वयमिदं विदूष्य स्वधिया शाब्द्या व्यञ्जनाया यौक्तिकं विवेचनं कृतम्।

**जगन्नाथेन पूर्वपक्षरूपेणोपस्थापितं ध्वनिवादिनां मतम्**

नानार्थकशब्दश्रवणानन्तरं तस्य तस्य शब्दस्य तेषु तेष्वर्थेषु सङ्केतग्रहतुल्यत्वात् सर्वेषां तत्तन्नानार्थवतां शब्दानां सङ्केतिता अर्था बुद्धिसमारूढा भवन्ति। ततो वाक्ये नानार्थवतश्शब्दस्य कतमोऽर्थ उपादेयः, कोऽर्थश्च वक्तुस्तात्पर्यविषयीभूत इति श्रोतुर्मनसि सन्देह उत्पद्यते। प्रकरणादिकं पर्यालोचयञ्छ्रोता नानार्थवतश्शब्दस्य प्रकरणानुकूलमर्थं शक्त्याऽवगच्छति। प्रकरणादिकं नियामकमप्राकरणिकं सर्वमर्थं प्रतिबध्नाति। प्राकरणिकोऽर्थः शक्त्याऽभिधीयते। परमप्राकरणिकोऽर्थः प्रतीतिपथमवतरन् शक्त्या नाभिधीयते। प्राकरणिकमर्थं प्रत्याय्य तस्या उपक्षयात्। अतः अप्राकरणिकार्थप्रत्यायनार्थं शक्तिभिन्नोऽन्यः कश्चिच्छब्दव्यापारोऽवश्यमभ्युपगन्तव्यो भवति। स एव व्यापारोऽप्राकरणिकार्थसमुल्लासको व्यञ्जनपदव्यपदिष्टः। अस्मिन्मते भर्तृहरिकारिकायामुपात्तस्य 'अनवच्छेदे विशेषस्मृतिहेतवः' इत्यस्य ग्रन्थस्य अनवच्छेदे—तात्पर्यसन्देहे सति, विशेषस्मृतिरेकार्थमात्रविषया स्मृतिरित्येवं शय्या योज्या। ननु प्रकरणादिषु प्रतिबन्धकेषु जागरूकेषु सत्सु कथं व्यञ्जनयाऽप्यप्राकरणिकार्थबोधः, अभिधावत्तस्या अपि नियमनादिति चेन्न, तस्या अप्राकरणिकार्थमेव द्योतयितुं समुल्लासात्। प्रकरणादिकैः प्रतिबन्धकैः शक्त्यां नियन्त्रितायां सत्यामप्राकरणिकार्थप्रतीतिर्व्यञ्जनयेति प्रथममतावलम्बिनां मम्मटभट्टादीनामाशयः।[1]

**जगन्नाथेन पूर्वपक्षरूपेणोपस्थापितं प्रथममतखण्डनपुरस्सरं ध्वनिवादिनां द्वितीयं मतम्**

अपरे प्रकारान्तरेण अप्राकरणिकस्यार्थस्य व्यञ्जनावेद्यत्वं सिद्धान्तयन्ति। तथाहि—प्रथममते प्रकरणादिकस्य प्रतिबन्धकत्वेन स्वीकारः तद्वशाच्चाप्राकरणिकार्थप्रतीतिस्थगनमिति वार्ता न हृदयङ्गमा। प्रकरणादिको नियामकोऽप्राकरणिकार्थप्रतिपत्तिं निरोद्धुं न प्रभवति, शब्दस्य तत्तदर्थेषु संकेतकरणात्। अत एव भर्तृहरिकारिकायां स्मृतिपदस्यैकार्थमात्रगोचरत्वमिति व्याख्यानमपि

---

१. म० म० पण्डितदुर्गाप्रसादः, जगन्नाथपण्डितराज—रसगङ्गाधरः, पृ० १३४-३६

न मनोरमम् । अयमाशयोऽत्रानुसन्धेयः । नानार्थकानां पदानां सर्व एव सङ्केतिता अर्थाः समयज्ञानवतः प्रतिपत्तुरनुभवविषयत्वमुपयान्ति । परं प्रकरणादिपर्यालोचनया वक्तुर्यस्मिन्नर्थे तात्पर्यम्, स एवार्थः श्रोत्रा गृह्यते। तेन च योऽर्थो वक्तुस्तात्पर्यभूतस्तस्यैवार्थस्य वाक्येऽन्वयाच्छाब्दबोधः । तथा सत्यप्रस्तुतार्थस्याप्राकरणिकत्वात्तस्मिन् तात्पर्यविषयतामनुपागते न तस्य वाक्येऽन्वयः, एवं शब्दस्य तत्र सङ्केतकरणात् परिस्फुरन्नप्यसावर्थोऽप्राकरणिकोऽतात्पर्यविषयीभूतत्वाद् वाक्येऽन्वयमलभमानः शाब्दबोधविषयतां नोपयाति। प्रतीतिश्चास्यार्थस्य सम्पद्यते। परं नासावभिधासमुपस्थाप्या। अभिधाया विषयस्तु तात्पर्यभूतोऽर्थ एव प्राकरणिकः । अतस्तस्य अतात्पर्यविषयीभूतस्यार्थस्य शब्दाद् भवन्ती प्रतिपत्तिः शक्तिभिन्नेन केनाप्यन्येन व्यापारेणैव सम्पाद्या। असौ व्यापारो ध्वननपदव्यपदिष्टोऽवश्यमभ्युपेयः।[1]

ननु द्वितीयस्मिन्मते **विशेषस्मृतिहेतवः** इत्यादेर्भर्तृहरिग्रन्थस्य **वाचकत्वे नियन्त्रिते** इत्यादेर्मम्मटभट्टोक्तेश्च सङ्गतिस्त्रुटचतीति कृत्वा नाङ्गीकरणीयं द्वितीयं मतमिति चेन्न, प्रकारान्तरेणापि पूर्वोक्तग्रन्थसङ्गतिसम्भवात्। नहि **'विशेषस्मृति'** रित्यस्य पदस्य प्राकरणिकार्थविषयिणी द्वितीया स्मृतिरित्येव व्याख्यानं सम्भवति, नापि मम्मटभट्टस्य **'वाचकत्वे नियन्त्रिते'** इत्यस्य संयोगादयो नियामकाः प्राकरणिकार्थेतरानर्थान् प्रतिबध्नन्तीत्येवमेव व्याख्या समुचिता। प्रत्युत द्वितीयस्मिन्मते स्मृतिपदं निश्चयार्थपरं ग्रहीतव्यम्। अतो विशेषस्मृतिरित्यस्येत्थं व्याख्यानं द्वितीयमतावलम्बिभिः प्रस्तूयते ।

नानार्थकस्य पदस्य सर्वेषु सङ्केतितेष्वर्थेषूपस्थितेषु, वक्तुस्तात्पर्यविषयीभूतस्यैवार्थस्य बोधो भवति । अतो **विशेषस्मृति**रित्यनेन विशिष्टस्य तात्पर्यभूतस्यार्थस्य निर्णय इत्यर्थे गृहीते न काचिदसङ्गतिः । अनेकार्थकस्य पदस्य तात्पर्यविषयीभूतार्थव्यतिरिक्ताः सर्वेऽर्था अवाच्यार्थाः। अतस्तेषां शाब्दबोधविषयतानापत्तिः। संयोगादिभिर्वाचकताया नियन्त्रणं यत् प्रोच्यते तदपि द्वितीयमतेऽविरुद्धम्। यतो वाचकत्वे नियन्त्रिते इत्यस्यैकार्थमात्रप्रत्यायनसहायकत्वमित्यर्थः, तस्यैव तात्पर्यविषयभूतत्वात् । अतो द्वितीयस्मिन्मते संयोगादयोऽप्राकरणिकार्थप्रतीतिनियामका नावगन्तव्याः, अपितु तात्पर्यविषयीभूतविशेषार्थप्रत्यायनसहायकाः। तद्वशाद् यस्मिन्नर्थे तात्पर्यम्, तस्यैव शाब्दबोधो नेतरेषामतात्पर्यविषयीभूतानामर्थानाम् ।[2]

---

१. म० म० पण्डितदुर्गाप्रसादः, जगन्नाथपण्डितराज—रसगङ्गाधरः, पृ० १३६

२. तत्रैव, पृ० १३७

ननु व्यक्तिवादिनापि व्यञ्जकपदविरहे प्रतीयमानार्थप्रतीतिः कथमुपपाद्यते, महाकालेत्यादीनां पदानां प्राकरणिकार्थप्रत्यायनानन्तरं क्षीणशक्तित्वादिति चेन्न, अप्राकरणिकव्यङ्ग्यार्थावगमनात्पूर्वं शक्यार्थप्रतीतिसमये भासमानस्य शब्दस्यानन्तरभाविनो व्यङ्ग्यार्थस्य प्रतीतिसमयेऽपि स्मृतौ भासमानत्वात्। आहोस्विदावृत्त्या महाकालादिपदं तत्रानीयते, तेन च व्यङ्ग्यार्थप्रतीतिः।

अधुना पण्डितराजो जगन्नाथः स्वकीये रसगङ्गाधरे पूर्वोक्तं मतद्वयमधोलिखितप्रकारेण प्रत्यवतिष्ठते। यथाहि—**सुरभिमांसं भवान् भुङ्क्ते** इत्यस्मिन् वाक्ये वक्तरि श्यालके सति नानार्थप्रत्यायकसुरभिशब्दात् गोमांसभक्षणरूपिणोऽप्राकरणिकार्थस्य प्रतिपत्तिर्व्यञ्जनया भवतीति ध्वनिवादिनामाशयः। तत्र प्रकरणादिना नियन्त्रिताऽभिधा प्राकरणिकं सुगन्धिमांसरूपिणमर्थं प्रत्याय्य क्षीणसामर्थ्या सती नापरमप्राकरणिकं गोमांसरूपिणमर्थमवगमयितुं प्रभवतीति कृत्वा व्यक्तिवादिना व्यञ्जनाऽऽश्रीयते। परं नानार्थकस्य सुरभ्यादिपदस्य यदि नानार्थबोधने शक्तिस्तर्हि संयोगादीनां सद्भावेऽपि शब्दस्य तेषु तेष्वर्थेषु सङ्केतात् शक्त्यैव तेषामवगतिः। नहि प्रकरणादयः शब्दस्य सङ्केतितानर्थान्निरोद्धुं प्रभवन्ति। तद्यथा **पयः रमणीयमित्यादौ** द्व्यर्थकस्य पयःशब्दस्य दुग्धजलरूपिणोर्द्वयोरर्थयोः सङ्केतः।

यदि संयोगादीनां नियामकानां निमित्तेन नानार्थकानां पदानां प्राकरणिके एकस्मिन्नेवार्थे सङ्केत अभ्युपेयेत, तेन चापरेषामर्थानामाच्छादनं स्यात्, तर्हि **पय आनय** इत्युक्ते सति पयःशब्दस्योभयार्थज्ञानवन्तः प्रकरणज्ञानशालिनश्च प्रकरणज्ञानानभिज्ञं पुरुषं कथमिदमवबोधयेयुर्यदत्र वक्तुस्तात्पर्यं जलरूपिण्येवार्थे न तु दुग्धरूपेऽर्थे। अतः संयोगादिभिः प्रतिबन्धकैरप्राकरणिकार्थप्रतीतिनियन्त्रणं भवतीति कथनं नोचितम्, शब्दस्य प्राकरणिकाऽप्राकरणिकोभयविधार्थे तुल्यसङ्केतात्। किञ्च यावन्नानार्थधीजनकं पदज्ञानमस्ति, तावत् प्रतिबन्धकेषु सत्स्वपि अर्थोद्बोधकसामग्रीभूतपदज्ञानसद्भावे, सङ्केतितानां सर्वेषां प्राकरणिकाप्राकरणिकानामर्थानां समानैवावगतिः। **'पय आनय'** इत्यादौ सत्यपि प्रकरणे प्रतिबन्धके, प्रकरणज्ञानवतां द्व्यर्थप्रतीतिर्नोपरुद्धा भवति। अतो नानार्थकस्य पदस्य तेषु तेष्वर्थेषु नियतसङ्केतकत्वात् योभयार्थप्रतीतिर्नासौ व्यक्तिसमुपस्थाप्या प्रत्युताभिधाबोध्यैव।[1]

प्रकरणादिज्ञानवशात् प्राकरणिकेऽर्थे तात्पर्यं निश्चीयते, ततश्च तात्पर्यविषयीभूतस्यैवार्थस्य वाक्येऽन्वयो भवति, अन्वितार्थस्यैव शाब्दबोध उपपद्यते। अतः अतात्पर्यविषयीभूतस्यार्थस्य प्रतीतिर्व्यक्त्येति व्यक्तिवादिनां द्वितीयमपि

---

१. तत्रैव पृ० १३८

मतं यौक्तिक्या बुद्ध्या निष्पीड्यमानं नावस्थातुं प्रगल्भते। अत्र पण्डितराज आशङ्कते—किमतात्पर्यविषयीभूतस्य शक्त्याऽनभिहितस्य सर्वस्यार्थस्य प्रतिपत्तिर्व्यञ्जनयेति भवतामाशयः, उत क्वाचित्क एव व्यञ्जनासंचारो न सार्वत्रिक इति श्रीमतां मतम् ? तत्र नाद्यः, प्राकरणिकाप्राकरणिकोभयार्थविषयिण्यां प्रतीत्यां यदि सर्वत्र व्यञ्जनोल्लासः, तर्हि नानार्थप्रतीतिस्थले यस्मिन्नर्थे वक्तुस्तात्पर्यं स एवार्थः शक्तिबोध्य इत्येतस्य नियमस्य निर्निबन्धनत्वात्। तद्यथा—भवतां मते अप्राकरणिकस्य सर्वस्यार्थस्य प्रतीतिर्व्यञ्जनासम्पाद्या। तथात्वे नानार्थकशब्दस्थले प्राकरणिकार्थबोधनियमनमहेतुकमेव। यदि नानार्थस्थले व्यञ्जनोपास्यैव तर्हि प्राकरणिकस्यार्थस्य नियमनं भवेन्न वा भवेत्, अप्राकरणिकार्थप्रतीतिः सर्वदा व्यञ्जनाव्यापारगम्या। तथा सति प्रकरणादिकानां प्रतिबन्धकत्वेन परिकल्पनं सर्वथाऽप्रयोजकमेवेति हृदयम्।

न द्वितीयः। व्यञ्जनायाः क्वाचित्कस्योल्लासस्य प्रमाणासिद्धत्वात्। अत्र व्यञ्जनोल्लासोऽत्र तु नेति वक्तुमशक्यत्वात्। ननु यत्राप्राकरणिकेऽर्थे कवेस्तात्पर्यम्, तस्मिन् तात्पर्यविषयीभूतेऽर्थे क्वाचित्को व्यञ्जनोल्लास इति चेन्न, **रुचिङ्कुरु** इत्यादौ चिङ्कुरिति शब्दस्य काश्मीरीभाषायां स्त्रीयोन्यन्तर्वर्त्यङ्कुरविशेषेत्यसभ्यार्थस्यावगतौ कवेरतात्पर्यत्वात्। ननु यत्राप्राकरणिकार्थग्रहणविशिष्टस्य श्रोतुर्बुद्धिर्नानार्थस्थले व्यञ्जनामुल्लासयितुं समर्थेति यत्र व्यङ्ग्यार्थावगतिः क्वाचित्की न सार्वत्रिकी तत्र श्रोतुः शक्तिविशेष एव तस्याः समुल्लासे हेतुरिति चेन्न, तथात्वे श्रोतुः शक्तेर्नियन्त्रितामभिधामप्युल्लासयितुं समर्थत्वात्। नह्यत्र किमपि निबन्धनं येन श्रोतुः शक्तिविशेषः केवलं व्यञ्जनामेवोत्थापयेन्नाभिधाम्, श्रोतुः शक्तिविशेषस्योभयत्र तटस्थतया सञ्चरणात्। सम्भवत्यपि क्वाचित्के व्यञ्जनोल्लासे, अप्राकरणिकस्यार्थस्य प्रतीतिर्व्यक्तिसमुपस्थाप्या नाभ्युपगन्तव्या। यतः **उल्लास्य कालकरवालमिवाम्बुवाहम्** इत्यादौ नानार्थकशब्दस्थले येन नानार्थवतां शब्दानां नानार्थेषु समयो ज्ञातः, तेनैव प्राकरणिका अप्राकरणिकाश्चार्था ज्ञायन्ते, येन च तत्तत्पदानां ज्ञाता अप्यर्थाः पश्चाद्विस्मृताः तेनाप्राकरणिकस्यार्थस्यावगतिर्न क्रियते। सङ्केतज्ञानञ्चाभिधयेत्यत्र नास्ति संशयः। एवं ज्ञातसङ्केतस्य पश्चाच्च विस्मृतसङ्केतस्य पुरुषस्य बुद्धावप्राकरणिकार्थसमुल्लासो व्यञ्जनयापि न शक्यसम्पादः। अतो व्यर्थो व्यञ्जनां प्रत्याग्रहः।[1]

---

१. इत्थं च नानार्थस्थलेऽपि तात्पर्यधियः कारणतायां शिथिलीभवन्त्याम् अतात्पर्यार्थविषयशाब्दबुद्धिसम्पादनाय व्यक्तिस्वीकारोऽनुचित एव, शक्त्यैव बोधद्वयोपपत्तेः।

पण्डितराजजगन्नाथ—रसगंगाधरः, पृ० १४०

इत्थं पण्डितराजेन नानार्थकशब्दस्थले व्यञ्जनया अप्राकरणिकार्थप्रतीतिरिति प्राचां प्रोद्घोषितः सिद्धान्तः प्रबलयुक्तिप्रमाणेन जर्जरीकृतः पश्चाच्च प्रकारान्तरेण स्वकीयः सिद्धान्त एवं व्यवस्थापितः।

## शाब्द्या व्यञ्जनाया विषये पण्डितराजजगन्नाथस्य स्वीयं मतम्

योगरूढस्थले **रूढिर्योगाद्बलीयसीत्यनेन** न्यायेन रूढ्यर्थस्य प्राथमिक्यवगतिरित्यत्र न कस्यचिद्विप्रतिपत्तिः। **शब्दादेव प्रमितः** (ब्रह्मसूत्रम्, १,३,२४) इति ब्रह्मसूत्रप्रमाणं रूढ्यर्थस्य प्राथमिकीमुपस्थितिं द्रढयति। तथाहि **ईशानो भूतभव्यस्य स एवाद्य स उ श्वः** इत्यत्रेशानशब्दो जीवार्थबोधकः परब्रह्मरूपार्थाभिधायको वेति संशये योगमर्यादया ऐश्वर्यविशिष्टे जीवरूपिण्यर्थ उपस्थिते **शब्दादेव प्रमितः** इति सूत्रबलादीशानशब्दस्य परं ब्रह्मेत्येव रूढ्यर्थो गृह्यते। अयमाशयः। ईशानशब्दः परमात्मन्यर्थे योगरूढः। अतः केवलयोगमर्यादया ऐश्वर्यविशिष्टजीवरूपार्थप्रतीतिर्निरुध्यते, रूढेर्योगापहारित्वात्। ततश्च तादृशार्थलाभ इष्टश्चेत्तदा अभिधाभिन्ना वृत्तिरावश्यकीति उदाहरणस्यास्य पिण्डितार्थः। एवं पङ्कजादिषु योगरूढशब्देष्वपि रूढिमर्यादया कमलरूपिणोऽर्थस्यैव पूर्वमवगतिर्न तु कुमुदकल्हारादीनां योगलभ्यानामर्थानां प्रतीतिः। **पङ्काज्जायते** इति व्युत्पत्त्या पङ्कजपदस्य कुमुदाद्यर्थो यौगिकः। परं रूढिमर्यादया असावर्थो नियन्त्रितो भवति, केवलं कमलरूपिणो रूढ्यर्थस्यैव बोधः। अत एव नैयायिकाः पङ्कजपदात् कुमुदकल्हाररूपिणो योगलभ्यस्यार्थस्य प्रतीतिर्लाक्षणिकीति सम्प्रतिपद्यन्ते। अभिधायाः कमलरूपिणि रूढ्यर्थे नियन्त्रणात्। पङ्कजपदस्य सङ्केतितोऽर्थ आशुबुद्धिसमारूढः कमलरूप एव। पश्चाच्च कुमुदकल्हाररूपिण्यर्थे पङ्कजपदस्य साक्षात् सङ्केताकरणात् योगलभ्यार्थस्य प्रतीतिर्लक्षणयैव सम्पाद्या।

एतदेवोदाहरणेन विशदीक्रियते—

**अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।**
**रमन्ते चपला यत्र स कालः समुपागतः॥**[1]

इत्यत्राबलावारिवाहचपलाः शब्दा योगरूढाः। रूढिमर्यादया एषां शब्दानामभिधया स्त्रीमेघविद्युद्रूपिणोऽर्था अभिधीयन्ते। एषां शब्दानां साक्षात्तेष्वर्थेषु सङ्केतात्। परं पश्चात् गाढतरव्युत्पत्तिमसृणीकृतान्तःकरणानां विदग्धानां

१. म० म० पण्डितदुर्गाप्रसादः, जगन्नाथपण्डितराज-रसगंगाधरः, पृ०१४३

हृदयधाम्नि योगमर्यादया वारिवाहादीनां पदानां निर्बलधीवरादय असङ्केतिता अर्था अपि परिस्फुरन्ति। न च तादृशानां चमत्कारिणामर्थानां समुल्लासोऽभिधया, तस्याः साक्षात् सङ्केतिते मेघादिरूपिणि रूढ्यर्थे परिक्षयात्। अतोऽबलेत्यादीनां शब्दानां यौगिकोऽर्थोऽसङ्केतितः शक्तिभिन्नेन व्यापारेणैव प्रतिपाद्यः। न चात्र लक्षणा, मुख्यार्थबाधादिलक्षणाहेत्वदर्शनात्। अतः पारिशेष्याद् व्यञ्जनयैवासावर्थो द्योत्यः। असावर्थोऽनुभूयते सहृदयैः चमत्कृतिञ्चादधातीति तद्द्योतकः शब्दस्य व्यापारो व्यञ्जनाह्वोऽवश्यमभ्युपेयः।

**चाञ्चल्ययोगिनयनं तव जलजानां श्रियं हरतु।**
**विपिनेऽतिचञ्चलानामपि च मृगाणां कथं हरति॥**[1]

इत्यत्रापि योगरूढपदेभ्यश्चञ्चलं नायिकानेत्रमचञ्चलानां कमलानां श्रियं यद्धरति तदस्मिन्नुपपद्यत एव, परं समधिकचञ्चलानां हरिणानां तिरस्कारस्तेन कथं क्रियते इत्याश्चर्यमिति योऽर्थः प्रतीतिपदवीमधिरोहति, असौ रूढिमर्यादया। परं काव्यानुशीलनपरैः सूक्ष्मज्ञैः सहृदयैरनवधानवतामेव धनापहरणं चौरैः क्रियते, नत्ववधानवतां पुरुषाणामित्यर्थोऽप्यास्वाद्यते। अस्मिन्नपरेऽर्थे जलजादीनां पदानां न साक्षात्सङ्केतः, कमलादौ रूढेऽर्थे एव तेषां शक्तेर्नियन्त्रणात्। जलजादीनां पदानामज्ञाद्यर्थेषु न रूढिः। अतो रूढिमर्यादया न तेषां प्रतीतिः, परं योगशक्त्या एभ्यः पदेभ्यश्चौराद्यर्थो भासते। अतो रूढार्थप्रत्यायनविरतसामर्थ्याया अभिधाया न तत्र प्रसरः। एवंविधे योगरूढस्थले लक्षणयापि न निर्वाहो मुख्यार्थबाधादिहेतुत्रयाभावात्। अतोऽसङ्केतितो योगशक्तिलभ्योऽर्थः केन व्यापारेण समुल्लसेदिति व्यञ्जनावश्यमभ्युपगता भवति।

तथा सति प्राकरणिकाप्राकरणिकार्थविषये उपमाद्यलङ्काराणां स्वशब्देनानभिधानाद् व्यङ्ग्यत्वमेव तेषां नाभिधेयत्वम्। यदि योगशक्तिलभ्यस्यार्थस्योपमानोपमेयभावावलम्बिनोऽलङ्कारस्य च प्रतीतौ व्यञ्जनाऽऽवश्यकी, तर्हि वस्तुरूपिणोऽप्राकरणिकार्थस्य प्रतीतिरपि व्यञ्जनयैव भवतीति स्वीकारे न काचिद्धानिः।[2]

---

१. रसगङ्गाधरः, पृ० १४३

२. एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जकत्वमपि न दुष्यति। रसगङ्गाधरः, पृ० १४३-४४

एवं पण्डितराजेन जगन्नाथेन प्राचां मम्मटादीनां ध्वनिवादिनां मतं प्रबल-युक्तिपुरस्सरं दृढीकृतम्। शाब्द्या व्यञ्जनायाश्चेत्थं लक्षणमुपन्यस्तम्—

**योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।**
**धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥**[1]

पण्डितराजजगन्नाथेनाप्यभिनवगुप्तमम्मटादिदर्शितां दिशमनुसृत्य वस्त्व-लङ्काराभ्यां शाब्द्या व्यञ्जनाया द्विधा विभागः कृतः।

**शब्दशक्तिमूलवस्तुध्वनिः**

**राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम्।**
**बाले, वारय पान्थस्य वासदानविधानतः॥**[2]

अत्र प्रतिकूलान्नृपान्मम महद्भयमतः स्वगृहे वासो देय इति कस्य-चिच्छरणार्थिनः प्रार्थना। अयमस्य पद्यस्य वाच्योऽर्थः। अनन्तरं कामातुरं मामयमुदीयमानश्चन्द्रो नितरां संतापयतीति कृत्वा उपभोगं देहीति व्यङ्ग्यो-ऽर्थः परिस्फुरति। अयमर्थो वस्तुरूपः। तेन चात्र शब्दशक्तिमूलवस्तुध्वनिः।

अनेन प्रकारेण पण्डितराजजगन्नाथेनाप्राकृतस्यार्थस्यापि व्यङ्ग्यत्वं सिद्धा-न्तितम्। यदि कश्चिद् ब्रूयात् रूपकादेरलङ्कारस्यैव व्यङ्ग्यत्वात् वस्तु-रूपिणोऽर्थस्य च व्यङ्ग्यत्वाभावान्नास्त्यत्र शब्दशक्तिमूलो वस्तुध्वनिस्तन्न, चन्द्ररूपिणोऽर्थस्य राजरूपार्थाच्छादकत्वात्। अतएव नृपार्थकोऽपि राजशब्द-श्चन्द्ररूपार्थाभिव्यक्त्यर्थमेव कविना प्रयुक्तः। यदि द्वयोर्नृपचन्द्ररूपिणोरर्थयोः प्रतीतिरेककालिकी स्यात्तदैवोपमानोपमेययोस्तुल्यप्रतीतौ सत्यामुपमाद्यल-ङ्कारस्य व्यङ्ग्यत्वं साम्प्रतम्। यतो राजादिपदैश्चन्द्रपक्षसम्बद्धा अर्था एव प्राधान्येन ग्राह्याः, अतः प्रस्तुते उदाहरणवाक्ये उपमानोपमेयभावस्य युगपदनु-ल्लासात् रूपकादीनामलङ्काराणां न प्राधान्येनाभिव्यक्तिरपितु वस्तुरूप्यर्थ एवात्र प्राधान्येन व्यङ्ग्यः।[3]

इत्थं पण्डितराजेन नानार्थकशब्दस्थले वस्तुरूपिणोऽर्थस्य व्यङ्ग्यालङ्का-रात् सर्वथा विविक्तो विषय इति प्रमाणीकृत्याप्राकृतस्यार्थस्यापि ध्वननं समुपोद्बलितम्।

---

१. रसगङ्गाधरः, पृ० १४६

२. तत्रैव, पृ० १६२

३. न चात्र नृपचन्द्रयोरुपमानोपमेयभावो भेदापोहरूपं रूपकं वा तथास्त्विति वाच्यम्, इह नृपरूपस्यार्थस्य चन्द्ररूपार्थगोपनमात्रार्थमुपात्तत्वेन युगप-दुल्लसितोपमानोपमेयकयोरुपमारूपकयोस्तात्पर्यविषयताया अयोगात्।
तत्रैव, पृ० ८८

**शब्दशक्तिमूलालङ्कारध्वनिः**

**करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।**
**धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥**[1]

अत्राभिधायां गजरूपार्थे नियन्त्रितायां सत्यामप्राकरणिक इन्द्रदेवरूपोऽर्थो व्यङ्गचोऽसम्बद्धो मा भूदिति कृत्वा प्राकरणिकाप्राकरणिकयोरर्थयोरुपमानोपमेयभावेनावस्थानम् । तेन चोपमालङ्कारध्वनिः ।

अनेन पर्यालोचनेन स्फुटं प्रतिपद्यते यच्छाब्दी व्यञ्जना सर्वथा श्लेषव्यतिरिक्ता । इयञ्च द्विविधा वस्त्वलङ्काररूपिणोरर्थयोर्ध्वननादिति सर्वेषां व्यञ्जनावादिनामालङ्कारिकाणामभिमतम् ।

**(ख) लक्षणामूला शाब्दी व्यञ्जना**

लक्षणा मूले यस्याः सा व्यञ्जना लक्षणामूला । लक्षणासत्त्वे लक्षणामूलव्यञ्जनासत्त्वं लक्षणाभावे लक्षणामूलव्यञ्जनाभाव इत्यन्वयव्यतिरेकाभ्यां लक्षणामूला शाब्दी व्यञ्जना लक्षणाश्रितैव । अत एवेयं लक्षणामूलेत्युच्यते ।

नन्वभिधामूलायां शाब्द्यां व्यञ्जनायां शब्दस्य पर्यायान्तरेण परिवृत्त्यसहत्वात्तस्याः शाब्दीति व्यपदेशोऽन्वर्थकः, परं लक्षणामूलायां व्यञ्जनायां 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य भागीरथीत्यादिपर्यायान्तरेण परिवृत्तिसहत्वात् प्रयोजनभूतस्य शैत्यपावनत्वाद्यतिशयरूपिणो व्यङ्गचार्थस्य भागीरथीत्यादिपर्यायान्तरप्रयोगेऽपि समुल्लासाच्छाब्दीत्यभिधानं सर्वथानुपपन्नमिति चेन्न, लक्षणामूलाया व्यञ्जनायाः शाब्दीति व्यपदेशे पर्यायान्तरपरिवृत्त्यसहत्वभिन्नकारणस्याप्यनुसन्धानात् । यतो हि लक्षणामूलाया व्यञ्जनायाः शाब्दीति नामकरणं न केवलं पर्यायान्तरपरिवृत्त्यसहशब्दहेतुकम्, प्रत्युत यथाऽभिधा शब्दस्य व्यापारस्तद्वदर्थनिष्ठापि लक्षणा मूलतः शब्दस्यैव व्यापारः । ततश्च यथा लक्षणा शब्दाश्रिता तथा तन्मूला व्यञ्जनापि शब्दाश्रितेति हेतोः पर्यायान्तरपरिवृत्तिसहत्वेऽपि लक्षणामूला व्यञ्जना शाब्दीत्युच्यते ।

किञ्च **'गङ्गायां घोषः'** इत्यादौ गङ्गापदं वाचकत्वेनैव पर्यायान्तरपरिवृत्तिसहं नतु लक्षकत्वेन । यदि 'गङ्गायां घोषः' इत्यनभिधाय 'गङ्गातटे घोषः' इत्यभिधीयेत, तर्हि गङ्गापदस्य लक्षकत्वविघटनाच्छैत्यपावनत्वादीनां प्रयोजनानां न तथा प्रतिपत्तिः । यतो हि गङ्गापदं यथा लक्षकत्वेन शैत्यपावनत्वादिप्रयोजनान्यवगमयितुं प्रभवति न तथा वाचकत्वेन । अतो लक्षकस्य गङ्गापदस्य वाचकपदेन परिवृत्तिमसहमानात्कारणाल्लक्षणोत्थापिताया व्यञ्जनाया अपि शाब्दीति व्यपदेशः सम्भवति ।

---

१. रसगंगाधरः, पृ० ७०

अभिधामूलायां व्यञ्जनायामभिधाव्यञ्जनयोर्नान्वयव्यतिरेकाभ्यामवस्थानम्। तत्राभिधासत्त्वेऽपि व्यञ्जनाभावो दृश्यते। परं लक्षणायाः प्रयोजनं विनानुत्थानात् प्रयोजनस्य च सर्वदा व्यञ्जनाद्योत्यत्वाल्लक्षणामूला व्यञ्जना लक्षणां विना नावस्थातुमर्हति। अतो लक्षणामूला व्यञ्जना सर्वथा लक्षणानुप्राणिता लक्षणामुपजीव्य तदुत्थानात्। तद्यथा—

**मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं**
**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।**
**उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं**
**बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते॥**[1]

कश्चित्तरुणः काञ्चित्तरुणीमवलोक्य तत्सौन्दर्यमुग्धस्तां श्लाघते मुखेत्यादिना। अत्र काव्यचारुत्वं लक्षणानुप्राणितव्यञ्जनाजन्यम्। विकसितवशितसमुच्छलितमुकुलितोद्धुरादयः शब्दा लाक्षणिकाः। विकासस्य पुष्पधर्मस्य स्मिते, वशीकरणस्य चेतनधर्मस्य प्रेक्षिते, ऊर्ध्वगतिविशेषरूपसमुच्छलनस्य मूर्तद्रवधर्मस्य विभ्रमे, मुकुलितत्वस्य पुष्पधर्मस्य स्तनयोः, उद्धुरत्वस्योत्कृष्टधुरावत्वरूपस्य चेतनधर्मस्य जघने बाधितत्वात्। ततो लक्षणया विकसितादिपदैर्बाधितस्वार्थैः सातिशयत्वस्वाधीनत्वबाहुल्यकाठिन्यविलक्षणरतियोग्यत्वादयोऽर्थाः क्रमेण लक्ष्यन्ते। व्यञ्जनया च लक्षणायाः प्रयोजकीभूतानि सौरभयुक्तानुरागसकलमनोहारिताऽऽलिङ्गनयोग्यत्वरमणीयत्वादीनि द्योत्यन्ते। अत्र व्यञ्जनैतानि रमणीयत्वादीनि व्यङ्ग्यानि लक्षणां निमित्तीकृत्य बोधयति, लाक्षणिकपदाभावे प्रयोजनस्याननुभवात्। अतो लक्षणामुखेन व्यञ्जनायाः सौरभसकलमनोहारितादिगूढार्थप्रत्यायनाल्लक्षणामूला शाब्दी व्यञ्जना। यथा वा—

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥**[2]

अत्र लिप्तसुहृद्रामादयः शब्दा उपचरिताः, वियति लेपनस्य पयोदे चाचेतने सौहार्दस्यानन्वयात्। अत एवानन्विता इमे लक्षणया सम्पर्कोपकारित्वादिकमर्थं लक्षयन्ति। तेन चातिशयप्रत्यायनं व्यङ्ग्यं व्यक्तिवेद्यं विदग्धानां

१. करमरकरः, दामोदररघुनाथः, मम्मट-काव्यप्रकाशः, पृ० ५६
२. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १६७

प्रतीतिपदवीमधिरोहति । रामशब्देनाप्युपचरितेनानुपयुज्यमानस्वार्थेन राज्य-निर्वासनाद्यसंख्येयं प्रयोजनं व्यज्यते लक्षणामुखेन। अन्वितं मुख्यं शब्दं परित्यज्य अमुख्यानन्वितपदप्रयोगः सर्वदा प्रयोजनप्रत्यायनार्थमेव । तच्च प्रयोजनम-भिधाव्यापारेणाशक्यसमर्प्यम्, शब्दानां तत्र सङ्केताभावात्। एतत् प्रयो-जनं लक्षणयापि न प्रत्याययितुं शक्यते, तस्य लक्षणायाः प्रयोजकत्वात् । अतः पारिशेष्याद् ध्वननव्यापारद्योत्यमेव तत् प्रयोजनमिति लक्षणामूला शाब्दी व्यञ्जना सर्वथा लाक्षणिकशब्दोत्थापिता विभाव्या। तल्लक्षणं विश्वनाथा-चार्येणेत्थमुपनिबद्धम्—

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।**
**यया प्रत्याय्यते सा स्यात् व्यञ्जना लक्षणाश्रया ॥**[1]

लक्षणायां प्रयोजनं सर्वथा व्यञ्जनाबोध्यमतः प्रयोजनवत्या लक्षणाया ये भेदा भवन्ति तेषु सर्वत्र व्यञ्जनाप्रसरः। तथा सति प्रयोजनवत्या लक्षणाया विश्व-नाथाचार्यप्रोक्तदिशा चतुष्षष्टिर्भेदा भवन्ति। एवमेव लक्षणामूलाया व्यञ्जनाया अपि चतुष्षष्टिर्भेदा उपपादयितुं शक्यन्ते । यद्यपि ध्वनिवादिभिराचार्यैर्लक्षणा-मूलाया व्यञ्जनाया अयं भेदप्रपञ्चो न प्रदर्शितः, तथाप्येतासु चतुष्षष्टिसंख्याकासु लक्षणासु प्रयोजनस्य व्यञ्जनागम्यत्वाल्लक्षणामूलाया व्यञ्जनाया अप्येते भेदा नूनं सम्भाव्यन्ते एवेति मामकीनं सप्रश्रयं मतम्। ध्वनिवादिभिराचार्यैः केवलं प्रधानव्यङ्ग्यगुणीभूतव्यङ्ग्ययोरेव ध्वनिगुणीभूतव्यङ्ग्यनामभ्यां भूयांसो भेदाः प्रपञ्चिताः। एतेषां सर्वेषां भेदानां विवेचनमत्र प्रकृतानुपयोगान्न सम्भा-व्यते। अतः केवलमविवक्षितवाच्यापरपर्यायस्य लक्षणामूलध्वनेरर्थान्तर-संक्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ द्वावेव भेदौ प्रदर्श्येते। उभयत्र व्यङ्ग्यार्थस्य लक्षणामूलया शाब्द्या व्यञ्जनया द्योत्यत्वात् । अवशिष्टेषु सर्वेषु ध्वनि-भेदेषु व्यङ्ग्यार्थस्याभिधामूलया व्यञ्जनया द्योत्यत्वात्तेषां विवेचनमत्र न विधीयते।

अविवक्षितवाच्यध्वनौ व्यङ्ग्योऽर्थो लक्षणामूलया शाब्द्या व्यञ्जनया द्योत्यः। लक्षणायां वाच्योऽर्थः क्वचिदर्थान्तरे सङ्क्रमितो भवति, क्वचिच्चा-त्यन्तं तिरस्कारमुपयाति। अतो वाच्यार्थस्यान्यत्रसङ्क्रमणादत्यन्ततिरस्काराच्चा-विवक्षितवाच्यो ध्वनिर्द्विविधः । अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृत-

---

१. विश्वनाथः, साहित्यदर्पणः, १,१५

वाच्यश्च ।[1]

**लक्षणामूलोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः**

यत्र वाच्योऽर्थः स्वार्थे सम्भवन्नपि तात्पर्योपपत्तये लक्ष्यार्थे स्वात्मानं समर्पयति, ततश्च प्रयोजनरूपिणोऽर्थस्य प्रतीतिर्व्यञ्जनया लक्षणामूलया, तत्रार्थान्तरसङ्क्रमितवाच्यो ध्वनिः । तद्यथा—

**तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।**
**रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥**[2]

अत्र द्वितीयः कमलशब्दो मुख्यार्थे सम्भवन्नपि तावतानुपयोगाल्लक्ष्मीपात्रत्वविकसितत्वसौरभत्वाद्यपरेऽर्थे आत्मानमर्पयित्वा तादृशगुणविशिष्टं कमलं, नतु साधारणं कमलरूपिणमभिधेयमर्थं लक्षणासहकारितया अभिव्यनक्ति । अतोऽत्र कमलरूपिणोऽर्थस्य सौरभादिगुणविशिष्टकमलरूपिण्यर्थान्तरे सङ्क्रमणात् अर्थान्तरसङ्क्रमितवाच्यो लक्षणामूलः शाब्दो ध्वनिः ।

**लक्षणामूलोऽत्यन्ततिरस्कृतवाच्यो ध्वनिः**

यत्र वाच्योऽर्थो बाधितः स्वार्थप्रतीतिं कारयित्वोपरतो भवति, अन्येऽर्थे च नोपसङ्क्रमते, तत्र वाच्यार्थस्यात्यन्ततिरस्कारात् अत्यन्ततिरस्कृतवाच्यो ध्वनिर्लक्षणामूलः । तद्यथा—

**रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।**
**निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥**[3]

अत्रान्धशब्दः सर्वथा स्वार्थे बाधितः । आदर्शस्य नेत्ररहितत्वात् । नेत्रवत एवान्धता दृष्टिनाशाज्जायते नत्वनेत्रस्यादर्शादिकस्य जडवस्तुनः । एवमन्धशब्दः स्वार्थमभिधाय विरमति । ततो नष्टदृष्टिर्यथा न कञ्चन पदार्थं द्रष्टुं पारयति, तथा निश्वाससमाच्छन्ने आदर्शेऽपि न पदार्थस्फुटीकरणशक्तिरिति लक्ष्यार्थावगत्यनन्तरं चन्द्रमसोऽसाधारणविच्छायत्वानुपयोगित्वादिधर्मजातं लक्ष-

---

१. अर्थान्तरे सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते ।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥
—विश्वनाथः, साहित्यदर्पणः, ४, ३

२. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १७०

३. तत्रैव, पृ० १७२

णायाः प्रयोजनायितं लक्षणामूलया व्यञ्जनयाऽभिव्यक्तं भवति। अत्रान्धशब्दः स्वार्थे बाधितोऽपरस्मिन्नर्थेऽनुपपन्नः स्वार्थं प्रत्याय्य पलायते इव, अतो वाच्यार्थस्यात्यन्ततिरस्कारादत्यन्ततिरस्कृतवाच्यो लक्षणामूलो ध्वनिः।

नन्वभिधामूलायां शाब्द्यां व्यञ्जनायां शब्दस्य पर्यायान्तरेण परिवृत्त्यसहत्वेऽपि अर्थस्य व्यञ्जकता न निराकर्तुं शक्यते, काव्यस्य शब्दार्थोभयरूपत्वात्, शब्दस्यार्थं विना अर्थस्य च शब्दं विनावस्थातुमसम्भवत्वादतः शब्दव्यञ्जकतायामर्थस्याप्यपेक्षणाच्छाब्दीति व्यपदेशोऽयुक्त इति चेन्न, प्राधान्येन व्यपदेशा भवन्तीति न्यायाच्छब्दस्य प्राधान्येन व्यञ्जकतायां शाब्दीतिव्यपदेशस्योपपन्नत्वात्। अयमाशयः—शाब्द्यां व्यञ्जनायामर्थस्यापि सहकारित्वेनापेक्षा यद्यप्यशक्यशङ्का, अर्थं विना शब्दस्यानवस्थानात्तथापि शाब्द्यां व्यञ्जनायां शब्द एव प्राधान्येन व्यञ्जकोऽर्थस्तु केवलं सहकारी। अतोऽर्थस्य व्यञ्जकतायामपि शब्दव्यञ्जकतायाः प्राधान्याच्छब्दमुखेन व्यपदेशः।[1]

——:०:——

१. केवलं शब्दशक्तिरुद्भटाऽर्थशक्तिस्तु तामेवानुप्राणयतीति नार्थशक्तिमूलो व्यवहारः।

श्रीशिवप्रसादः, मम्मटकाव्यप्रकाशः, दीपिका टीका, पृ० ७४

# षष्ठोऽध्यायः

## आर्थी व्यञ्जना

अर्थस्य प्राधान्येन व्यञ्जकतायामार्थी व्यञ्जना। अर्थास्तु वाच्यलक्ष्यव्यङ्ग्यरूपास्त्रिविधाः।[1] एषामर्थानां व्यञ्जकत्वे व्यञ्जनरूप आर्थो व्यापार एवार्थी व्यञ्जना। वाच्यलक्ष्यव्यङ्ग्यरूपास्त्रिविधा अर्था वक्तृबोद्धव्यादीनामुपाधीनां सहकारितया व्यञ्जका भवन्ति, अतोऽर्थस्य व्यञ्जकता सर्वदौपाधिका। अत एवार्थ्या व्यञ्जनाया लक्षणमुपनिबध्नद्भिरालङ्कारिकैर्वक्तृबोद्धव्यादीनां सहयोगेनार्थस्य व्यञ्जकता प्रतिपादिता। उपाधिनिरपेक्षोऽर्थो व्यङ्ग्यमर्थं ध्वनयितुं न प्रभवतीत्यार्थ्यां व्यञ्जनायामुपाधीनां परमापेक्षा। एवं वक्तृबोद्धव्याद्युपाधिभिः सहकृतो व्यङ्ग्यार्थद्योतक आर्थो व्यापार आर्थी व्यञ्जनेति लक्षणं पर्यवस्यति।[2]

आर्थ्या व्यञ्जनाया उदाहरणं तावन्निम्नलिखितप्रकारेणावगन्तव्यम्।

**निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥**[3]

---

१. (क) अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः।
विश्वनाथः, साहित्य-दर्पणः, २,२

(ख) मुख्योपचरितव्यङ्ग्याः क्वचिदर्थास्त्रयोऽप्यमी।
बिभ्रति व्यञ्जकीभावं निजप्रागल्भ्यसम्पदा॥
नरेन्द्रप्रभसूरिः, अलङ्कार-महोदधिः, ३,८

२. वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च।
वैशिष्ट्यादन्यमर्थं या बोधयेत् साऽर्थसम्भवा॥
विश्वनाथः, साहित्यदर्पणः, २,१६

३. करमरकरः र० दा०, मम्मट-काव्यप्रकाशः, पृ० २०

अत्र काचिन्मदनशरासारविदीर्यमाणहृदया विदग्धा नायिका नायकाऽऽनयनाय प्रेषितां तमुपभुज्यागतामकृतज्ञां दूतीमुपालभते व्यञ्जनासाह्येन । यद्यपि नायिका निश्शेषच्युतचन्दनादिभिश्शब्दैः स्नानचिह्नानि निर्दिशति, तथापि व्यङ्ग्यरत्नवैकटिकैर्वक्तृबोद्धव्यवैशिष्ट्यान्नायकोपभोगरूपोऽर्थः कामिनीकुचकलशवद्गूढः प्रतीयमानः सन्नास्वाद्यते ।

विदग्धा नायिका कृतापराधां दूतीं भर्त्सयति यत्त्वं नायकमनुपगम्य स्नानार्थं वाप्यामवतीर्णासि । अत एव स्तनतटाच्चन्दनस्याधराच्च रागस्य विलोपः । अयं वाच्योऽर्थो वक्तृबोद्धव्यवैशिष्ट्यान्नायकोपभोगरूपिणमर्थमभिव्यनक्ति । नहि काचिदुत्तमा विदग्धा नायिका नायकमधमपदेन निन्दति । अतः स्नानरूपिण्यर्थे उपात्तानि निश्शेषच्युतचन्दनादीनि विशेषणानि सम्भोगार्थगमकानि ।[1]

एवञ्च निश्शेषच्युतचन्दनादीनां पदानां पर्यायान्तरेण विपर्ययेऽपि कृते वक्तृबोद्धव्यमहिम्ना भावुकानां चेतसि नायकोपभोगरूपो व्यङ्ग्योऽर्थः परिस्फुरति । अतः शब्दस्य परिवृत्तिसहत्वात् पर्यायान्तरप्रयोगे चाप्यर्थस्य ध्वननादर्थनिष्ठा व्यञ्जनार्थी ।

वाच्यलक्ष्यव्यङ्ग्यरूपाणामर्थानां त्रैविध्यादार्थी व्यञ्जना त्रिविधा । वाच्यार्थसम्भवार्थी व्यञ्जना, लक्ष्यार्थसम्भवार्थी व्यञ्जना, व्यङ्ग्यार्थसम्भवार्थी व्यञ्जना चेति ।[2]

---

१. एवं विदग्धाया गूढतात्पर्यवाचोयुक्त्या साधारणेष्वेतेषु वाक्यार्थेष्ववगतेषु विदग्धोत्तमनायिकात्वदुःशीलत्वादिरूपवक्तृबोद्धव्यवैशिष्ट्यबलादधमपदार्थो दुखप्रयोजककर्मशीलत्वरूपः साधारणो वाच्यतादशायां तादृशकर्मान्तरशीलत्वरूपेणावस्थितो व्यञ्जनया दूतीसम्भोगरूपतादृशकर्मशीलत्वाकारेण पर्यवस्यति ।

पण्डितदुर्गाप्रसादः, गोविन्दकृतः काव्यप्रदीपः, उदाहरणचन्द्रिका, पृ० १३

२. (क) त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ।

विश्वनाथः, साहित्य-दर्पणः, २,१७

(ख) वाच्यमूला व्यञ्जनैषा लक्षणा प्राक् प्रदर्शिता ।
उदाहृतेषु दूरार्थभाने व्यङ्ग्यगताप्यसौ ॥

शुक्लः, श्रीकालिकाप्रसादः, आशाधरभट्टविरचितः कोविदानन्दः, कारिका १८

## (क) वाच्यार्थसम्भवार्थी व्यञ्जना

यत्राभिधयाऽभिहितो वाच्यार्थो व्यञ्जकः सन् व्यञ्जनामुत्थापयति तत्र वाच्यार्थसम्भवार्थी व्यञ्जना । वाच्यार्थसम्भवायामार्थ्यां व्यञ्जनायां वाच्योऽर्थो व्यञ्जनाया मूलम् । अतो वाच्यार्थसम्भवेयं व्यपदिश्यते । तद्यथा—

**मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया ।**
**तद् भण किं करणीयमेवमेव न वासरः स्थायी ॥**[1]

इत्यत्रान्नेन्धनादिगृहोपकरणानयनव्याजेन परपुरुषसम्भोगरसिका काचिद-विनयवती पूज्यां वृद्धां प्रार्थयते बहिर्गमनानुमतिप्रदानार्थम् । कामिनीरूप-वक्तृवैशिष्ट्यवशात् वाच्यार्थादस्मात् स्वैरविहारार्थिनीयं स्त्रीति व्यज्यते । अयमाशयः । प्रस्तुते पद्ये प्रतिभावान् सहृदयः मातर्गृहोपकरणादीनां शब्दानामभिधया सङ्केतितानर्थानवबुध्य नायिकाया वक्त्र्या वैशिष्ट्यात् तस्याः स्वैरोपभोगाभिलाषं गूढमवगच्छति । यदि वक्त्री सद्गृहिणी स्यात्तदा नापर-स्यार्थस्य परपुरुषसम्भोगाभिलापरूपिणो ध्वननम् । अतो व्यञ्जनायाः समुल्लासे वक्तृवैशिष्टयमत्र निबन्धनम् । स्वैरविहाररूपोऽर्थो गूढस्तत्तच्छब्दानां सङ्केति-तेभ्यो वाच्यार्थेभ्य एवावगतो भवति, अतोऽत्र वाच्यार्थस्य व्यञ्जकत्वं निर्बाधम्। तथा सति वाच्यार्थसम्भवेयमार्थी व्यञ्जना।

अत्र वाच्यार्थद्योतितस्य स्वैरविहाररूपिणोऽर्थस्य प्रतीतिर्न वैयञ्जनिकीति न शङ्क्यम् । 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति वृद्धोक्तनयमनुरुध्य वाच्यार्थमात्रबोधविरतसामर्थ्याया अभिधाया व्यङ्ग्यार्थप्रत्यायने दुर्बलत्वात् । मुख्यार्थबाधाद्यभावे लक्षणायाश्चाप्रवृत्तेः । अतः पारिशेष्यात् ध्वननव्यापार-सिद्धैव स्वैरविहाररूपिणोऽर्थस्य प्रतीयमानस्यावगतिः । एतच्चास्माभिरभिधा-वादिनां मीमांसकानां मतविवेचनसमये सप्तमेऽध्याये वितत्य प्रदर्शितमिति तत एवावधार्यम् ।

वाच्यार्थसम्भवेयमार्थी व्यञ्जना वक्तृबोद्धव्यादीनामुपाधीनां वैशिष्ट्यादेव व्यङ्ग्यार्थप्रत्यायने प्रभवति ।[2] अतो वक्त्रादीनामुपाधीनां भेदेन वाच्यार्थसम्भवा व्यञ्जना पुनर्भिद्यते । तद्यथा—(१) वक्तृविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना

---

१. करमरकरः, रघु० दा०, मम्मटकृतः काव्यप्रकाशः, पृ० २८

२. वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।
मम्मटः, काव्यप्रकाशः, ३,२१-२२

(२) बोद्धव्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (३) काकुविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (४) वाक्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (५) वाच्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (६) अन्यसन्निधिविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (७) प्रकरणरूपप्रस्तावविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (८) देशविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (९) कालविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना (१०) चेष्टाविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना ।

**(१) वक्तृविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

वक्तुर्वैशिष्ट्याद् वाच्यार्थस्य व्यञ्जकत्वे वक्तृविशिष्टा वाच्यसम्भवाऽऽर्थी व्यञ्जना । तद्यथा—

**अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम् ।**
**श्रमस्वेदसलिलनिश्वासनिःसहा विश्राम्यामि क्षणम् ॥**[1]

अत्र काचिद्विदग्धा नायिका गहनवनप्रदेशे उपपतिना सह सुरतसुखमनुभूय यदा गृहं प्रतिनिवर्तते, तदा तस्याः प्रच्छन्न उपपतिभोगः प्रकाशतां नोपेयादिति शङ्कया प्रतिवेशिनीं सखीं सम्बोध्यासौ कथयति यच्छ्रमस्वेदसलिलनिश्वासादीनि मम वपुषि लक्ष्यमाणानि चिह्नानि सम्भोगगमकानि न विभाव्यानि । प्रत्युत अतिपृथुलो जलेन परिपूर्णोऽयं घटोऽतिदुर्वहः । अयं मयैवोढः न त्वन्यया कयाचित् साहाय्यमाचरितमित्यायासवशान्निश्वासः । गृहव्यापारसम्पादनत्वरया मार्गे विश्राममकृत्वा त्वरितगत्याहमतिपृथुकमपीमं घटं कथञ्चित् स्वस्कन्धे वहन्ती अत्रोपस्थिता, अतो महानायासस्तेन च घर्मसलिलप्रस्रवणम् ।

अत्र पुंश्चल्याः प्रच्छन्न उपपतिसम्भोगो वक्त्र्या वैशिष्ट्यादेवाभिव्यक्तो भवति । इहान्वयनिमित्तभूते श्रमस्वेदसलिलनिश्वासाद्यर्थे सुस्थितेऽपि अन्वयाद्बहिःकृतोऽर्थान्तर उपपतिरमणरूपो वक्त्र्या वैशिष्ट्यादेव ध्वनितो भवति । यद्यत्र वक्त्री साध्वी स्त्री वृद्धा वा स्यात्तदा घर्मसलिलादिशब्देभ्यो वाच्यार्थमात्रप्रतीते र्न काचिच्चमत्कृतिः । परं वक्त्र्याः पुंश्चल्या वैशिष्ट्यादेवात्र वाच्यार्थात् परपुरुषोपभोगरूपो व्यङ्ग्योऽर्थः समुल्लसति । एवं पुंश्चल्या वक्त्र्या वैशिष्ट्यादेव व्यङ्ग्यार्थसमुल्लासे सति वक्तृविशिष्टा वाच्यसम्भवार्थी व्यञ्जनात्र स्फुटा ।

**(२) बोद्धव्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

यत्र व्यङ्ग्यार्थावगतिर्बोद्धव्याया व्यक्तेर्ज्ञाननिबन्धिनी, तत्र बोद्धव्यस्य

१. करमरकरः, र० दा०, मम्मटकृतः काव्यप्रकाशः, पृ० ७३

वैशिष्ट्याद् बोद्धव्यविशिष्टा व्यञ्जना। यमुद्दिश्य वक्त्रा वाक्यमुदीर्यते तस्य स्वभावादिकस्य ज्ञानेनैव व्यङ्ग्यार्थावगतौ बोद्धव्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना। तद्यथा—

**औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिश्वसितम्।**
**मम मन्दभागिन्याः कृते सखि त्वामप्यहह परिभवति॥**[1]

अत्र नायकमुपभुज्यागतां कृतघ्नां वयस्यां प्रति नायिकाया उक्तिरियम्। नायिकाया अनया दुश्चरित्रया वयस्यया तद्वल्लभं संभुज्य नायिकां प्रत्यनार्यमाचरितम्। अतो बोद्धव्यायाः सख्या वैशिष्ट्याद् वाच्यार्थमुपसर्जनीकुर्वन् प्रच्छन्नो नायिकावल्लभचौर्यरतिरूपो व्यङ्ग्योऽर्थो बोद्धव्यवैशिष्ट्यवशात् प्रतिभावतां सचेतसां मनस्सु परिस्फुरति। यद्यत्र बोद्धव्याया दूत्या असद्भावः पूर्वमवगतो न स्यात्, तत्स्थाने च प्रतिपाद्या निसर्गसद्भावप्रवृत्ता साध्वी स्त्री भवेत्तदार्थान्तरप्रतीतिर्न भवेत्। प्रत्युत तथा सति श्लोकार्थस्य वाच्यार्थे एव विश्रान्तिः। यदि बोद्धव्या सखी वस्तुतो नायिकोपकाररता अहर्निशञ्च तत्कृते क्लिश्नाति, तदा कामुकोपभोगरूपिणो व्यङ्ग्यस्यास्य नावभासः। अतो बोद्धव्यायाः सख्याः वैशिष्ट्याच्चौर्यरतिरूपिणोऽर्थस्यानुरणनाद् बोद्धव्यविशिष्टेयं वाच्यसम्भवा आर्थी व्यञ्जना।

**(३) काकुविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

**'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते'** इति काकुलक्षणम्। तेन काकुः कण्ठविकारः। यत्र विशेषकण्ठध्वनिनैव वाक्ये उच्चरिते व्यङ्ग्यार्थावगतिर्भवति, तत्र काकोर्वैशिष्ट्याद् व्यङ्ग्यार्थावगतौ काकुविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना। तद्यथा—

**तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां**
**वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतं**
**गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥**[2]

अत्र काक्वा मयि न योग्यः खेदः कुरुषु तु योग्य इति व्यङ्ग्यार्थस्य प्रतीतिः।

१. करमरकरः, र० दा०, मम्मटकृतः काव्यप्रकाशः, पृ० ७३
२. तत्रैव, पृ० ७४

प्रस्तुते पद्ये **नाद्यापि कुरुषु** इत्यत्र 'न' पदे काकुः । विशेषकण्ठध्वनिनैवास्योच्चारणे कृते सति, कुरुषु योग्यः खेदो युधिष्ठिरस्य ज्येष्ठभ्रातुर्नतु मयि भीमसेने इति व्यङ्ग्यार्थस्यावगतिः। यद्ययं पद्यखण्डः काकुं विना साधारणेन स्वरेण प्रोच्यते, तदा कण्ठविकाराभावे, गुरुर्खिन्ने मयि खेदं भजति, अद्यापि कुरुषु न भजतीत्यस्य साधारणस्य विच्छित्तिविशेषशून्यस्यार्थस्यावगतिः । अतः क्रुद्धस्य भीमसेनस्य सहदेवं प्रति प्रोक्तमिदं वचनं नाद्यापीति काक्वैवोच्चरितं सद् व्यङ्ग्यार्थप्रत्यायनक्षमं भवति । अयमभिप्रायोऽत्र भीमसेनस्य । भीष्मपितामहद्रोणाचार्यादीनां पूज्यानां वृद्धानामुपस्थितौ, दुष्टेन नराधमेन दुर्योधनेन अस्माकं भार्या द्रौपदी विवसना कृता, तत्पीडितैरेवास्माभिः पाण्डुपुत्रैः वल्कलमात्रवसनधारिभिर्गहनेषु वनेषु भ्रमद्‌भिरनन्तानि दुःखान्यनुभूतानि । अतः प्रतिज्ञातशतकौरववधे, दुश्शासनापकारप्रत्युद्धारकृतपरिकरे मयि भीमसेने, ज्येष्ठभ्रातुर्युधिष्ठिरस्य कोपः कथमपि न न्याय्यः प्रत्युताततायिनि दुर्योधने एव कोपः प्रकटनीयो येन वैरोद्धारो भवेदिति सर्वो व्यङ्ग्योऽर्थो घण्टानिह्रादस्थानीयो 'न' इति काक्वैव ध्वन्यते । तदभावे वाच्यार्थमात्रविश्रान्तौ का सरसता ?

ननु काक्वा व्यङ्ग्यार्थस्य प्रत्यायने काक्वाक्षिप्तं गुणीभूतव्यङ्ग्यमत्र वाच्यं नतु ध्वनिरिति चेन्न, अनुपपद्यमानस्य वाच्यार्थस्य काक्वा सुसंगतावेव, काक्वाक्षिप्तगुणीभूतव्यङ्ग्यत्वात्, अतथात्वे च ध्वनिकाव्यत्वात् । तथाहि—

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।**
**सञ्चूर्णयामि गदया न सुयोधनोरू**
**सन्धिं करोतु भवतां नृपतिः पणेन ॥**[1]

इत्यत्र दुश्शासनदुर्योधनकौरवविनाशोद्यतस्य भीमसेनस्य 'न पिबामि न सञ्चूर्णयामी'ति वचनमनुपपन्नम् । अतः काक्वैव कौरवशतसंहारमाचरिष्यामि दुर्योधनस्योरुभङ्गमपि विधास्यामीत्यर्थस्य प्रतीतिः । सा च काक्वा विना न सम्भवति । अतः काकुबलेनैव काव्यार्थस्योपपत्तिः । काकुमहिम्नावसीयमानो व्यङ्ग्योऽर्थोऽत्र स्वात्मनि विश्रान्तिं न भजति, प्रत्युत प्रत्यावृत्य वाच्यार्थमेवोपस्करोति, अतो गुणीभूतव्यङ्ग्यत्वं काक्वाक्षिप्तमत्र निर्बाधम् ।

परं काकुविशिष्टव्यञ्जनायां न तादृशी वार्ता, यादृशी काक्वाक्षिप्तगुणीभूतव्यङ्ग्ये । काकुविशिष्टव्यञ्जनायां काक्वा वाच्यार्थे एव विश्रमः । अतो

---

१. काव्यप्रकाशः, पृ० १२०

व्यङ्ग्यार्थस्य प्राधान्येनावस्थानात्, वाच्यार्थस्य च प्रत्यावृत्त्य तदुपस्कारकरणात्, ध्वनिकाव्यमक्षुण्णम् । तथाहि—**'गुरुः खिन्ने मयि खेदं भजति (किम्) अद्यापि कुरुषु न खेदं भजति किम्'** इत्यत्र वाच्यं प्रश्नमात्रेणापि सिद्धं भवति । अतः प्रश्नमात्रेण विश्रान्तिशयनाङ्कमधिशयानापि काकुर्यदा अवान्तरस्य व्यङ्ग्यार्थस्य ध्वनने सहकारिणी भवति, तदा तद्वैशिष्ट्यात् व्यञ्जनायास्तादृशं नामकरणम् । काकुविशिष्टायां व्यञ्जनायां काकुप्रत्यायितस्य व्यङ्ग्यार्थस्य न वाच्ये विश्रान्तिः । नापि च तत्कृता वाच्यार्थशोभा, प्रत्युत व्यङ्ग्यार्थः प्राधान्येन चकासन्नलङ्कार्यत्वेनावतिष्ठते । अतो न तत्र गुणीभूतव्यङ्ग्यशङ्का । यदि काकुविशिष्टायां व्यञ्जनायां काक्वा वाच्योऽर्थ उपपन्नो भवेत्, तदैव काक्वा ध्वन्यमानस्य व्यङ्ग्यार्थस्य वाच्यार्थं प्रत्युपस्कारकत्वेनावस्थानात् गुणीभूत-व्यङ्ग्यत्वमुपपन्नं भवेत् । परं यदा प्रश्नमात्रं अभिव्यज्य काकुर्विश्राम्यति, तदा पूर्वोदाहृते ध्वनिकाव्ये वाच्यार्थापर्यवसायी यो व्यङ्ग्यार्थः प्रतीतिपदवीमधिरोहति, असौ ध्वनिरेव । व्यञ्जना चात्र काकुसहकृता व्यङ्ग्यार्थं ध्वनयतीति कृत्वासौ काकुविशिष्टोच्यते ।

तथा चोक्तं मम्मटभट्टेन—

**'न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम् । प्रश्न-मात्रेणापि काकोर्विश्रान्तेः'** ।[1]

### (४) वाक्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना

यत्र व्यङ्ग्योऽर्थः प्रयुक्तस्य वाक्यस्य वैशिष्ट्यात् समुन्मिषति, तत्र वाक्यविशिष्टा व्यञ्जना । वाक्यमत्र व्यङ्ग्यार्थोत्थापने सहायकम् । अतो वाक्य-वैशिष्ट्येन व्यङ्ग्यार्थप्रतीतौ वाक्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना ।

---

१. (क) काव्यप्रकाशः, पृ० ७५

(ख) अत्र भीमो न मथ्नामीति वक्तुं स्वप्नेऽपि न सम्भाव्यत इति काव्यार्थानुपपत्तौ सत्याम्, काकुर्व्यङ्ग्यार्थविश्रान्तिद्वारेण काव्यार्थमुपपादयति । यदा पुनर्व्यङ्ग्यविश्रान्ति विनैव प्रश्नमात्रविश्रान्तः काकुः काव्यार्थमुपपादयति, तदा न काक्वाक्षिप्तता, यथाऽत्र । अत एव काक्वा प्रकाश्यत इति पदं काक्वा काकुविशिष्टेन प्रकाश्यत इतीत्थं व्याख्येयमिति शुद्धध्वन्युदाहरणवादिनां पक्षः । अभ्यङ्करः, वासुदेवशास्त्री, श्रीमाणिक्यचन्द्रविरचितसङ्केतसमेतः काव्यप्रकाशः, सङ्केतटीका, पृ० ३२-३३

तद्यथा—

> तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र।
> इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥[1]

अत्र 'तदा' 'इदानीम्' 'सा' इत्येतेषां पदानां वैशिष्ट्यात् प्रच्छन्नकामुकत्वं व्यज्यते, अतो वाक्यविशिष्टेयं व्यञ्जना। काचिन्नायिका स्वसखीसन्निधौ निजकपोलावलोकनपरं नायकं निरीक्ष्य पश्चाच्च स्वसखीप्रस्थानानन्तरं निजकपोलदर्शनव्यावृत्तनेत्रं तमवबुध्योपालभते 'तदि'त्यादिना। अत्र विप्रलब्धाया नायिकाया अयमाशयः। प्राक् मम कपोले प्रतिबिम्बितां मम सखीमवलोकयतस्तव तादृशी दृष्टिरभूत्, अधुना तस्यां प्रस्थितायामन्यादृश्येव तव दृष्टिरतस्तव मत्सखीविषयकः प्रच्छन्नानुरागः प्रकाशमायातः। अतः सर्वथा शठोऽसीति व्यङ्ग्यार्थप्रतीतिस्तदेदानीमित्यादीनां पदानां पर्यालोचनया भवतीति वाक्यवैशिष्ट्येन व्यङ्ग्यार्थविभासः।

**(५) वाच्यविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

वाच्यवैशिष्ट्येन व्यङ्ग्यार्थं प्रत्याययन्ती व्यञ्जना वाच्यविशिष्टा। वाच्यः अर्थोऽत्र व्यङ्ग्यार्थावगतौ निबन्धनतामुपयातीतिकृत्वा वाच्यविशिष्टेयं व्यपदिश्यते। वाक्यविशिष्टायां व्यञ्जनायां वाक्यं व्यङ्ग्यार्थप्रतीतौ सहायकम्। परं वाच्यविशिष्टायां व्यञ्जनायां वाच्योऽर्थः सहायकः। अतो द्वयोर्भेदः। एवं वाच्यवैशिष्ट्येन व्यङ्ग्यार्थबोधिका वाच्यसम्भवा आर्थी व्यञ्जना। तद्यथा—

> उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
> कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
> किञ्चैतस्मिन् सुरतसुहृदस्तन्वी ते वान्ति वाता
> येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥[2]

अत्र सरसकदलीत्यादिविशेषणविशिष्टस्य नर्मदेति वाच्यार्थस्य वैशिष्ट्यात् रतार्थं प्रविशेति व्यङ्ग्योऽर्थः परिस्फुरति। तथाहि— सरसेत्यादिना शुष्कपर्णाभावे कर्णकटुहृदयोद्वेजकशब्दराहित्यात्, श्रेणीत्यनेन कदलीवृक्षसमुदायाधिक्यात्, केनाप्यदृष्टं सुखावहं सुरतकर्म भविष्यतीति नर्मदोद्देशः सर्वथानुकूलो विविधसुरतवैचित्र्योपभोगार्थं प्रवेशयोग्यश्चेति ध्वनिर्विशेषणविशिष्टवाच्यार्थवैशिष्ट्यादेव अभिव्यक्तो भवति।

---

१. काव्यप्रकाशः, पृ० ७५
२. काव्यप्रकाशः, पृ० ७६

**(६) अन्यसन्निधिविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

वाक्यस्य वक्तुः श्रोतुर्वैशिष्ट्यातिरिक्तस्यान्यस्य कस्यचित्तटस्थस्य सन्निधिवैशिष्ट्याद् व्यङ्ग्यार्थं द्योतयन्ती व्यञ्जना अन्यसन्निधिविशिष्टा। यावदन्यस्य वक्तुः श्रोतुश्च भिन्नस्य तटस्थस्य कस्यचित् सन्निधिर्न ज्ञायते, तावद् व्यङ्ग्योऽर्थो न परिस्फुरति । अतोऽन्यसन्निधिवैशिष्ट्येन व्यङ्ग्यार्थावगतौ वाच्यसम्भवा आर्थी व्यञ्जना अन्यसन्निधिविशिष्टा। अन्यस्य तटस्थस्य सन्निधिर्व्यङ्ग्यार्थपरिस्फुरणेऽत्र हेतुः । तद्यथा—

**नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।**
**क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥[1]**

अत्र काचिच्चतुरा नायिका मदनशरासारदीर्यमाणहृदयं कामातुरमुपपतिं तटस्थतयेव सन्निहितं वीक्ष्य मिलनसमयं ध्वनयति प्रतिवेशिनीसम्बोधनछद्मना । नायिकाया अत्रायमभिप्रायः । अहनि समग्रगृहकार्यसम्पादनावश्यकतया विश्रामाभावः । तेन च दुर्लभो मिलनावसरलाभो दिवसे । सन्ध्यायां गृहकार्यपरिसमाप्तौ वृद्धमातरि प्रीतायां सत्याम्, विश्रामव्याजेन निर्दिष्टमिलनस्थानं प्रति सौकर्येण गमनागमनम् । अतो यावत् पापीयानयं दिवसो नातिक्रामति, तावत्त्वया कामपीडापरमव्याकुलेनापि सधैर्यं समयो यापनीयः । आगतायां सन्ध्यायां विश्रामव्याजेन मिलनं सम्भवमिति तटस्थतया सन्निहितमुपपतिं प्रति विदग्धाया उक्तिः । व्यङ्ग्यार्थोऽयं तटस्थतया सन्निहितस्योपनायकस्योपस्थितावेव सहृदयैरास्वाद्यते । उपनायकस्यानुपस्थितौ प्रतिवेशिनीं प्रति कथितं पूर्वोक्तं वचनं वाच्यार्थमात्रविश्रान्तं सत्तुच्छमनास्वाद्यञ्च । यतः सुरतसङ्केतस्थानजिज्ञासोरुपनायकस्यान्यस्य सन्निधौ तद्वैशिष्ट्यात् सन्निहितमुपपतिं प्रति सुरतसङ्केतसमयोऽनया विदग्धया सूचित इति व्यङ्ग्योऽर्थः सहृदयहृदये चकास्ति ।

**(७) प्रकरणरूपप्रस्तावविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

वक्तुः प्रकरणरूपप्रस्तावर्वैशिष्ट्ये व्यङ्ग्यार्थं द्योतयन्ती व्यञ्जना प्रकरणरूपप्रस्तावविशिष्टा । अत्र वक्तुः प्रस्तावो व्यङ्ग्यार्थावगतौ निबन्धनतामुपयाति । अतस्तद्वैशिष्ट्यात् व्यञ्जनाऽर्थं ध्वनयति । एवं प्रकरणरूपप्रस्ताववैशिष्ट्येन व्यङ्ग्यार्थावगतौ प्रकरणरूपप्रस्तावविशिष्टा वाच्यसम्भवा आर्थी

---

१. काव्यप्रकाशः, पृ० ७७

व्यञ्जना। तद्यथा—

**श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।**
**एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम्॥**[1]

अत्रोपनायकमुपभोक्तुं प्रस्थितां नायिकां प्रति तत्सख्या इयमुक्तिः। धनोपार्जनार्थं विदेशं प्रति गतस्तव पतिरधुना विदेशादागच्छति, अत एतादृशे समये त्वया गृहे एव स्थातव्यम्, न तूपपतिरमणार्थं बहिः प्रयातव्यमिति विदग्धा सखी जनान्तरसन्निधौ अभिसारार्थं प्रयान्तीं स्वसखीं चातुर्येण ध्वनयति। व्यङ्ग्योऽयमर्थः प्रकरणरूपप्रस्ताववैशिष्ट्यादेव सचेतसां मनस्सु विद्योतते। उपनायकं रन्तुमभिलषन्ती नायिका सुरतसुखावहवेशविन्यासादिनात्मानमलङ्कृत्याऽभिसारार्थं समुद्यतेति व्यङ्ग्योऽर्थः प्रकरणज्ञानवतां सहृदयानामेव प्रतीतिविषयः। अतः प्रकरणरूपप्रस्ताववैशिष्ट्याद् व्यङ्ग्यार्थावगतौ प्रकरणरूपप्रस्तावविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना।[2]

**(८) देशविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

स्थानवैशिष्ट्येन व्यङ्ग्यार्थपरिस्फुरणे देशविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना। वर्णनीयस्थानवैशिष्ट्यमत्र व्यङ्ग्यार्थोल्लासे निबन्धनम्। तद्यथा—

**अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।**
**नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः॥**[3]

अत्र विदग्धया प्रियसख्या कौशलेन विविक्तप्रदेशे समानीतमुपनायकं दृष्ट्वा काचित् सम्भोगसुखार्थिनी रमणी कुसुमावचयार्थमुद्याने समागताः स्ववयस्यास्तस्मात्स्थानादन्यत्र गन्तुमादिशति, 'अन्यत्र यूयं कुसुमावचायमि'त्यादिना। नायिकायाः प्रियसखी मन्मथवेदनाविदीर्यमाणहृदयेयं नायिकाऽवश्यमेवास्या हृदयवल्लभेन संयोज्येति विचार्य तत्कामुकं वेषविपर्ययं कारयित्वा महिलाजनसञ्चरणायोग्ये तस्मिन्नुपवने आनयति। अत एव निर्विघ्नसुरतसुखोपभोगार्थं विविक्तं देशमीहमाना नायिका, कुसुमावचायपराः स्वसखीः विदग्धतया सम्बोधयति 'अन्यत्र यूयमि'त्यादिना। अयमभिप्रायः। हे सख्यः, यूयमितो दूरं

---

१. काव्यप्रकाशः, पृ० ७७

२. अत्र प्रकरणस्य प्रस्तावस्याभिसारसम्बन्धित्वरूपवैशिष्ट्यादुपपतिं प्रत्यभिसर्तुं न योग्यमिति व्यज्यते।
—पण्डितः दुर्गाप्रसादः, गोविन्दकृतः काव्यप्रदीपः, पृ० ५३

३. काव्यप्रकाशः, पृ० ७८

गत्वा कुसुमान्यवचिनुथ । अहं दूरं गन्तुमशक्ता । अतो हस्तग्राह्यकुसुमेऽस्मिन् निर्जने प्रदेशे एकाकिन्येवाहं प्रसूनचयनं करोमि । वाच्यार्थादस्मादतिविविक्त-तादिरूपदेशवैशिष्ट्यात् प्रच्छन्नकामुक उपभोगार्थमत्र प्रहेय इत्यर्थो ध्वनितो भवति ।

**(९) कालविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

यत्र कालज्ञानेन व्यङ्ग्यार्थः परिस्फुरति, तत्र कालरूपोपाधिवैशिष्ट्यात् ध्वनौ सति कालविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना । तद्यथा—

**गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी अहकम् ।**
**अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥[1]**

प्रवसिष्यन्तं नायकं प्रति सन्नायिकाया उक्तिरियम् । अत्रैतादृशे मधुमासे यदा विरहिणीनां कामिनीनां हृदयवल्लभा अपि स्वगृहानायान्ति, तदा त्वं विदेशगमनैकमना असीति न शोभनम् । विरहिजनहृदयविदारकेऽस्मिन् मधुमासे उपस्थिते मद्विधानां हतभाग्यानां नारीणां प्रियतमवियोगे सति मरणमन्तरेण नान्या गतिः । अतो मम जीवनेनास्ति यदि किञ्चित् प्रयोजनम्, अस्मि च तव हृदयवल्लभाऽहम्, तदा त्वया मधुमासेऽस्मिन्नत्रैव स्थातव्यमिति व्यङ्ग्योऽर्थो मधुमासकालमहिम्नैव परिस्फुरति । यदि नायकस्य प्रवासगमनमन्यस्मिन् काले भवेत्तदा नेदृशस्यार्थस्य ध्वनिः । व्यङ्ग्योऽयमर्थो मधुमासकालवैशिष्ट्यादेव ध्वनितो भवति, अतोऽत्र कालविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना ।

**(१०) चेष्टाविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना**

**प्रस्तावदेशकालादेः** इति मम्मटभट्टकारिकायामादिपदग्रहणाच्चेष्टादीनां वैशिष्ट्यादपि व्यङ्ग्यार्थोल्लासः सम्भवः । एवं चेष्टाविशेषेण वाच्यार्थव्यञ्जक-तायां चेष्टाविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना । तद्यथा—

**द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया**
**प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।**
**आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने**
**वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥[2]**

अत्रोपपति गुरुजनसविधे पश्यन्ती काचिद्विदग्धा नायिका किञ्चिद्वक्तुमश-क्नुवती विपरीतसुरतप्रदानस्पृष्टकालिङ्गनादिभिः सूर्यास्तसमयानन्तरं कोलाहल-रहिते काले त्वां प्रसादयिष्यामीत्यूरुसमासङ्गलोचनाधःक्षेपादिभिश्चेष्टाभिरुप-

१. काव्यप्रकाशः, पृ० ७६

२. काव्यप्रकाशः, पृ० ७६

पतिं प्रति स्वाकूतं ध्वनयति। एवं लोचनचालनांशुकाधःप्रक्षेपणादिभिश्चेष्टाभिः विपरीतरतिप्रदानाद्यर्थध्वननात् चेष्टारूपोपाधिविशिष्टा वाच्यसम्भवा आर्थी व्यञ्जना।

अत्रेदं बोध्यम्। व्यञ्जकता न केवलं वक्तृबोद्धव्याद्युपाधिषु पूर्वगणितेष्वेव विभाव्या, परमशाब्द्याश्चेष्टाया अपि वैशिष्ट्येन व्यञ्जकतायामुपपन्नायां व्यञ्जनयाऽनया सर्वं विश्वमेव व्याप्तम्। वक्तृबोद्धव्याद्युपाधिपरिगणनया तु दिङ्मात्रमुन्मीलितम्। वस्तुतस्तु व्यञ्जनानन्ता। वक्तृबोद्धव्यादीनामुपाधीनां पृथक् पृथग्व्यञ्जकत्वे वाच्यार्थसम्भवा व्यञ्जनैवात्र निर्दिष्टा। परं वक्तृबोद्धव्याद्युपाधीनां सम्मिलितानामपि वैशिष्ट्याद् वाच्यार्थस्य व्यञ्जकता सम्भवति। तद्यथा—

**कालो मधुः कुपित एष च पुष्पधन्वा**
**धीरा वहन्ति रतिखेदहराः समीराः।**
**केलीवनीयमपि वञ्जुलकुञ्जमञ्जु**
**दूरे पतिः कथय किं करणीयमद्य॥**[1]

अत्र वक्तृवाक्यप्रस्तावदेशकालानां मिलितानां व्यञ्जकत्वं दृश्यते। तथाहि **एतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रहेयः** इति व्यङ्ग्योऽर्थोऽत्र पूर्वोक्तानामुपाधीनां वैशिष्ट्यवशात् परिस्फुरति। चौर्यरताभिलाषिणी काचित् स्वैरिणी प्रस्तुते पद्ये वक्त्री। अतो वक्तृवैशिष्ट्यं स्फुटम्। 'एषः' '**इयम्**' '**अपि**' इत्यादीनि पदान्यप्यत्र व्यङ्ग्यार्थावगतौ सहायकान्यतः वाक्यवैशिष्ट्यम्। मधुवञ्जुलकुञ्जादीनां वर्णने कालदेशयोरपि वैशिष्ट्यं विभाव्यते। अतोऽत्र वक्तृदेशकालादीनां पञ्चानामुपाधीनां वैशिष्ट्येन **प्रच्छन्नकामुकोऽत्र प्रहेयः** इति व्यङ्ग्यार्थध्वननान्मिलितोपाधिविशिष्टा वाच्य-सम्भवा आर्थी व्यञ्जना।

## (ख) लक्ष्यार्थसम्भवा आर्थी व्यञ्जना

यत्र लक्ष्योऽर्थो व्यञ्जकस्तत्र लक्ष्यार्थसम्भवा आर्थी व्यञ्जना। अयमाशयः। लक्ष्यार्थसम्भवायामार्थ्यां व्यञ्जनायां प्रथममभिधया वाच्यार्थप्रतीतिरनन्तरं मुख्येऽर्थेऽनुपपन्ने सति लक्षणया लक्ष्यार्थस्यावगतिः। लक्ष्यार्थस्य व्यञ्जकतायां लक्ष्यार्थसम्भवा आर्थी व्यञ्जना। वाच्यार्थसम्भवायामार्थ्यां व्यञ्जनायां वाच्योऽर्थो व्यञ्जकोऽत्र तु लक्ष्योऽर्थ इति द्वयोर्भेदः।

ननु लक्ष्यार्थसम्भवाऽऽर्थी व्यञ्जना लक्षणामूलायां शाब्द्यां व्यञ्जनायामन्तर्भवतीत्यार्थीति तद्व्यपदेशोऽनुपपन्न इति चेन्न, लक्ष्यार्थादेव व्यङ्ग्यार्था-

---

१. शास्त्री, शालग्रामः, विश्वनाथ-कविराजकृतः साहित्यदर्पणः, पृ० ४३

वगतेर्नतु लक्षकाच्छब्दात् । अयमाशयः । लक्षणामूलायां शाब्द्यां व्यञ्जनायां लक्षकः शब्दो व्यञ्जकः । तत्र व्यञ्जना प्रयोजनरूपिणं व्यङ्ग्यमर्थं लक्षणा-सहकारितया लक्षकशब्दबलाद् ध्वनयतीति लक्षणामूला व्यञ्जना शाब्दी । परं यत्र लक्ष्यार्थसम्भवा व्यञ्जना, तत्र प्रयोजनरूपोऽर्थो न लक्ष्यार्थसम्भवाया व्यञ्जनाया विषयः । असौ तु लक्षणामूलायाः शाब्द्या व्यञ्जनाया एव विषयः । परं प्रयोजनरूपव्यङ्ग्येन सहापरस्य व्यङ्ग्यार्थस्य प्रतीतिर्लक्ष्यार्थाद् भवतीत्यसौ व्यङ्ग्यार्थो लक्ष्यार्थसम्भवाया व्यञ्जनाया विषयः । अतो यया व्यञ्जनया प्रयोजन-रूपार्थप्रतीतिरसौ लक्षणामूला शाब्दी व्यञ्जना । यया च प्रयोजनातिरिक्तस्यार्थ-स्य व्यङ्ग्यस्य लक्ष्यार्थात् व्यञ्जकाद् ध्वननं सा लक्ष्यार्थसम्भवा आर्थी व्यञ्जना । एवमुभयोर्विविक्तविषयत्वाद् भेदः स्पष्टः । लक्षणामूलायां शाब्द्यां व्यञ्जनायां प्राधान्येन शब्द एव व्यञ्जकः । 'गङ्गायां घोषः' इत्यत्र गङ्गातटे इति पदपरि-वर्तनेन न व्यङ्ग्यार्थप्रतीतिरतस्तत्र शब्दस्य प्राधान्येन व्यञ्जकता । परं लक्ष्यार्थ-सम्भवायामार्थ्यां व्यञ्जनायां व्यङ्ग्योऽर्थो लक्षकाच्छब्दान्नाभिव्यक्तो भवति, प्रत्युत लक्ष्यार्थात् । अतोऽस्या आर्थीत्यभिधानं लक्ष्यार्थसम्भवेति नामकरणमु-भयमप्युपपन्नम् । इत्थं लक्ष्यार्थात् व्यङ्ग्यार्थस्य ध्वनने लक्ष्यार्थसम्भवा आर्थी व्यञ्जना । तद्यथा—

**साधयन्ती सखी सुभगं क्षणे क्षणे दूनासि मत्कृते ।**
**सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया ॥**[1]

अत्र काचिद्विप्रलब्धा नायिका निजसख्यवयवेषु क्षामतादिलक्षणानि निरीक्ष्य मम प्रियोऽनया उपभुक्त इत्यनुमिनोति । परतश्च साधयन्तीत्यादिना श्लोकेन तां भर्त्सयति । अत्रापराधिन्याः सख्या विषये प्रयुक्तं सद्भावस्नेह-करणीयसदृशकमितिवचनमनुपपन्नमत एव तात्पर्यानुपपत्तेर्मुख्यार्थबाधः । तेन च लक्षणायाः प्रयोजनभूतं शत्रुत्वातिशयरूपं व्यङ्ग्यं परिस्फुरति । अनन्तरं लक्ष्यार्थान्नायकोऽतीव धूर्तोऽविश्वसनीयस्तादृशी च त्वमित्यपरो व्यङ्ग्योऽर्थोऽपि समुन्मिषति । असावर्थो न लक्षणायाः प्रयोजनभूतः । परं प्रयोजनरूपार्थानन्तरं प्रतीयमानः कामुकदूतीविषयकापराधरूपोऽर्थो लक्ष्यार्थाद्व्यज्यतेऽतोऽत्र लक्ष्यार्थ-सम्भवा आर्थी व्यञ्जना ।

वाच्यार्थसम्भवायामार्थ्यां व्यञ्जनायां तृतीयस्यां कोट्यां व्यङ्ग्यार्थस्याव-गतिः । लक्ष्यार्थसम्भवायामार्थ्यां व्यञ्जनायां तु चतुर्थ्यां कोट्यां व्यङ्ग्यार्था-

---

१. काव्यप्रकाशः, पृ० २९

वगतिः सम्पद्यते । वाच्यार्थसम्भवायां व्यञ्जनायामाद्यायां कोट्यां सङ्केतितार्थ-प्रतीतिः, द्वितीयस्यां कोटयमाकाङ्क्षासत्तियोग्यतावशात् सङ्केतितार्थानां परस्परमन्वितरूपेणावस्थानम् । तृतीयस्यां कोट्यां व्यङ्ग्यार्थस्य व्यक्तिः ।

परं लक्ष्यार्थसम्भवायामार्थ्यां व्यञ्जनायां चतुर्थ्यां कोट्यां घण्टानिह्लाद-स्थानीयस्य व्यङ्ग्यार्थस्य ध्वननम् । तत्र मुख्यार्थप्रतीतिरिति प्रथमा कोटिः । तेषामनन्वितानामर्थानां परस्परं संसर्ग इति द्वितीया कोटिः । तात्पर्यानुप-पत्त्या मुख्यार्थसम्बद्धलक्ष्यार्थावगतिरिति तृतीया कोटिः । पुनश्चतुर्थ्यां कोट्यां व्यङ्ग्यार्थप्रतीतिरिति लक्ष्यार्थसम्भवायामार्थ्यां व्यञ्जनायां व्यङ्ग्यो-ऽर्थस्तुरीयकोटिसमारूढः रसिकानां प्रतीतिपदवीमध्यारोहति ।

यथा वक्तृबोद्धव्याद्युपाधिवैशिष्ट्याद् वाच्यार्थस्य व्यञ्जकता पुरा प्रोक्ता तथैव लक्ष्यार्थस्यापि व्यञ्जकता सम्भवा । यथा च वाच्यार्थसम्भवायां व्यञ्ज-नायां व्यस्तानां समस्तानां चोपाधीनां व्यञ्जकता सम्भवति, तथैव लक्ष्यार्थ-सम्भवाया व्यञ्जनाया अपि वक्तृबोद्धव्याद्युपाधिद्विकत्रिकादियोगे भेदा संभवन्ति । लक्ष्यार्थसम्भवाया व्यञ्जनायाः पूर्वोक्तोपाधिवैशिष्ट्याद् वाच्यार्थसम्भव-व्यञ्जनावदुदाहरणानि सौकर्येण नोपलभ्यन्ते, अतो दिङ्मात्रं प्रदर्श्यात्र विरम्यते ।

वक्तृवैशिष्ट्यादुपचरितार्थस्य व्यञ्जकतायां वक्तृविशिष्टा लक्ष्यार्थसम्भवा आर्थी व्यञ्जना । तद्यथा—

**दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद् गृहे दास्यसि**
**प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।**
**एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं**
**नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ।।**[1]

अत्र काचित् स्वैरिणी जलानयनव्याजेन गृहाद् बहिर्गत्वारण्ये उपपतिना सह रन्तुमीहते । स्वैरिण्याः पत्यर्थं सरसो जलानयनार्थं गमिष्यामीति वचनं तात्पर्यानुपपत्तिवशादनुपपन्नम् । नहि तत्त्वतः पतिभक्त्येयं पुंश्चली दूरदेशात् जलमानेतुं यतते, प्रत्युत तद्व्यपदेशेनासौ उपपतिना सह रन्तुं कामयते । अतस्तत्त्वतः पत्यर्थं सरसो जलानयनं नात्रेष्टमिति वक्त्र्यास्तात्पर्यानुपपत्ते-र्मुख्यार्थबाधाद् वैपरीत्यसम्बन्धेन परपुरुषसमीपगमनं लक्ष्यते । अनन्तरं वक्त्र्या स्वैरिण्या वैशिष्ट्यात् परपुरुषोपभोगार्थं गच्छन्तीयं नीरन्ध्रनलग्रन्थिघर्षण-

---

१. शास्त्री, शालग्रामः, श्रीविश्वनाथकविराजकृतः साहित्यदर्पणः, पृ० १३५

व्याजेन सम्भाव्यमानानि रतोपमर्दजनितनखक्षतादिचिह्नानि निह्नुते इति व्यङ्ग्योऽर्थः परपुरुषसमीपगमनरूपलक्ष्यार्थादुदेति । अत्र वक्त्र्या वैशिष्ट्यं व्यङ्ग्यार्थावगतौ निबन्धनमतो लक्ष्यार्थसम्भवा वक्तृविशिष्टा आर्थी व्यञ्जना।

एवमेव 'साधयन्ती सखी' इति पूर्वोक्ते पद्ये कामुकविषयसापराधत्वं व्यङ्ग्यं बोद्धव्याया दूत्या वैशिष्ट्यात् परिस्फुरति । यदि बोद्धव्या दूती सद्भावपरा तदा न व्यङ्ग्यार्थोल्लासः । तस्या निस्नेहत्वासद्भावपरत्वादिबोधे एव व्यङ्ग्यार्थप्रतीतिः । अतोऽत्र बोद्धव्यविशिष्टा लक्ष्यार्थसम्भवा आर्थी व्यञ्जना। एवं काकुप्रकरणादिवैशिष्ट्यादपि लक्ष्यार्थव्यञ्जकता विद्वद्भिः स्वयमेवोह्या ।

## (ग) व्यङ्ग्यार्थसम्भवा आर्थी व्यञ्जना

यत्र व्यङ्ग्योऽर्थो व्यञ्जकस्तत्र व्यङ्ग्यार्थोज्जीविता व्यञ्जना व्यङ्ग्यार्थसम्भवेति व्यपदिश्यते । व्यङ्ग्यार्थसम्भवायां व्यञ्जनायां प्रथमं वाच्योऽर्थः अनन्तरं व्यञ्जनया व्यङ्ग्यार्थोऽवबुध्यते । पुनर्व्यङ्ग्यार्थादस्मात् व्यञ्जनया अपरो व्यङ्ग्योऽर्थो ध्वनितो भवति । अतएवेयं द्वितीया व्यञ्जना व्यङ्ग्यार्थसम्भवेत्युच्यते । तद्यथा—

**पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।**
**निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥**[1]

अत्र चौर्यरतसुखरसिकया कयाचित् 'निश्चलनिष्पन्दा' इत्यादिना जनरहितत्वमिति सूच्यते । व्यङ्ग्यार्थादस्मात् सङ्केतस्थानमिदमतोऽत्र जनरहितत्वान्निष्कण्टकः सुरतसुखास्वादो भविष्यतीत्यपरो व्यङ्ग्योऽर्थोऽभिव्यक्तो भवति । अत्र 'निश्चलनिष्पन्दा' इत्यादीनां पदानां निश्चलेत्यादिसङ्केतितोऽर्थः प्रथमः । तदनन्तरं वाच्यार्थादस्मात् कमलिनीपत्रे बलाकाया निश्चलभावेनावस्थान्निर्जनत्वमिति व्यङ्ग्यार्थप्रतीतिः । ततश्च विस्रब्धः सम्भोग इत्यन्त्यायां कोट्यां व्यङ्ग्यार्थात् व्यङ्ग्यार्थस्य प्रतीतिरिति व्यङ्ग्यार्थसम्भवा आर्थी व्यञ्जना ।

अस्मिन् प्रसङ्ग एतत्स्मरणीयमास्ते यदेतासु विवेचितासु व्यञ्जनासु वक्तृबोद्धव्यादीनामुपाधीनां वैशिष्ट्यादेव व्यङ्ग्यार्थस्य ध्वननम् । अतो व्यङ्ग्यार्थसम्भवाया व्यञ्जनाया अपि वाच्यार्थलक्ष्यार्थसम्भवव्यञ्जनादिशा

---

१. काव्यप्रकाशः, पृ० ३०

उपाधीनां भेदाद् बहवो भेदा भवन्ति । ते भेदा उदाहरणानां सौकर्येणादर्शनान्नात्र प्रस्तूयन्ते । केवलं दिङ्मात्रमेवोन्मील्यते ।

तत्र वक्तृवैशिष्ट्याद् व्यङ्ग्यार्थस्य व्यञ्जकता, यथा—

**भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन ।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥**[1]

अत्रादौ व्यञ्जनया गोदावरीतीरे सिंहसद्भावाद् धार्मिकस्य भ्रमणनिषेधो व्यज्यते । ततश्च भ्रमणनिषेधरूपव्यङ्ग्यार्थात् निर्विघ्नसुरतव्यापारास्वादो भविष्यतीति विदग्धया कयाचित् पार्श्वस्थमुपपतिं प्रति ध्वन्यते । अत्र वक्त्र्या पुंश्चल्या वैशिष्ट्याद् व्यङ्ग्यार्थस्य प्रतीतिर्भवति । यदि वक्त्री साध्वी, तर्हि वाच्यार्थस्यैव प्रतीतिः । किञ्च निर्विघ्नसुरतभोगरूपो व्यङ्ग्योऽर्थोऽन्यसन्निधिरूपोपाधिवैशिष्ट्यादपि ध्वनितो भवति । यद्युपपतिः समीपे न विद्यते, तदा भीरुधार्मिकभ्रमणनिषेधरूपो व्यङ्ग्योऽर्थ एव प्रतीतः स्यात् । परमपरस्य व्यङ्ग्यार्थस्यानुभूतौ अन्यसन्निधेरपि वैशिष्ट्यम् । एवं व्यङ्ग्यार्थसम्भवाया व्यञ्जनाया काक्वाद्युपाधिवैशिष्ट्यादन्ये भेदाः स्वयमेवोह्याः ।

### व्यङ्ग्यार्थवैचित्र्येण व्यञ्जनाभेदाः

व्यञ्जकार्थवैचित्र्येण आर्थ्या व्यञ्जनाया भेदाः प्रदर्शिताः । अधुना व्यङ्ग्यार्थवैचित्र्येण तस्याः पुनर्भेदाः निरूप्यन्ते । वक्तृबोद्धव्याद्युपाधीनां वैशिष्ट्येन आर्थी व्यञ्जना यं व्यङ्ग्यमर्थमभिव्यनक्ति, असावर्थस्त्रिविधः । वस्तुरूपोऽलङ्काररूपो रसरूपश्चेति । अतस्त्रिविधं व्यङ्ग्यमर्थं बोधयन्ती व्यञ्जना व्यङ्ग्यार्थधिया पुनस्त्रिधा विभज्यते । (१) वस्तुव्यङ्ग्या आर्थी व्यञ्जना (२) अलङ्कारव्यङ्ग्या आर्थी व्यञ्जना (३) रसव्यङ्ग्या आर्थी व्यञ्जना ।

#### (क) वस्तुव्यङ्ग्या आर्थी व्यञ्जना

या व्यञ्जना वस्त्वात्मकं व्यङ्ग्यं बोधयत्यसौ वस्तुव्यङ्ग्या व्यञ्जना । तद्यथा—

**अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**[2]

---

१. शास्त्री, पट्टाभिरामः, आनन्दवर्धनकृतः ध्वन्यालोकः, पृ० ५२
२. काव्यप्रकाशः, पृ० १३५

इत्यत्र काचित् प्ररूढयौवना समासन्नविवाहा कुमारी सम्भावितस्य पत्युरलस-धूर्तत्वादीन् गुणानाकर्ण्य प्रहृष्यतीति वाक्यार्थः । तेन चैवंविधगुणविशिष्टः पतिरस्या एवोपभोगयोग्यः सर्वथा परमसौभाग्यवती चासाविति व्यङ्ग्योऽर्थो वस्तुरूपो व्यक्तो भवति । अत्रालसत्वेन नायकस्य नायिकान्तरगृहगमनशङ्कानिरासः, धूर्तत्वेन तस्य सम्भोगव्यग्रता, धनसमृद्धिमयेत्यादिना च सर्वथैश्वर्यसम्पन्नत्वञ्च पत्युर्ध्वनितं भवति । अत एवंविधगुणानां रमणीजनवल्लभानां सद्भावात् परमसौभाग्यशालित्वं कुमार्या व्यक्तं भवति । तच्च लोचनविकासादिभिश्चेष्टाभिरनया सूच्यते । अतो ममैवोपभोगयोग्योऽयमिति वस्तुरूपिणोऽर्थस्य परिस्फुरणाद् वस्तुव्यङ्ग्येयमार्थी व्यञ्जना ।

**(ख) अलङ्कारव्यङ्ग्या आर्थी व्यञ्जना**

या व्यञ्जना अलङ्कारारूपिणं व्यङ्ग्यमर्थं द्योतयत्यसौ अलङ्कारव्यङ्ग्या व्यञ्जना । तद्यथा—

**यः कालागुरुपत्रभङ्गरचनावासैकसारायते**
**गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।**
**विच्छेदानलदीपितोत्कवनिताचेतोधिवासोद्भवं**
**सन्तापं विनिनीषुरेष विततैरङ्गैर्नताङ्गि स्मरः ॥**[1]

इत्यत्रापह्नुतिसन्देहप्रतिवस्तूपमाहेत्वादीनामलङ्काराणां ध्वननादुत्तममुदाहरणमलङ्कारव्यङ्ग्याया व्यञ्जनायाः । तद्यथा—कोऽपि नायकः स्वप्रियासम्मुखे कामिजनमन्मथोज्जृम्भकं चन्द्रमण्डलमध्यवर्तिनं कलङ्कं वर्णयति । अत्र नायं वियोगाग्निव्याकुलोत्कण्ठितरमणीहृदयसंतापहरश्चन्द्रकलङ्कः किन्तु तथाविधो मन्मथ इत्यपह्नवध्वननादपह्नुत्यलङ्कारस्य व्यङ्ग्यत्वम् । नात्रापह्नवरूपोऽर्थोऽभिहितः, परन्तु **'नताङ्गि, एष स्मरः'**, इत्यादिना प्रकृतं चन्द्रकलङ्कमपह्नुत्याप्रकृतस्मरस्थापनादपह्नुत्यलङ्कारो व्यङ्ग्यः । किञ्च चन्द्रवर्तिनस्तस्य कलङ्कस्यात्र न नामतो ग्रहणम् । अपितु गौराङ्गीकुचकुम्भसदृशे चन्द्रमसि कालागुरुपत्रभङ्गवच्छोभाधायकोऽयं कलङ्कोऽन्यद्वा किञ्चिद् वस्त्विति सन्देहध्वननात् सन्देहालङ्कारो व्यङ्ग्यः । प्रतिवस्तूपमाध्वनिरप्यत्र दृश्यते । काचिन्नायिका गृहायातं नायकमनङ्गीकृत्य पश्चात्तापमनुभवति ।

---

१. शास्त्री, पण्डितपट्टाभिरामः, आनन्दवर्धनकृतो ध्वन्यालोकः, लोचनभाष्यम्, पृ० २७५

तत्सखी च नायिकासंतापद्रवितहृदया कथञ्चिन्नायकं तत्समीपमानयति। नायकोऽयं प्रस्तुतश्लोकेन चन्द्रमसोऽङ्कं वर्णयन् चाटुकमारभते यन्नायिकाकुचकुम्भाभूषितकालागुरुपत्ररचना मन्मथमुद्दीपयति। चन्द्रवर्तिनी कुवलयदलश्यामलकलकान्तिरप्येवमेव करोतीति मन्मथोद्दीपनरूपसाधारणधर्मस्योपमेयवाक्ये उपमानवाक्ये च शब्दभेदेनोपादानात् प्रतिवस्तूपमालङ्कारो व्यङ्ग्यः। सन्तापं विनिनीषुरित्यत्र सन्तापहरणरूपकार्यस्य सुधाधामनीत्यादिहेतोर्ध्वननाद्धेत्वलङ्कारध्वनिरपि। सुधाधामनीति पदं हेतुतां नाभिदधाति, प्रत्युत तामभिव्यनक्तीति हेत्वलङ्कारस्यापि व्यङ्ग्यत्वमत्र द्रष्टव्यम्। नायिकाकुचशोभा मृगाङ्कशोभा चोभे सह काममुद्दीपयत इति सहोक्तिध्वनिरपि। नायिकाकुचसदृशश्चन्द्रश्चन्द्रसदृशश्च नायिकाकुचकुम्भ इत्यर्थध्वननादुपमेयोपमाध्वनिरपि।[1] एवमपह्नुतिसन्देहाद्यलङ्काराणां व्यङ्ग्यत्वेऽलङ्कारव्यङ्ग्या आर्थी व्यञ्जना।

नन्वलङ्कारस्य व्यङ्ग्यत्वे तस्यालङ्कार्यत्वमुपपन्नं न त्वलङ्कारता अन्यानलङ्करणात्। अतोऽलङ्कारध्वनिरिति व्यपदेशो न यौक्तिकः। तथाहि—कटककुण्डलादीनां लौकिकानामलङ्काराणां यथा रमणीनामलङ्करणादलङ्कारता तथा वाच्यवाचकधर्माणामनुप्रासोपमाद्यलङ्काराणामपि ध्वन्यमानार्थस्योपस्कारकरणादलङ्कार इत्यभिधानमन्वर्थकम्। परमलङ्कारध्वनावुपमोत्प्रेक्षादयो ध्वन्यमाना अलङ्कारा नाङ्गिनं कञ्चिदलङ्कुर्वन्ति, परं स्वयमङ्गित्वेनावतिष्ठमाना भूष्यन्ते। अत उपमारूपकादीनामलङ्काराणां ध्वनने सति तेषामलङ्कारनाम्नाभिधानकरणं सर्वथाऽनुपपन्नम्। नह्यलङ्कारध्वनौ ध्वन्यमाना अलङ्काराः कञ्चिदलङ्कुर्वन्ति, येनालङ्कारता तेषामुपपद्येत। प्रत्युत उपस्कार्याः सन्तो ध्वनित्वेन मूर्धाभिषिक्तास्तेऽलङ्कार्यत्वेन व्यपदेष्टव्याः नत्वलङ्कारत्वेनेति चेन्न। ब्राह्मणश्रमणन्यायेन अलङ्कार्यस्याप्यलङ्कारत्वव्यपदेशसम्भवात्। तथाहि—आदौ ब्राह्मणस्य पश्चाच्छ्रमणभावमापन्नस्य त्यक्तशिखासूत्रस्य अब्राह्मणस्यापि श्रमणस्य यथा पूर्वसंस्कारवशाद् ब्राह्मणत्वेनैव व्यपदेशः, तद्वदत्रापि प्रणिभालनीयम्।[2]

---

१. लोचनभाष्यम्, पृ० २७६

२. यः पूर्वं क्वापि वाक्यार्थेऽलङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनलङ्काररूप एवान्यत्रगुणीभावाभावात्, स पूर्वं प्रत्यभिज्ञानबलादलङ्कारध्वनिरिति व्यपदिश्यते ब्राह्मणश्रमणन्यायेन।
ध्वन्यालोकलोचनम्, पृ० ५१

परं पण्डितराजजगन्नाथेन पूर्वोक्तं न्यायं विदूष्य मञ्जूषागतकटकन्यायेन व्यङ्ग्यस्यालङ्कारस्यालङ्कारध्वनिरित्यभिधानं समर्थितम् ।[1] अयमाशयः पण्डितराजजगन्नाथस्य । यथा श्रमणस्य ब्राह्मणभावः पूर्वं दृष्टः श्रुतो वा भवति, तेन चाब्राह्मणस्यापि श्रमणस्य ब्राह्मणव्यपदेशः प्रसिद्धिं याति, न तथा ध्वन्यमानोऽलङ्कारः पूर्वं कदाचिदलङ्कारत्वेन ज्ञातो भवति येनाधुना अलङ्कारध्वनिरित्यभिधानमौचित्यं बिभृयात् । अलङ्कारध्वनने सति, अलङ्कार्यत्वात्तस्यालङ्कारत्वं व्याहतम्भवति । पूर्वम् अलब्धसत्ताकोऽलङ्कारध्वनिरलङ्कार्यत्वेनैव स्वरूपलाभं प्राप्नोति । अतस्तस्यालङ्काररूपेण न पूर्वं व्यवहारो येन ब्राह्मणश्रमणन्यायमवलम्ब्य तस्यालङ्कारध्वनिरिति व्यपदेशो यौक्तिकः स्यात् । अतो यौक्तिक्या बुद्ध्या निष्पीड्यमानोऽयं न्यायो नोपमर्दं क्षमते । प्रत्युत मञ्जूषागतकटकन्यायेनालङ्कारध्वनिरिति व्यपदेशः युक्तः । यथा मञ्जूषागता रमणीभिरवयवेष्वनवधृता अपि कटककुण्डलादयोऽलङ्काराः, अन्यानलङ्करणादप्यलङ्कारा एवाभिधीयन्ते, तथैव व्यङ्ग्यकोटिमारूढोऽलङ्कारोऽपि मञ्जूषागतकटककुण्डलादिलौकिकालङ्कारवदनलङ्कुर्वाणोऽपि अलङ्कारध्वनिरिति संज्ञप्यते ।

### (ग) रसव्यङ्ग्या आर्थी व्यञ्जना

रसरूपिणं व्यङ्ग्यार्थं द्योतयन्ती व्यञ्जना रसव्यङ्ग्येत्युच्यते । तद्यथा—

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥[2]**

अत्र विभावानुभावादीनां समुचितयोजनया व्यञ्जनामहिम्ना सम्भोगशृङ्गाररसस्याभिव्यक्तिः । तद्यथा—नायिका आश्रयभूता । नायकोऽत्रालम्बनम् । गृहस्य शून्यत्वं पत्युर्मुखादिकञ्चोद्दीपनम् । चुम्बनादिकञ्चानुभावः । लज्जाहासादयश्च व्यभिचारिभावाः कल्लोलवदुन्मिषन्तो निमिषन्तश्च । यथा

---

१. अस्याञ्चालङ्कारव्यपदेशः कदाप्यलङ्कारभावमप्राप्तेषु मञ्जूषादिगतेषु कटकादिष्विवालङ्कुर्वाणगतधर्ममात्रस्पर्शनिबन्धनः।

झा, पण्डितबद्रीनाथः, पण्डितराजजगन्नाथविरचितः रसगंगाधरः, पृ० ३०५

२. काव्यप्रकाशः,पृ० १०१

शर्करापयोलवङ्गादीनां सामग्रीणां सम्मेलनेन निर्वर्तितः पानकरस आस्वादमुपयाति, तथैव विभावानुभावसंवलनया चमत्कृतिमादधानस्तन्मयीभवनयोग्यताग्राह्यो व्यङ्ग्यः सम्भोगशृङ्गारो विदग्धानामास्वादविषयतामुपयाति । एवं व्यङ्ग्यं रसं बोधयन्ती वृत्तिर्व्यञ्जना रसव्यङ्ग्येत्युच्यते ।

व्यङ्ग्यस्य रसस्य बहुविधत्वात्, वस्त्वलङ्कारध्वन्योरपि स्वतःसम्भविकविप्रौढोक्तिसिद्धेत्यादिना नानात्वाद् ध्वनेर्भेदा बहुविधाः । व्यङ्ग्यार्थस्य च व्यञ्जनाव्यापारवेद्यत्वात् व्यङ्ग्यार्थनानात्वे तत्प्रत्यायकस्य व्यापारस्यापि ध्वनिवद् बहवो भेदा भवन्ति । परमत्र प्रधानभेदा एव प्रदर्शिताः ।

वस्तुतस्तु अशब्दात्मकनेत्रत्रिभागावलोकनादीनामपि व्यञ्जकतायामनवधिर्व्यञ्जकता । तेन च व्यङ्ग्यार्थद्योतनपरस्य व्यापारस्याप्यनन्तता ।

## शाब्द्यार्थ्योर्व्यञ्जनयोर्भेदः

यद्यपि शाब्द्यां व्यञ्जनायामर्थस्य आर्थ्यां व्यञ्जनायाञ्च शब्दस्य सहकारिता नितान्तमपेक्ष्यते, तथापि शाब्द्यां व्यञ्जनायां शब्दस्य प्राधान्येन व्यञ्जकतायां शाब्दी, आर्थ्यां व्यञ्जनायां चार्थस्य प्राधान्येन व्यञ्जकतायाम् आर्थीति व्यपदेशः प्रतिष्ठां प्राप्तः । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । एवं शब्दस्य प्राधान्ये व्यञ्जनायाः शाब्दीत्यर्थप्राधान्ये चार्थीतिनामकरणाच्छाब्द्यार्थीत्युभयविधविभागो युक्तियुक्तः । किञ्च शाब्द्यां व्यञ्जनायां शब्दः पर्यायान्तरेण परिवृत्त्यसहोऽतः शब्दस्य व्यञ्जकतायां शाब्दीति व्यपदेशः सार्थकः । शब्दपरिवर्तनेन व्यङ्ग्यार्थस्याप्रतीतेः । आर्थ्यां व्यञ्जनायां पर्यायान्तरेण शब्दस्य परिवृत्तिसहत्वादर्थस्य व्यञ्जकतायामार्थीति व्यपदेशो युक्तियुक्तः । परमुभयत्रैकस्य प्राधान्येऽपरस्याप्यपेक्षा । अन्यथा शाब्द्यां व्यञ्जनायामर्थस्यानपेक्षायामज्ञातार्थस्य शब्दस्यापि व्यञ्जकताप्रसङ्गः । आर्थ्यां व्यञ्जनायां च विशिष्टशब्दाभिधानाभावे तदभिधेयार्थस्य व्यञ्जकता न स्यात् । अतः शब्दार्थयोर्द्वयोरपेक्षा ।[1]

---

१. यद्यपि शब्दशक्तिमूलकत्वमर्थशक्तिमूलकत्वञ्चेत्युभयमपि सकलव्यङ्ग्यसाधारणम्, शब्दार्थयोरनुसन्धानं विना व्यङ्ग्यस्यैवानुल्लासात्, तथापि परिवृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात् प्राधान्यात् सत्या अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशः । परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात् सत्या अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया मल्लग्रामादिवत् प्रधानेनैव व्यपदेशः । झा, पण्डितबद्रीनाथः, पण्डितराजजगन्नाथविरचितः रसगङ्गाधरः, पृ० ११५


व्यञ्जना
शाब्दी
आर्थी
अभिधामूला
लक्षणामूला
वस्तु-व्यङ्ग्या
अलङ्कार-व्यङ्ग्या
अर्थान्तरसङ्क्रमितवाच्या
अत्यन्ततिरस्कृतवाच्या
व्यञ्जकार्थवैचित्र्येण व्यञ्जनाभेदाः
व्यङ्ग्यार्थवैचित्र्येण व्यञ्जनाभेदाः
(१)
वक्तृवैशिष्ट्यप्रयुक्ता
(१) वाच्यसम्भवा
(२) लक्ष्यसम्भवा
(३) व्यङ्ग्यसम्भवा
(१) वस्तुव्यङ्ग्या
(२) अलङ्कारव्यङ्ग्या
(३) रसव्यङ्ग्या
(२)
बोद्धव्यवैशिष्ट्यप्रयुक्ता
(४) वाच्यसम्भवा
(५) लक्ष्यसम्भवा
(६) व्यङ्ग्यसम्भवा
(३)
काकुवैशिष्ट्यप्रयुक्ता
(७) वाच्यसम्भवा
(८) लक्ष्यसम्भवा
(९) व्यङ्ग्यसम्भवा
(४)
वाक्यवैशिष्ट्यप्रयुक्ता
(१०) वाच्यसम्भवा
(११) लक्ष्यसम्भवा
(१२) व्यङ्ग्यसम्भवा
(५)
वाच्यवैशिष्ट्यप्रयुक्ता
(१३) वाच्यसम्भवा
(१४) लक्ष्यसम्भवा
(१५) व्यङ्ग्यसम्भवा
(६)
प्रस्ताववैशिष्ट्यप्रयुक्ता
(१६) वाच्यसम्भवा
(१७) लक्ष्यसम्भवा
(१८) व्यङ्ग्यसम्भवा
(७)
अन्यसन्निधिवैशिष्ट्यप्रयुक्ता
(१९) वाच्यसम्भवा
(२०) लक्ष्यसम्भवा
(२१) व्यङ्ग्यसम्भवा

| (८) देशवैशिष्ट्यप्रयुक्ता | (९) कालवैशिष्ट्यप्रयुक्ता | (१०) चेष्टावैशिष्ट्यप्रयुक्ता |
|---|---|---|
| (२२) वाच्यसम्भवा | (२५) वाच्यसम्भवा | (२८) वाच्यसम्भवा |
| (२३) लक्ष्यसम्भवा | (२६) लक्ष्यसम्भवा | (२९) लक्ष्यसम्भवा |
| (२४) व्यङ्ग्यसम्भवा | (२७) व्यङ्ग्यसम्भवा | (३०) व्यङ्ग्यसम्भवा |

——:०:——

## सप्तमोऽध्यायः

# व्यञ्जनाविषये मीमांसकमतपरीक्षा

काव्ये सहृदयानुभवसिद्धं ललनालावण्यरमणीयं ध्वन्यमानमर्थमवगमयितुं शास्त्रसिद्धाभिधैव प्रभवतीति मीमांसका महता संरम्भेणातिष्ठन्ते। इयं तेषां मतसरणिर्ध्वनिवादिभिराचार्यैर्ध्वन्यालोकलोचनकाव्यप्रकाशादिषु ध्वनिप्रस्थानसंस्थापकेष्वाकरभूतेषु ग्रन्थेषु पूर्वपक्षरूपेणोपनिबद्धा[1]। अत्र तावत्सर्वप्रथमं भाट्टमतोपजीविनामभिहितान्वयवादिनां दर्शनमुपस्थापयामः।

### (१) अभिहितान्वयवादिनां भाट्टमीमांसकानां मतम्, तत्खण्डनञ्च

पदार्थाः प्रथममभिधयाऽभिधीयन्ते। पश्चाच्च ते परस्परमन्विता भूत्वा विशिष्टरूपं वाक्यार्थमधिगमयन्तीत्याकारको भाट्टानामभिहितान्वयवादः शाबरभाष्यस्याधस्तनां पङ्क्तिमुपजीव्य प्रवर्त्तते—

**अमूनि पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीं पदार्था अभिहिताः सन्तो वाक्यार्थमवबोधयन्ति[2]।**

पार्थसारथिमिश्रवाचस्पतिमिश्रादिभिराचार्यैर्न्यायरत्नमालातत्त्वबिन्द्वादिषु परमप्रौढेषु ग्रन्थेषु भाट्टानां मतमिदं सविस्तरं प्रपञ्चितम्[3]।

भाट्टानां मते प्रथममभिधया घटपटादीनां शब्दानां घटत्वपटत्वरूपाः सामान्या अनन्विता अर्था अभिधीयन्ते। पश्चाच्च आकाङ्क्षासत्तियोग्यता-

---

१. (क) ध्वन्यालोकः, पृ० ४१३-४९४ (चौखंभासंस्क०)
   (ख) तत्रैव, ध्वन्यालोकलोचनटीका, पृ० ५५-६७
   (ग) काव्यप्रकाशः, पञ्चम उल्लासः, पृ०२१९-२३
   (घ) साहित्यदर्पणः, पञ्चमः परिच्छेदः, पृ० १५६

२. जैमिनिः, पूर्वमीमांसादर्शनम्, शाबरभाष्यम् १, १, २५९

३. रामस्वामी, पार्थसारथिमिश्र-न्यायरत्नमाला, पृ०९०

महिम्ना[1] सामान्यानामर्थानां विशिष्टे प्रातिस्विकेऽर्थे पर्यवसानम् । तेन च वाक्यार्थधीः समुदेति । यथोक्तं वाचस्पतिमिश्रमहोदयैः स्वकीये तत्त्वबिन्दौ—

**तथा च तेऽर्थाः क्रियादयः स्वसामर्थ्येन स्वरूपमात्रेण पदैरभिहिता विना कारकादिभिरपर्यवस्यन्तस्तदाकांक्षायोग्यतासत्तिसहकारिणो वाक्यार्थधियमादधतीति युक्तम्[2] ।**

अयमाशयः। रामो ग्रामं गच्छतीत्यत्र रामकर्तृकग्रामकर्मकगमनानुकूलो व्यापार इति यश्शाब्दबोधो भवति, तत्र शब्दस्य केनापि व्यापारेण भाव्यम्। तत्राभिधया रामत्वादीनां सामान्यानामेवार्थानां बोधो भवति। परं नैतावता वाक्यार्थधीसमुल्लासः। अतः रामशब्दस्य रामोऽर्थः ग्रामशब्दस्य ग्रामोऽर्थः, अम्प्रत्ययस्य च कर्मता। रामकर्तृकग्रामकर्मकगमनानुकूलो व्यापार इति वृत्तिरूपोऽन्वितोऽर्थस्तु न कस्यापि। अतोऽपदार्थोऽपि वृत्तिरूपोऽर्थ आकांक्षासन्निधियोग्यतावशादभिधाभिन्नया लक्षणाया शब्दवृत्त्या भासते[3]। एवं सति पदान्तरार्थैर्विशेषणभूतैर्यो विशिष्टोऽर्थः प्रत्याय्यते, स एव हि नाम सर्वेषां पदानां वाक्यार्थः।

तौतिकानां भाट्टानां मते पदस्य शक्तिः स्वभावतो जातौ। जातेरदृश्यत्वाद्व्यवहारेऽनुपपन्नत्वाच्च लक्षणया व्यक्तिर्गृह्यते। तथा सति गोशब्दाद्यथा व्यक्तेर्भानं लक्षणासमुल्लास्यम्, तथैव लक्षणयैवासंसृष्टानामर्थानां

---

१. (क) आकाङ्क्षा—'वाक्यसमयग्राहिकाऽऽकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा।'

(ख) आसत्तिः—'प्रकृतान्वयबोधानुकूलपदाव्यवधानमासत्तिः। गिरिरग्निमानित्यासन्नम्। अनासन्नञ्च गिरिर्भुक्तमग्निमान् देवदत्तेनेति।'

(ग) योग्यता—'योग्यता परस्परान्वय-प्रयोजकधर्मवत्त्वम्। तेन पयसा सिञ्चतीति वाक्यं योग्यम्। वह्निना सिञ्चतीति वाक्यमयोग्यम्। वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात्।'

पण्डितसदाशिवः, नागेशभट्ट—परमलघुमञ्जूषा, पृ० ३३-३८

२. शास्त्री रामास्वामी, वाचस्पतिमिश्रः-तत्त्वबिन्दुः, पृ० ९९

३. 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः'

—श्लोकवार्त्तिकस्य वाक्याधिकरणे, २२९ तमः श्लोकः

विशिष्टेऽर्थेऽन्वयनिर्वाहाद्वाक्यार्थधीः समुदेति । अतोऽन्वयसाधिका वृत्तिर्लक्षरणा भाट्टानां शास्त्रे, न तु तात्पर्यनाम्नी वृत्तिः । परं मम्मटप्रमुखैरालङ्कारिकैरभिहितान्वयवादनिरूपरणप्रसङ्गे संसृष्टानामर्थानामन्वयसाधिका वाक्यार्थधीजननी शक्तिस्तात्पर्यवृत्तीतिनाम्ना प्रोद्घोषिता, लक्षरणा तु सर्वथा निरवकाशीकृता[1] । परं पूर्वोक्तकुमारिलभट्टवाक्यजातपर्यालोचनेन आलङ्कारिकाणां सर्वमिदं वचनं विरुद्धं प्रतिभाति । यतो हि मीमांसाशास्त्रे भाट्टैर्मीमांसकैः स्वसिद्धान्तं स्फुटीकुर्वद्भिः न काचन तात्पर्यनाम्नी वृत्तिर्व्यतिषक्तानां पदार्थानां संसर्गसाधनक्षमा नामग्राहं समुट्टङ्किता । परं विचक्षरणैर्विपश्चिद्भिरभिनवगुप्तमम्मटप्रभृतिभिरन्यैरपि विश्वनाथादिभिर्गड्डरिकाप्रवाहपतितैर्गतानुगतिकतया अनन्वितानामर्थानां संसर्गबोधिका तात्पर्यवृत्तिरिति भाट्टानां मतमित्यभिहितान्वयवादनिरूपरणप्रसङ्गे व्याहृतम् । एवमालङ्कारिकाणां संसर्गसाधिका या तात्पर्यवृत्तिरसौ भाट्टानां मते लक्षरणा ।

वस्तुतस्तु या तात्पर्यशक्तिर्विश्वनाथप्रभृतिभिरभिहितान्वयवादविवेचनसमये प्रोक्ता तस्याः प्रोद्घोषकस्तु तार्किको जयन्तभट्टः । यथोक्तं तेन न्यायमञ्जर्याम्—

**अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता ।**
**तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः ॥**[2]

जयन्तभट्टाचार्येण कथं वाक्यार्थधीर्भवतीति गहनं विमृशता अभिहितान्वयवादान्विताभिधानाभिधं मीमांसकमतद्वयं सूक्ष्मेक्षिकया निरीक्षमाणेन संसर्गावगमार्थं तात्पर्यवृत्तिरेवैषणीयेति सिद्धान्तितम् ।[3] परतश्च ध्वनिमार्गा-

---

१. (क) ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते
ध्वन्यालोकलोचनम्, पृ० ५६

(ख) आकांक्षायोग्यतासन्निधिवशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् ।
करमरकरः, र० दा०, मम्मट-काव्यप्रकाशः, पृ० २६

(ग) अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिरपि संसर्गमात्रपरिक्षीणा न व्यङ्ग्यबोधिनी ।
शास्त्री शालग्रामः, साहित्यदर्पणः, पृ० १५७

२. सूर्यनारायणः, जयन्तभट्ट-न्यायमञ्जरी, पृ० ३७२

३. तत्रैव, पृ० ३७०

ध्वनीनैराचार्यैरियं तात्पर्यवृत्तिरपि व्यङ्ग्यमर्थं द्योतयितुं न प्रभवतीति तस्या अपलापः कृतः। एवं ध्वनिवादिभिराचार्यैरभिहितान्वयवादनिरूपणप्रसङ्गे तार्किकानां तात्पर्यवृत्तिर्भाट्टमतेऽनुप्रवेशिता। इत्थं जयन्तभट्टादीनां तार्किकानामेवायं प्रभावो यन्मम्मटभट्टप्रभृतिभिरालङ्कारिकैर्भाट्टानामभिहितान्वयवादनिरूपणप्रसङ्गे संसर्गबोधिका तात्पर्यनाम्नी वृत्तिः प्रतिपादिता[1]।

भाट्टा मीमांसका ध्वनिवादिनां तुरीयां वृत्तिं प्रत्यवतिष्ठमाना मरहट्टवधूकुचाभः प्रतीयमानोऽसावर्थः शास्त्रसिद्धयाभिधयैव प्रतिपाद्य इत्यभिदधति। अभिनवगुप्तमम्मटप्रभृतिभिर्ध्वनिप्रस्थानपरमसमर्थकैराचार्यैर्युक्तिभिस्तौतिकं मतमिदं क्षुण्णम्। परमशोभाशालिनः प्रतीयमानार्थस्य सर्वथा व्यक्तिवेद्यत्वं सिद्धान्तितम्। तथाहि—

**भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

अस्मिन् पद्ये विधिरूपवाच्यार्थोत्तरकालिको ध्वन्यमानो निषेधरूपोऽर्थो नाभिधया द्योत्यस्तस्या विधिरूपिणमर्थं प्रत्याय्योपरमात्। तद्यथा— प्रथमायां कक्ष्यायामभिधायाः प्रसरणाद् विधिरूपिणोऽर्थस्यैव प्रतीतिः, भ्रम धार्मिकेत्यादीनां पदानां तत्तदर्थेष्वेव सङ्केतात्। अनन्तरं वक्तृप्रतिपत्तृप्रतिभानुप्राणितोऽसावर्थो निषेधरूपो व्यङ्ग्यो वाच्यार्थकक्ष्यातिक्रान्तोऽभिधाभिन्नया एव शब्दवृत्त्या प्रतिपाद्यः। केवलमभिधा युगपद्विधिनिषेधरूपौ विरुद्धावर्थौ प्रत्याययितुं न प्रभवति।

ननु विध्यर्थं भ्रमेत्यभिधायाभिधा निषेधरूपिणमर्थमवगमयितुं पुनरुज्जीविता भवतीति विधिनिषेधरूपिणोरर्थयोः क्रमेण प्रतीतिरभिधया, अतः प्रतीयमानोऽपरोऽर्थो ध्वनिनाम्ना यो मूर्धाभिषिक्तः कृतस्तस्य प्रतीतिर्द्वितीययाऽभिधया क्रमेण भवतीति निर्निबन्धन एव व्यञ्जनां प्रत्याग्रह इति चेन्न, पदार्थानां सामान्यमर्थमभिधाय क्षीणसामर्थ्याया अभिधाया अर्थान्तरप्रत्यायनेऽशक्तत्वात्। अयमाशयः। **विशेष्यं नाभिधा गच्छेत्, क्षीणशक्तिर्विशेषणे** इति नयमनुरुध्य पदार्थरूपं सामान्यमर्थमभिधायोपरताभिधा यदा विशेष्यमन्वितं संसर्गमभिधातुं तावन्न प्रभवति, तदा वाक्यार्थबोधोत्तरकालिन्यां व्यङ्ग्यार्थप्रतीतावभिधा

1. Sharma, Gouri Nath, The Philosophy of Word and Meaning, p. 220

प्रभविष्यतीति सर्वथाऽशक्यम्[1]। अतो न क्रमेण प्रतीतिरभिधया वाच्यार्थव्यङ्ग्यार्थयोः। वाच्यार्थकक्ष्यानवगाहिनः प्रतिषेधरूपस्य ध्वन्यमानस्यार्थस्य द्योतनार्थं शब्दस्याभिधाभिन्नो व्यापारो व्यञ्जनोपाह्व एषणीय एव भवति।

ननु मा भूदसावर्थो व्यङ्ग्योऽभिधाबोध्यस्तस्यास्तपस्विन्याः पदार्थप्रत्यायने एवोपक्षयात्, परमपर्यवसिता तात्पर्यशक्तिस्तत्र पदं निदधात्येवेति निषेधरूपिणो व्यङ्ग्यार्थस्य तात्पर्यवृत्तिवेद्यत्वं तावत् प्रतिपत्तव्यमेव। यतो हि निषेधरूपिणोऽर्थस्यैव विश्रान्तिधामत्वात् पुंश्चल्याश्च धार्मिकसञ्चारनिरुद्धनिष्कण्टकभ्रमणायास्तस्मिन्नेव निषेधरूपिण्यर्थे तात्पर्याद् तस्यैव वाक्यार्थत्वमुपपन्नं भवतीति चेन्न, संसर्गबोधमात्रविरतायास्तात्पर्यशक्तेस्तुरीयकक्ष्यावगाहिनो व्यङ्ग्यार्थस्य प्रत्यायनेऽसमर्थत्वात्। अयमाशयः। शब्दानां सङ्केतितार्थबोधको व्यापारोऽभिधा प्रथमकक्ष्याक्रान्तस्ततो विशेषांशरूपोऽन्वयप्रत्यायको व्यापारस्तात्पर्यवृत्तिर्द्वितीयकक्ष्यान्तर्गतः। तथा सति सामान्यानर्थानभिधायाभिधा क्षीणा भवति, तेषां मिथः संसर्गञ्च प्रत्याय्य तात्पर्यवृत्तिर्विरमति। अतस्तात्पर्यवृत्त्या अपि द्वितीयकक्ष्यायामेव विश्रान्तिः।[2] अनन्तरं सामान्यविशेषकक्ष्याद्वयातिक्रान्तस्तुरीयकक्ष्यानिविष्टोऽसावर्थो ध्वन्यमानोऽभिधातात्पर्यवृत्तिद्वयातिरिक्तया व्यञ्जनानाम्न्या वृत्त्यैव द्योत्यः। ननु तात्पर्यशक्तिरनुपरता मुख्यार्थबाधादिकं निमित्तमवलम्ब्य प्रवर्तमानाया लक्षणायाः साह्येन निषेधरूपिणमर्थमवगमयिष्यति। तद्यथा—'भ्रम धार्मिक' इत्यादिपूर्वोक्ते पद्ये 'भ्रम' इति पुंश्चल्या वचनं दृप्तसिंहपदेन सह नान्वयं लभते, दृप्तसिंहस्थितौ भीरुधार्मिकस्य भ्रमणानुपपन्नत्वात्। अत एव पदार्थानामनन्वये मुख्यार्थबाधः स्फुट एव। दृप्तसिंहसद्भावे भीरुभ्रमणविधिवैयर्थ्यापत्तेः। अतोऽन्वयोपपत्त्यर्थं विरोधरूपसम्बन्धं निमित्तीकृत्य लक्षणात्र प्रसरिष्यति। तदनुप्राणिता तात्पर्यवृत्तिर्निषेधरूपिणमर्थं शब्दशक्तिमहिम्नैव

---

१. यत्र स्वपदार्थमात्राभिधानाय जागरूकव्यापाराण्यपि पदानि स्वैः स्वैः पदार्थैरारब्धमपि न वाक्यार्थमभिधातुमीशते, तत्रार्थान्तरभूतो ध्वनिरभिधामवगाहिष्यत इति का नाम वः प्रत्याशा।

क० प्रा०, त्रिवेदिसंपादिता, विद्याधरकृता एकावली, पृ० ३८

२. समयापेक्षयार्थावगमनशक्तिर्ह्यभिधा। समयश्च तावत्येव न विशेषांशे, आनन्त्याद् व्यभिचाराच्चैकस्य। ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते, 'सामान्यान्यथासिद्धेर्विशेषं गमयन्ति हि' न्यायात्। ततश्च द्वितीयकक्ष्यायां भ्रमेति विध्यतिरिक्तं न किञ्चित् प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात्।

ध्वन्यालोकलोचनम्, पृ० ५६ (चौ० सं०)

बोधयति, अन्ततस्तात्पर्यलक्षणावृत्तिद्वयस्याभिधामवलम्ब्यैवोत्थानात्, अभिधा-पुच्छभूता लक्षणेति प्रामाणिकवचनाच्च। तस्मादभिधेयत्वमेव प्रतीयमानार्थ-स्योपपन्नं भवति न व्यङ्ग्यत्वमिति चेन्न, भ्रम धार्मिक इत्यादौ पदानां परस्परं सान्वयत्वेऽनन्वयप्रभवाया लक्षणाया अप्रवृत्तेस्तत्साह्यं विना च तात्पर्यवृत्ते-र्निषेधरूपार्थप्रत्यायनेऽसमर्थत्वात्।

अयमाशयः। गङ्गायां घोषः, सिंहो वटुरित्यत्र च काष्ठमृन्निर्मितस्य आभीरपल्लीरूपिणो घोषस्य प्रवहति जलप्रवाहे आधाराधेयसम्बन्धेनानवस्थानाद् वटोश्च सिंहत्वाभावात् पदार्थानां परस्परमन्वये चिकीर्षिते यथा मुख्यार्थबाधो भवति, न तथा धार्मिकभ्रमणान्तरायभूते शुनि सिंहेन पञ्चत्वं प्रापिते सति भ्रमणनिरोधककारणाभावाद् भीरोर्धार्मिकस्य निश्शङ्कं वने भ्रमणमिति प्रतीतिपथमवतीर्णो विधिरूपोऽर्थो दृप्तसिंहादिपदार्थैः परस्परमन्वयमलभमानो बाधितो भवति। दृप्तसिंहवति गोदानदीगहनकच्छे भ्रमणं तव धार्मिकस्य निष्कण्टकं जातमिति नान्वयस्यात्र काचित् क्षतिः। अत एवान्वयानुपपत्तिनिरा-करणार्थं नात्र लक्षणावतारसम्भावना। प्रत्युत अभिधातात्पर्यवृत्तिद्वयलभ्यो विधिरूपोऽर्थो यदा स्वात्मनि विश्रान्तिं भजते, तदा वक्तृबोद्धव्यादिसहकारि-महिम्ना विशदीभूतमनोमुकुराणां सहृदयानां हृदयधाम्नि निषेधात्मा प्रतीय-मानोऽर्थः परिस्फुरति। असावर्थस्तुरीयकक्ष्याधिरूढोऽभिधातात्पर्यलक्षणाव्यति-रिक्तया व्यञ्जनाह्वया वृत्त्यैव प्रत्याय्यः। एवं भाट्टमतानुयायिभिरभिहितान्वय-वादिभिर्व्यापारोऽसौ ध्वननात्माभ्युपगन्तव्य एव।[1]

### (२) अन्विताभिधानवादिनां प्राभाकरमीमांसकानां मतं, तत्खण्डनञ्च

अन्विताभिधानवादिनः प्राभाकरा अन्वितानां पदार्थानामभिधानमन्वितैः पदैरिति वदन्तोऽन्वयरूपे वाक्यार्थेऽपि पदानामभिधैव शक्तिरित्यभिदधति। तेषां मते पदार्थ एव वाक्यार्थः। अतः संसर्गबोधार्थमन्वयसाधिकाया अभिधा-भिन्नाया अतिरिक्तायास्तात्पर्यवृत्तेः परिकल्पनं निर्निबन्धनमेव। व्यवहारेणान्वि-तस्यैवार्थस्योपस्थितेस्तत्रैव च शक्तिग्रहात्। अयमाशयोऽत्रानुसन्धेयोऽन्वि-ताभिधानवादिनः। लोके प्रवृत्तिनिवृत्तिकारि वाक्यमेव। गामानयेत्युत्तमवृद्धा-

---

१. विशेषरूपं वाक्यार्थमपदार्थमपीच्छता।
व्यक्तिरिष्टाभिधातोऽन्याभिहितान्वयवादिना॥—उद्धरणम्
—क० प्रा० त्रिवेदी, प्रतापरुद्रयशोभूषणम्, कुमारस्वामिकृता रत्ना-पणटीका, पृ० ५७

देशाद् मध्यमवृद्धेन सास्नादिमतो गोपदार्थस्यानयनं निर्वर्ण्य तत्तत्पदानां तत्तदर्थे-ष्वनवगतपूर्वसङ्केतोऽव्युत्पन्नो बाल आदौ व्यवहारादेव तेषां तेषां पदानां तांस्तानर्थान् बोधते । यद्यपि—

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥**[1]

इत्यभियुक्तोक्तेः शक्तिग्रहस्याष्टौ निमित्तानि । परं व्यवहार एव मुख्यं कारणं शक्तिग्रहे । व्यवहारे चान्वितानामेवार्थानामुपस्थितिः, तेषामेव प्रवृत्तिनिवृत्ति-प्रयोजकत्वात् । एवमुत्तममध्यमवृद्धौ शब्दमुखेन परस्परं व्यवहरन्तौ अवबुध्य व्याकरणकोशाव्युत्पन्नो बालस्तत्तत्पदानां तत्तदर्थानन्वितानेव गोचरीकरोति । अन्विता एव पदार्था गोत्वाश्वत्वादयो व्युत्पित्सोर्बालस्य बोधविषया भवन्ति । अतोऽन्वितेऽर्थे एव शक्तिग्रहः ।

व्यवहारतो यः शक्तिग्रहो भवति तद्घटकस्य त्रिप्रमाणकस्य सम्बन्धस्य व्याख्या साम्प्रतं प्रस्तूयते ।

**गामानय, अश्वञ्च नय** इत्युत्तमवृद्धो मध्यमवृद्धमादिशति । अत्रोत्तमवृद्ध-मुखोदीरितानां गकारपकारादीनां ध्वनीनामाकर्णनं बालकस्य श्रावणं प्रत्यक्षम् । सास्नालाङ्गूलवतो गवादिपदार्थस्यानयनं चाक्षुषं प्रत्यक्षम् । एवमव्युत्पन्नो बालः प्रथममुत्तमवृद्धमुखोच्चरितान् गकारमकारादीन् ध्वनीन् शृणोति अनन्तरञ्च मध्यमवृद्धोपनीतं सास्नालाङ्गूलवन्तं गोपदार्थं चक्षुर्भ्यामवलोकयति । पश्चा-च्चोत्तमवृद्धमुखोच्चरितगवादिशब्दश्रवणात् मध्यमवृद्धेन सास्नालाङ्गूलवत् वस्त्वानीतम्, अतोऽनेनैवंविधात् पदादेवंविधोऽर्थः अवबुद्ध इति मध्यमवृद्धकृतया गवानयनरूपचेष्टया बालोऽनुमिनोति । अनुमानस्वरूपं तु **अयमेतच्छब्दजन्यै-तदर्थगोचरज्ञानवान्, एतच्छब्दश्रवणानन्तरं एतदर्थगोचरचेष्टावत्वात्** इति । अनन्तरमेषां गवादीनां शब्दानामुच्चारणेनैव गवानयनादिकं तत्तत्कार्यकलापं घटते, अतो गवादयश्शब्दाः कारणं कार्यञ्च गवानयनादिरूपोऽर्थः । तत्तच्छब्द-प्रयोगाभावे तत्त र्थोपस्थितिरसम्भवा । अतो गवादिपदानामर्थाः सास्नालाङ्गूल-विशिष्टगोत्वादयो वाच्याः, गवादयो ध्वनयश्च वाचका इति बालस्य बुद्धि-र्भवति । एवं गामानयेत्यादिवाक्यश्रवणात् गवानयनाद्यर्थज्ञानमेतद्वाक्येनैतदर्थस्य वाच्यवाचकभावसम्बन्धमन्तरेणानुपपन्नमित्यनुपपत्तिरूपया अर्थापत्त्या बालः शब्दार्थयोः परस्परं कार्यकारणसम्बन्धमनन्तरञ्च तयोर्वाच्यवाचकसम्बन्धमव-गच्छति । अनया दिशा व्यवहारेणान्वितैः पदैरन्वितानामेवार्थानामुपस्थित्याम्,

१. शास्त्री, नृसिंहदेवः, न्यायसिद्धान्तमुक्तावलिः, पृ० १००

पदार्थ एव वाक्यार्थः, न त्वपदार्थस्य वाक्यत्वमिति पर्यवसितं भवति[1]।

गवादीनां सामान्योऽर्थो गोत्वरूपोऽन्वितमानयनादिकं विशिष्टमर्थमाक्षिपत्येव। तथा सति सामान्यस्य विशिष्टेऽर्थे पर्यवसानं स्वतः सिद्धम्। **निर्विशेषं न सामान्यं भवेच्छशविषाणवदित्यभियुक्तोक्तेः**। अयमाशयः। यथा वृक्षपदस्य वृक्षत्वरूपे सामान्येऽर्थे आम्रकदम्बाशोकरूपो विशिष्टोऽर्थस्तदन्तर्गत एव वृक्षत्वेनाक्षिप्यते, तथैव अनन्वितानां सामान्यानामर्थानां व्यवहारेऽनुपयोगात्तदन्तर्गतोऽन्वितो वाक्यार्थो विशिष्ट आनयनादिरूपः समुल्लसत्येव। तदित्थं सामान्यस्य विशेषं विनावस्थातुमशक्यत्वात्, पदानां सामान्योऽर्थो विशिष्टेऽन्विते वाक्यार्थे एव पर्यवस्यति। अन्विते अर्थे शक्तिग्रहात् व्यवहारे चान्वितस्यैवार्थस्योपयोगित्वादन्वित एवार्थोऽभिधीयते। अतः पदार्थ एव वाक्यार्थः न तु पदार्थानां वैशिष्ट्यमिति गहनातिगहनमन्विताभिधानवादिनां प्राभाकराणां दर्शनम्।[2]

परं प्राभाकराणामन्वितार्थाभिधानार्हाप्यभिधा तुरीयं व्यङ्ग्यमर्थमवगमयितुं न प्रभवति। तथाहि—**देवदत्तो गामानयति** इत्यत्र गोदेवदत्तादीनां

---

१. (क) पदार्थानेव वाक्यार्थान्मिथः सङ्गतिशालिनः।
आचक्षतेऽभिधीयन्ते पदैस्ते च तथाविधाः॥
—न्यायरत्नमाला, पृ० ९५

(ख) वक्ता वाक्यं प्रयुङ्क्ते च संसृष्टार्थविवक्षया।
तथैव बुध्यते श्रोता तथैव च तटस्थितः॥
—न्यायमञ्जरी, पृ० ३६६

२. (क) प्रयोगपतितानामावापोद्वापाभ्यां शक्तिग्रहणं ततश्च योग्यपदार्थान्तरान्वित एव स्वार्थे शक्तिर्गृह्यते इति संसर्गात्मको वाक्यार्थः शक्तिगोचर एवेत्यन्विताभिधानवादिनः प्राभाकरगुरोर्मतमिति सम्बन्धः।
—भट्टाचार्यः शिवप्रसादः, काव्यप्रकाशः, श्रीधरी टीका, पृ० २०-२१

(ख) एकार्थपदसमूहो वाक्यम् इति वाक्यविदः। यथा शिबिकाया उद्यन्तारः सर्वे शिबिकामुद्यच्छन्ति, यथा ग्रावाण उखां बिभ्रति, तथा सर्वाण्यपि पदानि वाक्यार्थमवबोधयन्ति, न तु एकैकमनन्वितमर्थम्।
—न्यायमञ्जरी, पृ० ३६६

सामान्यानामर्थानामनन्वितानां कर्तृत्वकर्मत्वादिविशिष्टांशेऽन्विते पर्यवसानादभिधाया अत्रैव विश्रान्तिः। अतो गोपदस्य गोव्यक्तिरूपो विशिष्टोऽर्थोऽभिधाया अगोचरः। व्यक्तिरूपिणि विशिष्टेऽर्थे यदि शब्दानां सङ्केतस्तर्ह्यानन्त्यव्यभिचारदोषप्रसङ्गः। एवं पदानां सामान्यस्यार्थस्य कर्तृत्वकर्मत्वरूपेणान्वयादभिधायाः सामर्थ्यं तत्प्रत्यायनपर्यन्तमेव। इत्थं कर्तृत्वकर्मत्वरूपेण परस्परमन्वितं पदानामर्थमभिधायोपक्षीणा प्राभाकराणामभिधा, गोव्यक्तिरूपिणं विशिष्टमर्थं प्रत्याययितुं नैव पारयति। गोव्यक्तिरूपोऽतिविशेषभूतोऽसावर्थो नैव प्रतिपद्यते इति स्वानुभवमनाच्छादयता मतिमता नैवापलपितुं शक्यम्। अस्ति च प्रतीतिस्तर्हि केन व्यापारेण? अभिधायास्तु पदानां कर्तृत्वकर्मत्वरूपिणमन्वितमर्थं प्रत्याय्य विरामः। एवञ्च व्यक्तिरूपातिविशेषभूतोऽर्थो यद्यभिधया न प्रत्याय्यस्तर्हि वाक्यार्थपदवीं दूरमतिक्रान्तस्तुरीयकोटिमधिरूढो ध्वननप्राणः प्रतीयमानोऽर्थः प्राभाकराणामभिधया प्रतिपाद्यते इति का नाम चर्चा।

एवमभिहितान्वयेऽभिधया पदानां सामान्यार्थबोधस्तात्पर्यवृत्त्या च तेषां परस्परमन्वयप्रतीतिः। अन्विताभिधानवादे चाभिधयैव परस्परमन्वितानामर्थानां बोध इति मतद्वयेऽभिधातात्पर्यवृत्त्योरन्वितेऽर्थे एव पर्यवसानम्। तुरीयं वाक्यार्थकक्ष्योल्लङ्घिनं व्यङ्ग्यमर्थं द्योतयितुं कतरस्या अपि न सामर्थ्यम्। अतस्तुरीयस्य तस्यार्थस्य व्यञ्जनया ध्वननमेव युक्तियुक्तम्।[1]

### (३) शरवद्दीर्घदीर्घतरव्यापारवादिनां भट्टलोल्लटादीनां मीमांसकानां मतम्, तत्खण्डनञ्च

शरवदभिधाव्यापारमेव दीर्घदीर्घतरमभिदधतो भट्टलोल्लटादयो मीमांसका अभिधाव्यतिरिक्तं व्यञ्जनोपाह्वं व्यापारं सर्वथा विप्रतिपद्यन्ते। तेषामयमाशयः। यथा बलवता धानुष्केण विमुक्त इषुरेकेनैव व्यापारेण शत्रोः कवचं विदार्य मर्माण्याहत्य प्राणान् हरति, तथैव शब्दोऽपि एकेनैवाभिधाव्यापारेण प्रथमकक्ष्यान्तर्गतपदानां सङ्केतितमर्थं प्रत्याययन् पर्यन्तकक्ष्याविनिविष्टं तुरीयमर्थमप्यभिदधाति। अतोऽभिधयैकेनैव व्यापारेण वाच्यव्यङ्ग्योभयार्थबोधः।

---

१. यत्र सङ्केतनिकेतनीकृतविशिष्टरूपवाक्यार्थाभिधायिनो वाक्यस्य स्ववाच्यानतिरिक्तासङ्केतितातिविशेषभूतपदार्थाभिधानेऽपि न सामर्थ्यं तत्रार्थान्तरभूतः प्रतीयमानः कथमिवावतरिष्यति वाचनीयताम्।

—त्रिवेदी क० प्रा०, विद्याधरकृता एकावली, पृ०४१

अयं दीर्घदीर्घतरव्यापारवादी मीमांसकः प्रष्टव्यो यत् किं तस्य दीर्घदीर्घतरोऽयं व्यापार एकोऽनेको वा ?

न तावदेकः। वाच्यलक्ष्यव्यङ्ग्यानामर्थानां स्वरूपतो विषयतश्च भेदात्। सर्वानुभवसिद्धोऽयं भेदो न केनापि मतिमता प्रत्याख्यातुं शक्यते। विषयमुखेनैव व्यापारः स्वरूपलाभं लभते। विषयस्यैवान्ततः समग्रभरसहिष्णुत्वं प्रामाणिकैः प्रोक्तम्। इत्थं स्थिते वाच्येऽर्थे सङ्केतकरणादभिधाया विषयो वाच्यार्थ एव[1]। वाच्यार्थात् स्वरूपतो भिन्नो व्यङ्ग्यार्थोऽसङ्केतितत्वान्नाभिधाया विषयतामुपयाति। तमवगमयितुमभिधाभिन्न एव व्यापार उररीकरणीयो भवति। नह्यभिधा सङ्केतितार्थातिरिक्तेऽर्थे प्रगल्भते। व्यङ्ग्यार्थस्य तदविषयत्वात्। एवं वाच्यव्यङ्ग्यार्थयोर्यदि स्वरूपभेदः स्वीक्रियते, तदा तत्प्रत्यायकस्य शब्दव्यापारस्यापि भेदोऽवश्यमभ्युपेयः। यदि वाच्यव्यङ्ग्यार्थयोः स्वरूपकृतो भेदो न स्यात्तदा तद्बोधकस्य व्यापारस्यैक्यमपि युज्येत। यतो वाच्यव्यङ्ग्यार्थयोः स्वरूपकृतो भेदोऽनपह्नवनीयस्तत एव तयोर्बोधकस्य व्यापारस्याप्यनेकत्वमुपपद्यते। इत्थं व्यापारस्यैक्यपक्षः प्रत्युक्तो भवति।

न चायं दीर्घदीर्घतरो व्यापारोऽनेकः। यदि व्यापारस्यानेकत्वमङ्गीक्रियते, तथापि तत्रैव स्थितो वेतालः। नहि विषयसहकारिभेदाद्भिन्नो व्यापारः कदापि सजातीयो भवति। समयसहकृतोऽभिधाव्यापारो वाच्यार्थमभिदधाति, परं वक्तृप्रतिपत्त्यादिवैशिष्ट्यसहकृतो व्यञ्जनाव्यापारो व्यङ्ग्यमर्थं द्योतयति। एवमभिधा यदि व्यङ्ग्यार्थप्रत्यायनार्थमुपादीयते, तदा सहकारिसामग्रीभेदाद् द्वयोरभिधयोर्भेदः स्पष्ट एव। प्रथमाभिधा समयसहकृता सङ्केतितार्थमेव प्रतिपादयति। द्वितीयाभिधा वक्तृप्रतिपत्तृसहकृता व्यङ्ग्यमर्थं द्योतयति। एवं व्यापारानैक्यपक्षेऽपि प्रथमाऽभिधातो भिन्नाऽन्याभिधाश्रयणीया भवति। तेन च किं लब्धम्? शब्दच्छलेन व्यापारान्तरमभ्युपेयमेव। यदि वाच्यार्थाद् विषयतः स्वरूपतश्च भिन्नं व्यङ्ग्यमर्थं प्रत्याययितुं व्यापारान्तरमन्वेष्टव्यमेव, तर्ह्यसौ व्यापारो ध्वनिवादिभिर्व्यवस्थापितो व्यञ्जनाह्वः कथं नाङ्गीक्रियते। नाम्नि खल्वेवायं विवादः। वस्तुतस्तु व्यङ्ग्यमर्थमभिव्यक्तुमसजातीयः कश्चिद् व्यापारः स्वीकृत एव भवति।

---

१. किञ्चायं विषमः शरदृष्टान्तोपन्यासः। नहि यथा सायकः स्वभावत एव छेद्यभेद्याद्यर्थविषयमेकयैव वृत्त्या तत्तत्कार्यं करोति तथा शब्दः। स हि सङ्केतसापेक्ष एव स्वव्यापारमारभते, न स्वभावत एवेति यत्रैवास्य सङ्केतस्तत्रैव व्याप्रियते।

—महिमभट्टः, व्यक्तिविवेकः, पृ० १२३ (चौ० सं०)

व्यापारस्यासजातीयत्वे चाभ्युपगतेऽभिधया व्यञ्जनाखलीकरणप्रयास आहोपुरुषिकामेव सूचयति। तेन च किं भवतां सिद्धं किञ्च ध्वनिवादिनां नष्टम्। भङ्ग्यन्तरेण व्यापारान्तरे स्वीकृते केवलं व्यञ्जनेति व्यपदेशं प्रति मात्सर्यमेव प्रकटितं भवति। एवञ्च व्यापारस्यानैक्यपक्षेऽपि शरवद्दीर्घदीर्घतरव्यापारवादिना अभिधाभिन्नोऽन्यो व्यापार आश्रयणीय एव भवति। असौ व्यापारोऽभिधेति व्यपदेश्यो व्यञ्जनेति वान्यदेतत्[1]।

किञ्च शब्दश्रवणानन्तरं यावानर्थः प्रतीतिपथमुपयाति, तावानसौ यद्येकेनैव शरवद्दीर्घदीर्घतरेण व्यापारेण निर्वर्त्यस्तदा **ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणी जाता** इत्यादिभ्यो वाक्येभ्योऽवसीयमाना हर्षशोकादयो भावा अपि कथं न वाच्या अभ्युपगन्तव्याः। परं हर्षशोकादीनां भावानामभिधेयत्वं प्रामाणिकाग्रेसरमानिना मीमांसकेनापि विप्रतिपत्तव्यमेव।

अपि च दीर्घदीर्घतरव्यापारेणैव सर्वेष्वर्थेषु निर्वर्त्येषु किमिति लक्षणाऽऽश्रयणीया, लक्ष्यार्थस्यापि दीर्घदीर्घतरव्यापारनिर्वाह्यत्वात्। परमिष्यते लक्षणा मीमांसकेनापि, तदुच्छेदे **गौरनुबन्ध्यः** इत्यत्र जातिरूपिणोऽर्थस्यानुपपत्तौ गोरालम्भनरूपं वेदवचनं दुष्येत्। नहि भूतानां भविष्याणां वर्तमानानां गवां हननं सम्भाव्यते। अतो व्यक्तिरूपिणोऽर्थस्य प्रतीत्यर्थमभिधातिरिक्तो लक्षणाख्यो व्यापारोऽभ्युपगतो भवति। तेन च व्यापारस्य शरवद्दीर्घतापहस्तिता भवति।

अन्यच्च **श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्**[2] इति यद्भगवता जैमिनिना व्याहृतम्, तद्व्यापारभेदेऽभ्युपगते एव सुस्थितं भवति। अयमाशयः। मीमांसादर्शने श्रुतिलिङ्गादीनि षड् विनियोजकानि प्रोक्तानि। तत्र विलम्बेनार्थप्रत्यायकत्वात्पूर्वापेक्षया परस्य दुर्बलत्वम्। यदि श्रुत्या कस्यचिद् यागकर्मणो विनियोगः क्रियते, तदाऽविलम्बेनार्थप्रतीतिर्भवति। तत्र लिङ्गादीनि विनियोजकानि नेषणीयानि, यतो हि श्रुति-

---

१. योऽप्यन्विताभिधानवादी यत्परः शब्दः स शब्दार्थः इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति, तस्य यदि दीर्घो व्यापारस्तदेकोऽसाविति कुतः? भिन्नविषयत्वात्। अथानेकोऽसौ तद्विषयसहकारिभेदादसजातीय एव युक्तः। सजातीये च कार्ये विरम्य व्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिर्निषिद्धः। असजातीये चास्मन्नय एव।

ध्वन्यालोकलोचनटीका, पृ० ६४ (चौ० सं०)

२. मीमांसासूत्रम्, ३, ३, १४

वचनं लिङ्गादीनामपेक्षयाऽविलम्बेनार्थबोधकम् । यथा **व्रीहीन् प्रोक्षति, व्रीहिभिर्यजेत** इत्यादौ श्रुतिः साक्षात् विनियोजिका । अत एव लिङ्गादीनामन्येषां विनियोजकानां नापेक्षा । परं यत्र श्रुत्या विधानं न क्रियते तत्र लिङ्गाभावे वाक्यादिकस्यापेक्षा । यत्र च श्रुतिलिङ्गादीनामनेकेषां विनियोजकत्वेनावस्थानं तत्र परापेक्षया पूर्वस्य ग्रहणमविलम्बेनार्थप्रत्यायकत्वात् । एवं जैमिनिसूत्रेऽर्थविप्रकर्षात् श्रुत्यपेक्षया लिङ्गस्य लिङ्गापेक्षया च वाक्यस्य दौर्बल्यम् । श्रुतिस्तु निरपेक्षत्वात्सर्वतो बलवती ।

यदि शरवद्दीर्घदीर्घतर एक एव व्यापारस्तदा जैमिनिसूत्रेऽर्थविप्रकर्षात् पूर्वापेक्षया परस्य दौर्बल्यमिति सर्वमसङ्गतं भवति । यतो हि व्यापारविरामाभावे श्रुत्यादिभिः सर्वैर्विनियोजकैरविलम्बेनैवार्थप्रतीतिः स्यात् । तेन पूर्वापेक्षया परस्य दौर्बल्यं कथमुपपद्येत ? यद्यर्थविप्रकर्षात् परापेक्षया पूर्वस्य बलवत्त्वेष्टा तदा व्यापारस्य विरम्य प्रसरणमवश्यमभ्युपेयम् । तेनैव जैमिनिवचनसङ्गतिर्भवति । नहि व्यापारैक्यपक्षेऽर्थविप्रकर्षः सम्भवति, तस्य व्यापारस्य युगपत्प्रसरणात् विश्रामाभावाच्च । तेन च श्रुतिलिङ्गवाक्यादीनां तुल्य एव योगक्षेमः । यदि जैमिनिसूत्रसङ्गत्यर्थं व्यापारस्य विरम्य प्रसरणं स्वीक्रियते, तर्हि शरवद्दीर्घदीर्घता व्यापारस्य स्वयमेवापहस्तिता भवति । व्यापारभेदे चाभ्युपगते किमपराद्धं व्यञ्जनया[1] ।

एवं शरवद्दीर्घदीर्घतरव्यापारवादिना मीमांसकेन स्वशास्त्रवचनसङ्गत्यर्थं व्यापारैक्यपक्षं विहाय व्यञ्जना स्वीकरणीया ।

### (४) मीमांसकैकदेशीयानां मतं, तत्खण्डनञ्च

अन्ये मीमांसकैकदेशीयाः **नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते** इत्युदाहरन्तो व्यञ्जनां विप्रतिपद्यन्ते । तेषामयमाशयः । लोके घटादयः पदार्था नैमित्तिकाः सन्तो मृत्कुम्भकारादीनि कानिचिन्निमित्तान्यपेक्षन्त एव । अनया दिशा शब्दश्रवणानन्तरमवसीयमानः प्रतीयमानार्थोऽपि किञ्चिन्निमित्तमपेक्षत एव, निर्निमित्तस्य कस्यापि कार्यस्यासम्भवत्वात् । अतो व्यङ्ग्यार्थप्रतीतिरपि घटपटवन्नैमित्तिकी । **भ्रम धार्मिक** इत्यादिपद्ये निषेधरूपिणो व्यङ्ग्यार्थस्यावगतिर्न शब्दातिरिक्तेन निमित्तान्तरेण सम्भवति । अतः शब्द एवात्र निमित्तम् । शब्दो

---

१. निमित्तनैमित्तिकभावश्चावश्यमाश्रयणीयः, अन्यथा गौणलाक्षणिकयोर्मुख्याद्भेदः, 'श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यम्,' इत्यादिप्रक्रियाविघातः, निमित्ततावैचित्र्येणैवास्याः समर्थितत्वात् । निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया ।

ध्वन्यालोकलोचनम्, पृ० ६७ (चौ० सं०)

बोधको बोध्यश्च व्यङ्ग्यार्थः, बोध्यबोधकभावश्च सर्वथा वृत्तिमुखापेक्षी। वृत्तिस्तु शब्दस्य शास्त्रसिद्धाभिधैवेति किमनेन व्यञ्जनाया विचाराडम्बरेणेति।

अत्रोच्यते। तत्र निमित्तत्वं द्विविधं भवति। कारकत्वं ज्ञापकत्वञ्च। मृदादयो घटादिकं प्रति कारकत्वेन निमित्तत्वेन अवतिष्ठन्ते, अतो मृदादीनां कारकत्वं नियतम्। यतः शब्दो नार्थस्य जनकोऽतस्तस्यार्थं प्रति मृदादिवन्न कारकत्वेन निमित्तेन अवस्थानम्, प्रत्युत ज्ञापकत्वेनैव। नियतसङ्केत एव शब्दोऽर्थस्य ज्ञापको भवति नत्वनियतसङ्केतः। अत एवानियतसङ्केतेभ्यः शब्देभ्यो नार्थप्रतीतिः। तथा सति शब्दस्य यन्निमित्तत्वं मीमांसकेनाभ्युपगतम्, तन्नियतसङ्केतत्वेनैव। शब्दस्य च सङ्केतोऽभिधेयेऽर्थे एव नियतः, नानभिधेये व्यङ्ग्येऽर्थे। अतः कथं शब्दाद् व्यङ्ग्यार्थप्रतीतिः।

ध्वनिवादिभिरपि व्यङ्ग्यार्थप्रतीतिर्नैमित्तिकीति सम्प्रतिपद्यते, परं शब्दस्य निमित्तत्वं तु व्यञ्जकत्वेनैव न वाचकत्वेन। व्यापारनिरपेक्षः शब्दोऽर्थप्रत्यायनेऽसमर्थः। शब्दस्य च यो व्यापारोऽभिधा, असौ सङ्केतनिबन्धन एवार्थप्रत्यायने निमित्ततामुपयाति। व्यङ्ग्येऽर्थे शब्दस्य सङ्केताभावात् कथं तस्य तं प्रति निमित्तत्वेनावस्थानम्। निर्निमित्ता चार्थप्रतीतिर्भवतीति भवतोऽपि नानुमतम्। परं नैमित्तिको व्यङ्ग्यार्थः शब्दस्य वाचकत्वेनैव निमित्तत्वं नापेक्षते। भवति च शब्दाद् व्यङ्ग्यार्थप्रतीतिरतो निमित्तेन केनचिद्भाव्यमेव। निमित्तं शब्द एवात्र। परं न वाचको नियतसङ्केतः, प्रत्युत वक्तृवैशिष्ट्यसहकृतो व्यञ्जकः शब्दः। अत एव 'भ्रम धार्मिक' इत्यादौ वक्त्र्यभिप्रायं पर्यालोचयन्तः सहृदयाः प्रकरणादिसहकारिसामग्रीवशान्निषेधरूपिणं नैमित्तिकमर्थं व्यङ्ग्यं निमित्ताद् व्यञ्जकाच्छब्दादेवास्वादयन्ति। अतोऽत्र शब्दस्य निमित्तत्वं ध्वननमुखेनैवावतिष्ठते, नत्वभिधानमुखेन। व्यञ्जकत्वेन शब्दस्य निमित्तत्वेऽभ्युपगते तन्निबन्धनो व्यञ्जनाव्यापारोऽप्यभ्युपगन्तव्यो भवति[1]।

किञ्च निमित्तावैचित्र्ये स्वीकृते एव श्रुतिलिङ्गवाक्यप्रकरणेति पूर्वोक्तस्य जैमिनिसूत्रस्य सङ्गतिर्युज्यते। अन्यथा स्वपक्षध्वंसकाः कुलाङ्गारतां गता इमे मीमांसककदेशीयाः।

---

१. व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपं निमित्तत्वमस्माकमपि सम्मतम्, तत्र नास्माकं विवादः। परन्तु व्यञ्जनाया अस्वीकारे तन्न सम्भवति शब्दस्यार्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम्। यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ। तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकार्यः।
काव्यप्रकाशः, वामनाचार्यझलकीकरकृता बालबोधिनी टीका, पृ० २२५

## (५) मीमांसकान्तराणां मतं तत्खण्डनञ्च

व्यङ्ग्यार्थः शब्दस्य तात्पर्यभूतोऽर्थस्तत्परत्वाच्छब्दस्य अतो **यदर्थे यस्य शब्दस्य तात्पर्यं स शब्दार्थः** इति न्यायात् प्रतीयमानोऽर्थः शब्दार्थः सन्नभिधेय एव न व्यङ्ग्योऽतस्तत्प्रत्यायनार्थं शास्त्रप्रसिद्धाभिधावृत्तौ प्रभवन्त्यां व्यञ्जनानामातिरिक्तव्यापाराश्रयणमहेतुकमेवेति मन्वानाः केचन मीमांसका व्यक्ति विप्रतिपद्यन्ते । दशरूपककारेण धनञ्जयेनापि—

**एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम् ।**
**यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥**[1]

इति वदता व्यङ्ग्यार्थस्य तात्पर्यार्थानतिरिक्तत्वं सिद्धान्तितम्, तत्प्रत्यायने च तात्पर्यशक्तिः प्रभवतीति प्रतिपादितम् । अतस्तस्य मतं पूर्वोक्तमीमांसकमतसंवादि ।

**यत्परः शब्दः स शब्दार्थः** इति मीमांसकानां न्यायः शब्दार्थशासनज्ञानमात्रकृतपरिश्रमाणां जैमिनीयानां शास्त्रेष्वेवोपादीयते, नतु परमाह्लादैकमये परमरमणीये काव्ये । तथाहि—**लोहितोष्णीषा ऋत्विजः प्रचरन्ति** एषु विधिवाक्येष्वेव प्राक्तनस्य न्यायस्योपयोगः । ऋत्विजां प्रचरणं तेषाञ्च सोष्णीषत्वं तावत् प्रथमं प्राप्तमेव । परं लोहितत्वं पूर्वमप्राप्तमत्र विधीयते । अतः **यत्परः शब्दः** इत्यादिन्यायेनास्मिन् प्रसङ्गे शब्दस्य तात्पर्यं पूर्वमप्राप्ते लोहितरूपिणि विधेयेऽर्थे एव । सोष्णीषैः ऋत्विग्भिर्यागे प्रचरणीयमिति तावत् पूर्वं विहितमेव । परमत्रोष्णीषाणां लोहितत्वं शब्देनानीयते लोहितत्वस्य विधेयत्वात्तस्मिन्नर्थे च शब्दस्यात्र तात्पर्यात् । एवं पूर्वमप्राप्तो लोहितत्वरूपोऽर्थो लोहितशब्देनाभिधीयते । अतो लोहितशब्दस्य लोहितत्वरूपिण्यर्थे तात्पर्यात् मीमांसाशास्त्रे **यत्परः शब्दः स शब्दार्थः** इति न्यायो युक्त एव । तथा चोपात्तस्य लोहितशब्दस्य लोहितत्वरूपिण्यर्थे तात्पर्यम्, न तु तद्व्यतिरिक्तेऽर्थे ।

परं ध्वनिकाव्ये प्रतीतिपथमुपयातस्य प्रतीयमानार्थस्य बोधकः शब्दस्तत्र नोपात्तो भवति । अत एवास्यार्थस्यानभिधेयत्वं युक्तं भवति । यदि **भ्रम धार्मिक** इत्यादौ उपात्तादेव शब्दान्निषेधरूपिणो व्यङ्ग्यार्थस्य प्रतीतिर्भवेत्, तर्हि प्रतीयमानार्थस्य स्वशब्दावेदनाच्चमत्कारो विलुप्येत् । गूढो मरहट्टवधूकुचाभः प्रतीयमानोऽर्थः स्वशब्दानावेदनादेव विदग्धानां हृदयेषु परमां रमणीय-

---

१. परब, का० पा०, धनञ्जय-दशरूपकम्, पृ० ६५

तामातनोति । **लोहितोष्णीषा ऋत्विजः प्रचरन्ति** इत्यादौ यथा रक्तार्थबोधको लोहितशब्दः साक्षादुपात्तः, न तथा पूर्वनिर्दिष्टे **भ्रम धार्मिक** इत्यादिपद्ये व्यङ्ग्यरूपनिषेधार्थसूचकः कश्चिच्छब्दः साक्षादुपात्तः । यद्युपात्तादेव शब्दादर्थावगतिस्तदा ध्वनेर्गोप्यमानसारं प्राणत्वमपहस्तितं भवति । अतो जैमिनीयशास्त्रेष्वेवायं पूर्वोक्तो न्यायो युज्यते, न तु सहृदयहृदयसमास्वाद्ये ललनालावण्यकल्पे प्रतीयमानार्थप्राणे काव्ये । तत्र तु गूढार्थप्रत्यायको ध्वननव्यापार एव प्रभवतीति कृत्वा तत्परत्ववादिभिर्मीमांसकैरपि व्यञ्जनानाम्न्यतिरिक्ता वृत्तिः स्वीकरणीयैव भवति ।

किञ्च यदि **यत्परः शब्दः** इत्यादिन्यायस्य प्रतीतमात्रेऽर्थेऽपि शब्दस्य तात्पर्यमिति व्याख्यानं क्रियते तेन च व्यञ्जना विडम्ब्यते, तर्हि पूर्वो धावतीत्यत्र पूर्वत्वस्यापरसापेक्षत्वे सति, पश्चिमो धावतीत्यपि शाब्दबोधः प्रसज्येत । एवं वाक्यवर्तिपदोपस्थापितोऽर्थ एव तात्पर्यभूतोऽर्थो मीमांसकनये, न तु प्रतीतमात्रोऽर्थः ।

अन्यच्च गुणीभूतव्यङ्ग्ये काव्ये वाच्यार्थस्य प्राधान्यात्तस्यैव विवक्षा । शब्देन प्रतिपादितेऽर्थे एव वक्तुस्तात्पर्यम् । अभिधेयोऽर्थ एव वक्तुस्तात्पर्यभूतोऽतः शब्दस्य तत्परत्वमुपपन्नम् । तथा सति प्रतीतिपथमवतरन् वक्तुस्तात्पर्यभूतो व्यङ्ग्यार्थोऽतत्परत्वाच्छब्दस्य प्रतीतो नैव भवेत्, परमनुभूयत एवासौ । एवं यत्र वक्तुस्तात्पर्यमसौ सर्वोऽर्थो यद्यभिधयैव बोध्यस्तर्हि गुणीभूतव्यङ्ग्येऽभिधेयेऽर्थे एव प्रधाने सति तस्यैव प्रतीतिर्युक्ता नान्यस्यार्थस्य । तेन च गुणीभूतव्यङ्ग्ये काव्ये सर्वो व्यङ्ग्यार्थोऽतात्पर्यभूतो नाभिधाया विषयः । परं व्यङ्ग्यार्थस्य प्रतीतिर्न कथमप्याच्छादयितुं शक्या । सा प्रतीतिः शब्दस्य कञ्चिद् व्यापारमपेक्षत एव । स चाभिधातिरिक्तो व्यापारो व्यङ्ग्यार्थप्रत्यायनक्षमस्तात्पर्यवादिनापि गुणीभूतव्यङ्ग्ये काव्येऽभ्युपेय एव ।

### (६) तात्पर्यवादिनो धनिकस्य मतं तत्खण्डनञ्च

अधुना तात्पर्यवादिनो धनिकस्य मतं परीक्ष्यते । दशरूपके धनञ्जयाचार्येणाभिहितम्—

> **वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।**
> **वाक्यार्थः कारकैर्युक्तः स्थायिभावस्तथेतरैः**[1] ॥

इमां कारिकां विवृण्वता धनिकेनोक्तम्—यथा लोके क्वचिद्गामानयेत्यादौ क्रियार्थस्यानयनस्य क्रियापदेनाभिधानं क्वचिच्च द्वारं

---

१. दशरूपकम्, ४, ३७

द्वारमित्यादौ पिधेहीत्यस्य क्रियापदस्य स्वशब्देनानावेदनादध्याहारः। परमुभयत्र प्रकरणादिवशाद्बुद्धिसन्निवेशिनी क्रियैव कारकान्विता वाक्यार्थः। तथैव काव्येष्वपि **प्रीत्यै नवोढा प्रिया** इत्येवमादौ क्वचित् स्वशब्देन प्रीतिरूपोऽर्थोऽभिधीयते, क्वचिच्च प्रकरणादिवशान्नियतविभावानुभावोपस्थापनद्वारा रतिरूपोऽर्थः स्वशब्देनानुक्तः प्रतीयते। उभयत्र रतिरूपिणोऽर्थस्य स्वशब्देन अभिधाने अनभिधाने वा वाक्यार्थत्वमुपपन्नम्। विभावानुभावानां रतिरूपिणमर्थं प्रतिपादयितुमुपादानात्तेषां तस्मिन्नेवार्थे पर्यवसानम्। एवञ्च विभावानुभावादीनां रतिरूपार्थद्योतनार्थमुपादानात् रत्यादिर्वाक्यार्थोऽवगन्तव्यो नतु व्यङ्ग्यार्थः।

ननु पदार्थस्यैव वाक्यार्थत्वं भवति, नत्वपदार्थस्य। रत्यादिरूपोऽर्थो विभावानुभावादिभिरभिव्यक्तोऽपदार्थस्थानीय इति चेन्न, काव्यशब्दानां निरतिशयसुखास्वाद एव परमं प्रयोजनमित्यत्र कस्यापि विप्रतिपत्त्यभावात्, तेन च तस्य वाक्यार्थत्वात्। अयमाशयः। यथाभिधाशक्तेर्बोध्योऽर्थः वाच्यार्थः लक्षणाशक्तेः प्रतिपाद्योऽर्थः लक्ष्यार्थस्तथैव तात्पर्यशक्तिरपि वक्तुस्तात्पर्यभूतार्थपर्यवसायिनी[1]। नहि नियतसीमान्तर्गतः अर्थ एव तात्पर्यार्थः, येन व्यङ्ग्यार्थस्य तात्पर्यत्वं न स्यात्। परं यावानर्थः शब्दोच्चारणानन्तरमनुभूयते तावत्पर्यन्तं तात्पर्यस्य प्रसारो निरङ्कुशः। अतो वाक्ये यस्तात्पर्यभूतोऽर्थोऽसौ सर्वस्तात्पर्यशक्तिवेद्यत्वाद् वाक्यार्थः। **भ्रम धार्मिक** इत्यादौ वक्तुस्तात्पर्यं निषेधरूपिण्यर्थे पर्यवसितमतस्तात्पर्यशक्तेरपि प्रसरणं तत्पर्यन्तम्। लोके वेदे वा प्रयुज्यमानानि सर्वाणि वाक्यानि कार्यपराणि भवन्ति, तेषां तद्बोधार्थमुपादानात्। अन्यथोन्मत्तप्रलपितवत्तानि परिहेयान्येव स्युः। अतः सर्वे सार्थका वाक्यविशेषाः कार्यपरा अवधारणीयाः।

काव्यशब्देष्वप्ययमेव न्यायः। काव्ये प्रयुज्यमानानां शब्दानामपि निरतिशयसुखास्वादरूपे रसे पर्यवसानम्। काव्ये रसप्रतीतिर्भवेदिति प्रयोजनमुद्दिश्यैव काव्ये विभावाद्यर्थबोधकाः शब्दाः प्रयुज्यन्ते। अतः काव्योपात्तानां शब्दानां रसरूपकार्यपरत्वात्तेषां तात्पर्यभूतोऽर्थो रस एव। काव्ये प्रयुक्ताः शब्दाः प्रथमं विभावाद्यर्थं बोधयन्ति, अनन्तरञ्च तद्द्वारा रसरूपिणं परमानन्दं स्वप्रयोगतात्पर्यभूतं प्रकटयन्ति। अतः स्वानन्दानुभूतिरेव काव्यशब्दानां कार्यत्वेन निश्चीयते। तत्र काव्ये उपात्तानां शब्दानां विभावाद्यर्थाः पदार्थस्थानीयाः तद्द्वाराभिव्यक्तो रसादिरूपोऽर्थश्च वाक्यार्थस्थानीयः। पदार्था यथा संसृष्टेऽर्थे पर्यवस्यन्तो वाक्यार्थधियं जनयन्ति, तथैव पदार्थस्थानीयाः विभावादयोऽन्ततो

१. एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम्॥
परब, का० पा०, दशरूपकम्, धनिककृता टीका, पृ० १२१

रसे पर्यवस्यन्तः स्वसंवेदनसिद्धं ब्रह्मानन्दसहोदरमानन्दमनुभावयन्ति। एवञ्च पदार्थवाक्यार्थन्यायेन काव्यपठनदर्शनास्वाद्यस्य शृङ्गारादिनोऽर्थस्य वाक्यार्थत्वं युज्यते, न तु व्यङ्ग्यत्वम्[1]।

अत्रोच्यते। पूर्वपक्षिणो मते तत्परत्वमित्यस्य यदि शब्दस्य व्यङ्ग्यार्थ-परत्वमित्याशयस्तर्हि सिद्धसाधनमेव। शब्दादेव व्यङ्ग्यार्थावगतिर्भवतीति वयमपि न विप्रतिपद्यामहे। अस्माभिरपि शब्दोपात्तैर्विभावादिभिर्भवन्ती रस-प्रतीतिर्न निह्नूयते। विभावादयोऽन्ततो रत्यादीन् स्थायिभावानुद्बोधयन्त-स्तान् रसतामानयन्तीत्यत्र नास्ति संदेहलेशावकाशः। विभावादिद्वारक एव रसादीनामास्वादः। एवं तात्पर्यस्य 'वक्तृबुद्धिसन्निधापितः वाक्यावगम्यः वाक्यार्थः रसादिरूपः तच्छब्देनोच्यते। तस्मिन् पराः तत्पराः तदासक्ताः तद्विषया इत्यर्थः। तेषां भावः तात्पर्यम्' यद्ययमर्थोऽभिप्रेतः, तदा नास्ति काचि-द्विमतिः। यतो हि ध्वनितंत्रप्रजापतिना आनन्दवर्धनेन व्यङ्ग्यार्थस्य तात्पर्यत्वं सम्प्रतिपन्नम्। यथोक्तं तेन—

**यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्[2]**

तदनुयायिना अभिनवगुप्तपादेनापि—

**तात्पर्येण विश्रान्तिधामतया प्रयोजनत्वेनेति यावत्[3]**

इति वदता पार्यन्तिकस्य रसरूपिणोऽर्थस्य तात्पर्यत्वं समुपोद्वलितम्। इत्थं रसरूपिणि व्यङ्ग्ये एव कविसंरम्भविश्रान्तेस्तस्य तात्पर्यत्वमभिमतमेव ध्वनिवादिनः।

परं तत्परत्ववादी धनिकाचार्यो यदि प्रतीयमानार्थप्रत्यायनार्थं तात्पर्यवृत्ति-मवलम्बते, तदास्ति ध्वनिवादिनां विप्रतिपत्तिः। तत्रेदं प्रष्टव्यम् किमियं तात्पर्य-वृत्तिरभिहितान्वयवादिभिर्मीमांसकैरङ्गीकृता वृत्तिस्तद्भिन्ना वा।

नाद्यः पक्षः। संसर्गबोधमात्रपरिक्षीणाया मीमांसकानां तात्पर्यवृत्तेस्तुरीय-कक्ष्याविनिविष्टस्य प्रतीयमानार्थस्य वार्तामपि वेदितुमसमर्थत्वात्। तस्याश्च वाक्यार्थकक्ष्यायामेव विश्रमात्।

---

१. अतो वाक्यस्याभिधानशक्तिस्तेन तेन रसेनाकृष्यमाणा तत्तत्स्वार्था-पेक्षितावान्तरविभावादिप्रतिपादनद्वारा स्वपर्यवसायितामानीयते, तत्र विभावादयः पदार्थस्थानीयास्तत्संसृष्टो रत्यादिर्वाक्यार्थः। दशरूपकम्, पृ० १२०

२. ध्वन्यालोकः, तृ० उद्यो० पृ० १६६ (बा० म० सं०)

३. तत्रैव, ध्वन्यालोकलोचनम्

नान्त्यः पक्षः । तात्पर्यवृत्तिभिन्नवृत्तेर्व्यञ्जनायामेवान्तर्भावात् । अयमाशयः । यदि भाट्टमीमांसकप्रोक्ततात्पर्यवृत्तिभिन्नाऽन्या कापि वृत्तिस्तन्नाम्ना धनिकेन प्रोद्घुष्यते, तर्हि नापूर्वमभिहितं तेन । केवलं ध्वननद्योतनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपिता व्यञ्जनावृत्तिरेव तात्पर्येति नवीनेन व्यपदेशेन मूर्धाभिषिक्ता क्रियते । सर्वथा वेदवादिमीमांसकोद्घोषिततात्पर्यवृत्तिव्यतिरिक्तोऽन्यः कश्चिच्छब्दव्यापारोऽभ्युपगत एव भवतीति द्वितीयः पक्षोऽपि निरस्तः । मीमांसकानुमततात्पर्यवृत्तिभिन्नो व्यापारो व्यञ्जनानाम्नाऽभ्युपगम्यते ध्वनिवादिभिः, धनञ्जयेन चायमेव व्यापारस्तात्पर्येत्यभिधानेन, सर्वथा अभिधातात्पर्यवृत्तिव्यतिरिक्तः कश्चिच्छब्दव्यापारोऽनपह्नवनीय एव[1] । एवं यदि शब्दच्छलेनासौ व्यापारस्तात्पर्यवृत्तिरिति नाम्नोररीक्रियते, व्यञ्जनेति नाम्ना च विप्रतिपद्यते, तर्हि मात्सर्यमेव परमं प्रकटितं भवति । नहि शब्दविपर्ययेण व्यापारोऽसौ ध्वननात्मा प्रत्याख्यातो भवति । अतो व्यञ्जनाया एवेदं नामान्तरकरणं तात्पर्यमिति ।

## (७) तात्पर्यवादिनो भोजदेवस्य मतम्

भोजदेवो मुख्यागौणीलक्षणेति शब्दस्य तिस्रो वृत्तय इत्यभ्युपैति[2] । परं

---

१. तत्र प्रष्टव्यं किमिदं तत्परत्वं, तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा ? आद्ये न विवादः । व्यङ्ग्यत्वेऽपि तदर्थतानपायात् । द्वितीये तु केयं तात्पर्याख्या वृत्तिः ? अभिहितान्वयवादिभिरङ्गीकृता तदन्या वा ? आद्ये दत्तमेवोत्तरम् । द्वितीये त्वतिरिक्तवृत्त्यङ्गीकारान्नाममात्रे विवादे पर्यवसानम् ।

खिस्ते, नारायणशास्त्री, प्रभाकरभट्ट-रसप्रदीपः, पृ० ४२

२. तत्र साक्षादव्यवहितार्थाभिधायिका मुख्या, गम्यमानशौर्यादिगुणयोगव्यवहितार्था गौणी, स्वार्थाविनाभूतार्थान्तरोपलक्षणा लक्षणा । तथाहि— गौः इत्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति, स एव तिष्ठन्मूत्रतादिगुणसम्पदमपेक्षमाणो यदा वाहीके वर्तते तदा गौणीं वृत्तिमनुवदति, यदा तु शब्दः स्वार्थतः क्रियासिद्धौ साधनभावं गन्तुमसमर्थः तदा अभिधेयाविनाभूतमर्थान्तरं लक्षयति तदा लक्षणावृत्तिः, यथा गङ्गायां घोषः प्रतिवसति । अत्र गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिः । स च घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयति ।

—शृङ्गारप्रकाशः, (ज्यो० संस्करणम्), पृ० २२३

ध्वनिवादिनां ध्वनिं तद्व्यतिरिक्ते तात्पर्येऽन्तर्भावयति । तेनेदं प्रतीयते यद-सावपि तात्पर्यवादी । तत्र भोजदेवमते तात्पर्यस्य किं स्वरूपमिति प्रथमं ज्ञातव्यं भवति ।

**यत्परः शब्दः स शब्दार्थ इति तात्पर्यम् । तच्च वाक्य एवोपपद्यते, पद-मात्रेण अभिप्रायस्य प्रकाशयितुमशक्यत्वात् । तच्च वाक्यप्रतिपाद्यं वस्तु त्रिरूपं भवति अभिधीयमानम्, प्रतीयमानं, ध्वनिरूपं च ।**[1]

अनेन प्रकारेण अभिधीयमानतः ध्वनिं यावत् सर्वोऽप्यर्थः तात्पर्यम्, शब्दस्य सर्वेष्वर्थेषु तात्पर्यात् । तेन च ध्वनिवादिनां ध्वनिरपि तात्पर्यानतिरिक्तो भोजदेवमते । इदं तात्पर्यं त्रिप्रकारम्—अभिधीयमानं प्रतीयमानं, ध्वनि-रूपञ्च ।

### (१) तत्र अभिधीयमानं यथा—

**तत्र यद् उपात्तशब्देषु मुख्यागौणीलक्षणाभिः शब्दशक्तिभिः स्वमर्थमभि-धाय उपरतव्यापारेषु आकांक्षासन्निधियोग्यतादिभिः वाक्यार्थमात्रमभिधीयते तद् अभिधीयमानं यथा गौर्गच्छतीति ।**[2]

इदमभिधीयमानं तात्पर्यं तार्किकाणां संसर्गरूपो वाक्यार्थः न तु मीमांस-कानां तात्पर्यम् । यथा तार्किका आकांक्षादिमत्त्वे सति पदानां पदार्थानां वा समन्वयशक्तिं वाक्यमाचक्षते, तथैव भोजदेवोऽपि आकांक्षासन्निधियोग्यतावद्-वाक्यार्थमभिधीयमानमातिष्टते । अनेन प्रकारेण भोजदेवस्य तात्पर्यस्य एकं रूपम् अभिधीयमानं संसर्गरूपे वाक्यार्थे पर्यवस्यति ।

### (२) तत्र प्रतीयमानं यथा—

**वाक्यार्थावगतेरुत्तरकालं वाक्यार्थ उपपद्यमान अनुपपद्यमानो वा अर्थप्रकर-णौचित्यादिसहकृतो यत् प्रत्याययति तत् प्रतीयमानम् । यथा 'विषं भुंक्ष्व, मा चास्य गृहे भुङ्क्ष्व' इत्युक्ते वरं विषं भक्षितं, न पुनरस्य गृहे भुक्तम् इति प्रतीयते ।**[3]

प्रतीयमानस्य यत्स्वरूपमत्र भोजराजेनोद्घाटितं तेनेदं स्पष्टं यत् तत्प्रोक्तं प्रतीयमानं न ध्वनिवादिप्रतीयमानविसंवादि । यथा ध्वनिवादिभिः प्रतीयमा-नार्थस्य वक्तृबोद्धव्यप्रकरणाद्युपाधिवशात् परिस्फुरणं प्रोक्तं तदेवानुकृत्य भोजराजेनापि अर्थप्रकरणौचित्यादिसहकृता प्रतीयमानावगतिः समाख्याता ।

---

१-२ शृङ्गारप्रकाशः, ज्यो० संस्करणम्, पृ० २४६

३. तत्रैव

अनन्तरं प्रतीयमानस्य प्रकारान् परिगणयता अनेन महाराजेन तान्येवोदाहरणानि प्रदत्तानि यान्यानन्दवर्धनेन। तद्यथा—

**प्रतीयमानं पुनरनेकधा। क्वचिद् विधौ निषेधः—'भम धम्मिअ' इत्यादि (गाथा—२.७५), क्वचिन्निषेधे विधिः—'अत्ता एत्थ णिमज्जइ' इत्यादि (गाथा० ७.६७)**[1]

**(३) तत्र ध्वनिरूपं यथा—**

**अर्थशब्दोपायात् उपसर्जनीकृतः स्वार्थो वाक्यार्थावगतेरनन्तरम् अनुनादरूपं प्रतिशब्दरूपं वा यद् अभिव्यञ्जयति तद् ध्वनिरूपम्। यथा निमिषत्येषेत्युक्ते अक्ष्णोर्निमेषोऽभिधीयते, देवी न भवतीति प्रतीयते, रूपातिशयश्च ध्वन्यते।**[2]

अत्रापि भोजदेवेन ध्वनिरूपस्य तात्पर्यस्य यत्स्वरूपं प्रोक्तं तदप्यानन्दवर्धनप्रोक्तध्वनिलक्षणसंवादि। यथा आनन्दवर्धनाचार्येण वाच्यार्थस्य गुणीभावे ध्वनिः सम्प्रतिपद्यते, तथैव भोजराजेनापि स्वार्थोपसर्जनात् प्रतीतस्यार्थस्य ध्वनिरूपत्वमङ्गीक्रियते।

इदं ध्वनिरूपं तात्पर्यं भोजदेवमते द्विप्रकारम्। (१) अर्थध्वनिः (२) शब्दध्वनिः। अनन्तरं अर्थध्वनिशब्दध्वन्योः प्रत्येकं अनुनादप्रतिशब्दरूपेण द्वौ द्वौ भेदौ।[3]

**अनुनादध्वनिः**

**योऽभिधीयमानवाक्यार्थानुस्यूतमेव कांस्यानुनादरूपम् अर्थान्तरं ध्वनति स अनुनादध्वनिरूपः। तद्यथा—'शिखरिणी क्व नु नाम कियच्चिरम्' इत्यादि। अत्र यथाश्रुतवाक्यार्थोऽभिधीयमानो बिम्बफलारुणाधर इत्युपलक्षणेन रागातिशयं प्रत्याययन् नाल्पपुण्यस्त्वदधरप्रतिनिधिमपि चुम्बतीति चाटुना वर्णनीयायाः स्वानुरागप्रकाशनं ध्वनति। एतच्च कांस्यध्वनिवद्**

---

१. शृङ्गारप्रकाशः, पृ० २४६ (ज्यो०सं०)
२. तत्रैव
३.



अविच्छिन्नमेव ध्वनद् अनुनादरूपम् प्रतीयते इति अनुनादध्वनिः ।[1]

प्रतिशब्दध्वनिः

यः पुनरभिधीयमानवाक्यार्थात् पृथग्भूत इव गुहादिप्रतिशब्दानुरूपमर्थान्तरं प्रत्याययन् प्रतिध्वनति स प्रतिशब्दध्वनिः। यथा "लावण्यसिन्धुरपरैव हि केयमत्र' इत्यादि। यथा गुहायां पौरुषादिशब्दानां प्रतिशब्दाः जायन्ते, ते च ध्वनिं जनयन्त उपलभ्यन्ते, एवं लावण्यसिन्धुरित्येतस्मिन् पदार्थे उत्पलादिशब्दानां यथा स्वोपमेयलोचनाद्यर्थप्रतिशब्दा जायन्ते तेन च अर्थान्तरध्वनिं जनयन्तः उपलभ्यन्ते । तत्र च यथाश्रूयमाणानामुत्पलादीनामर्थः अभिधीयमानः तस्य लोचनाद्यर्थैः सह सादृश्यं प्रत्याययन् वर्णनीयायाः चारुत्वोत्कर्षप्रतीतिं ध्वनति । सा ततः पृथगिव उपलभ्यमाना प्रतिशब्दध्वनिः ।[2]

एभिर्भोजदेववचनैरिदं प्रतिभाति यत्तात्पर्यस्य न किञ्चित् स्थिरं रूपं तन्मते । असौ अभिधीयमाने वाक्यार्थे तात्पर्यं प्रयुणक्ति तेनैव तात्पर्येण च ध्वनिवादिनां प्रतीयमानमर्थं ध्वनिञ्च अन्यथयति । तात्पर्यस्य वास्तविकं किंस्वरूपमिति तु न स्पष्टं भवति। एवमेव प्रतीयमानध्वन्योः पारस्परिको भेदोऽपि न तेनोद्घटितः। किञ्च मुख्यागौणीलक्षणेति तिस्रः शब्दवृत्तयस्तन्मते, तात्पर्यञ्चार्थधर्मः। परं कथमेताः शब्दवृत्तयः कथञ्च तात्पर्यमर्थधर्म इत्यपि तेन न स्फुटीकृतम् । पुनश्च

> अदूरविप्रकर्षात् तु द्वयेन द्वयमुच्यते ।
> यथा सुरभिवैशाखौ मधुमाधवसंज्ञया ।।[3]

इत्यनेनायं तात्पर्यं ध्वनिञ्च समन्वयन् तयोरैक्यं प्रतिपादयति । अनन्तरं

> तात्पर्यमर्थधर्मस्तच्छब्दधर्मः पुनर्ध्वनिः ।[4]

इति व्याहरन् तयोः पार्थक्यं सूचयति ।

वस्तुतस्तु अयं महाराजः समन्वयवादी । तत एवास्य तात्पर्यं सामान्यविशेषभावं न जहाति । एकेनैव तात्पर्येणासौ यावत्कार्यप्रसारि धनिकस्य तात्पर्यम्, आनन्दवर्धनस्य स्वार्थोपसर्जनकं ध्वनिं च संगृह्णाति । इत्थं भोजदेवो न व्यञ्जनाविरोधी। तेन तु व्यञ्जनापरपर्यायमेव तात्पर्यमङ्गीकृतम् । अत एव तेन ध्वनिरूपतात्पर्यविवेचने तान्येवोदाहरणानि प्रदत्तानि यानि ध्वनि-

---

१. शृङ्गारप्रकाशः, सप्तमः प्रकाशः
२. तत्रैव
३. तत्रैव
४. तत्रैव

वादिभिर्ध्वनिं व्याकुर्वद्भिः प्रदीयन्ते[1]।

### (८) अखण्डार्थवादिनां वेदान्तिनां वैयाकरणानाञ्च मतं, तत्खण्डनञ्च

ब्रह्मवादिनो वेदान्तिनः स्फोटरूपशब्दब्रह्मवादिनो वैयाकरणाश्च अखण्डेभ्यो वाक्येभ्योऽखण्डार्थप्रतीतिं सम्प्रतिपद्यन्ते। अतस्तेषां मते पदपदार्थविभागस्यानुपपन्नत्वात् तन्निबन्धनो व्यञ्जनादिको व्यापारोऽपि निर्निबन्धन एव। यतो ह्यखण्डवाक्यस्य वाक्यार्थे शक्तिस्तत एव व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्यैव शक्तेर्व्यञ्जनादिको व्यापारोऽनुपादेय एव। तत्र ब्रह्मवादिनामयमभिप्रायः। दृश्यमानं सर्वं जगन्मिथ्या केवलं ब्रह्मैव सत्यम्। ब्रह्मणो निर्धर्मकत्वात्तत्र धर्मधर्मिभावो नोपपद्यते। तदभावे च पदपदार्थकल्पनापि सुतरामसम्भवा। **सत्यं ज्ञानमनन्तं ब्रह्मे**त्यादिमहावाक्यमखण्डमेवाखण्डं ब्रह्म बोधयति। अतो लक्ष्यव्यङ्ग्यादिपदार्थविभागस्यानुपपत्तौ तद्धेतुको व्यापारोऽप्यनावश्यक एव। स्फोटशब्दब्रह्मवादिनां वैयाकरणानामपि मते स्फोटस्याखण्डत्वान्न पदपदार्थविभागः। तेषामपि दर्शनेऽखण्डं वाक्यमखण्डमेवार्थं बोधयति। यथोक्तं भर्तृहरिणा—

> **पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
> **वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥**[2]

अत्रोच्यते। यद्यपि ज्ञानदशायां पदपदार्थजनकाज्ञानाभावादखण्ड एवार्थः, परं व्यवहारदशायां वेदान्तिभिर्वैयाकरणैश्चापि पदपदार्थविभागः कल्पनीय एव। असत्ये मार्गे स्थित्वैव सत्यं ज्ञायते।[3] वेदान्तिभिर्व्यवहारदशायां भाट्टनयः स्वीक्रियते। **तत्त्वमसी**त्यादौ च जहदजहल्लक्षणाऽऽश्रीयते। अतो ज्ञानदशायां व्यञ्जनाऽनङ्गीकारेऽपि व्यवहारदशायां तु स्वीकरणीयैवासौ। अन्यथा लक्षणादीनां वृत्तीनामप्युच्छेदप्रसङ्गः। एवमविद्यापदपतितैर्वेदान्तिभिर्व्यवहारदशा-

---

१. Bhoja completely accepts Dhvani as thc greatest Vyāpāra ruling in the realm of poetry and embodies much of Ānanda-Vardhana's text in his own treatment of Dhvani in the Śṛṅgāra Prakāśa.

Dr. V. Ragavan, Bhoja's Śṛṅgāra Prakāśa, p. 156.

२. भर्तृहरिः, वाक्यपदीयम्, १,७४

३. उपायाः शिक्ष्यमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥

तत्रैव, २,२४०

रूढैश्च वैयाकरणैः पदपदार्थविभागोऽभ्युपेय एव । तेन च व्यञ्जनाया अपि सिद्धिः ।

**व्यञ्जनास्थापनम्**

**(क)** काव्ये व्यङ्ग्यव्यञ्जकभावाभ्युपगम एवासाधुत्वादीनां दोषाणां नित्यता श्रुतिकटुत्वादीनाञ्चानित्यतेति व्यवस्था सुस्थिता भवति । तद्यथा—षकारढकारादयो ये वर्णाः कर्कशाः सन्तो हृदयद्रुत्यात्मनि शृङ्गारकरुणादौ रसे रसचर्वणां निरुन्धन्तोऽवद्या भवन्ति, त एव चित्तदीप्त्यात्मनि रौद्रवीरादौ रसे हृदयसंवादवशाद् गुणत्वं भजन्ते[1] । दोषाणामयं नित्यानित्यत्वविभागो व्यङ्ग्यव्यञ्जकभावाभ्युपगम एवौचित्यं बिभर्ति । अभिधाबोध्योऽर्थस्तु सदा नियतरूप एव । तदङ्गीकारे श्रुतिकटुत्वादीनां दोषाणां सर्वथैव दुष्टत्वमदुष्टत्वं वा स्यात्, तेन च दोषाणामुभयविधविभागो नित्यानित्यत्वरूपः सर्वजनप्रतीतिसिद्धो भ्रश्येत् । परं व्यङ्ग्यव्यञ्जकभावेऽभ्युपगते व्यङ्ग्यार्थस्याभिधेयार्थवन्नियतरूपेणावस्थानाभावात्, क्वचित् कर्कशानां वर्णानां व्यङ्ग्यं रौद्रबीभत्सादिकं रसं प्रत्यनुकूलतयावस्थानात्, क्वचिच्च तेषां व्यङ्ग्यं शृङ्गारकरुणादिकं रसं प्रति प्रतिकूलतयावस्थानादुपपद्यत एव दोषाणां नित्यत्वानित्यत्वविभागः[2] । एतदेवाधोलिखितोदोहरणविवेचनेनावदातं भवति ।

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी**[3] ॥

इत्यत्र **पिनाकिनः** इति पदं दुष्टम्, तत्स्थाने **कपालिनः** इति पदं साधु यतो हि **कपालिनः** इति पदं व्यञ्जकत्वेन भगवतो महादेवस्यानभिभवनीयं रूपं द्योतयत् काव्यार्थं भूषयति, तद्विपर्यये **पिनाकिनः** इति पर्यायवाचि पदमीशस्यैश्वर्यं प्रत्याययत् काव्यार्थं दूषयति । यद्यपि पिनाकिकपालिपदयोरभिधेयोऽर्थो

---

१. शषौ सरेफसंयोगौ ढकारश्चापि भूयसा ।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युताः ।
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।
तदा तं दीपयन्त्येव ते न वर्णा रसच्युताः ॥
ध्वन्यालोकः, ३ ३४

२. वाच्यवाचकव्यतिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्टया स्वीकार्यम् । अन्यथा कष्टत्वादयोऽनित्यदोषाः, असाधुत्वादयो नित्यदोषा इति विभागो न स्यात् ।
काव्यप्रदीपः, पृ० १५८ (नि० सं०)

३. कुमारसम्भवम्, ५,७२

महादेवरूप एक एव नियतः' परं तयोर्व्यञ्जकत्वेऽर्थभेदः स्पष्ट एव। व्यङ्ग्य-व्यञ्जकभावाभ्युपगम एव पर्याययोर्मध्ये कपालिपदस्य काव्यानुगुणत्वं पिनाकि-पदस्य च दोषत्वम्। यतो हि शिवनिन्दायामत्र तात्पर्यम्। कपालिपदेन महा-देवस्याशुचित्वं बीभत्सत्वं च द्योतितं भवति। पिनाकिपदेन च तस्याजगवं धनुरित्यर्थत्वात् महादेवस्य वीरताऽभिव्यक्ता भवति। परं शिवनिन्दायां तात्पर्ये सति प्रथमपदस्यानुकूलार्थध्वननात् गुणत्वं, द्वितीयपदस्य चाननुकूलार्थद्योतना-द्दोषत्वं स्पष्टम्।

**छिद्रान्वेषी महान् स्तब्धो घातायैवोपसर्पतीत्यादौ** पुरुषशिश्नरूपार्थ-वाचकः शब्दो नोपात्तः, परं तथापि नितान्तमसभ्यार्थस्य प्रतीतिर्भवत्येव। न तत्र वाक्योपात्तानां शब्दानां सङ्केतः। परमसङ्केतितोऽसावर्थः प्रतीतिपथमवतर-तीति तत् प्रत्यायनार्थं व्यञ्जनोपास्यैव। अन्यथैवंविधस्य वाक्यस्याभिधेयार्थमात्र-प्रतीतौ न काचिद्दुष्टता।

(ख) व्यङ्ग्योऽर्थो वाच्यार्थात् बोद्धृस्वरूपसंख्यादिवशान्नितान्तं भिन्नः[1]। तथा सति भिन्नत्वात्तयोः प्रत्यायको व्यापारोऽप्यसजातीय एव स्वीकरणीयः।

(१) तत्र बोद्धृभेदात् वाच्यार्थव्यङ्ग्यार्थयोः भेदः

वाच्यार्थः शब्दार्थशासनज्ञानमात्रकृतश्रमाणां वैयाकरणमीमांसकादीना-मन्येषाञ्चाविदग्धानामपि बोधविषयः। परं व्यङ्ग्यार्थः काव्यवासनाविशदी-भूतमनोमुकुराणां विदग्धानामेवास्वादविषयो नत्वन्येषाम्[2]। एवं बोद्धृभेदाद् वाच्यव्यङ्ग्यार्थयोर्भेदः स्पष्टः।

---

१. (क) बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।
आश्रयविषयादीनां भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः॥
साहित्य-दर्पणः, ५,२

(ख) व्यक्तिर्नानाश्रया शक्तिरेकार्था व्यक्तिरन्यथा।
शास्त्रगम्या भवेच्छक्तिः प्रज्ञागम्या परा मता॥
सर्वाधिकारिका शक्तिर्व्यक्तिः सुध्यधिकारिका।
एवं परीक्षितेऽत्यन्तं व्यक्तिः शक्तिविलक्षणा॥
—शुक्लः कालिकाप्रसादः, आशाधरभट्टविरचितः कोविदानन्दः, पृ० ३२-३५

२. शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥
ध्वन्यालोकः १,७

(२) स्वरूपभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

**भ्रम धार्मिक** इत्यत्र परिनिश्चितसंकेतस्थाना काचित् पुंश्चली धार्मिकसञ्चरणाद् व्यवहितस्वच्छन्दसम्भोगमहोत्सवा भीरुं धार्मिकं विधिमुखेन गोदानदीकच्छभ्रमणान्निवारयति । अत्र सहृदयैः प्रतिभावशात् पूर्वोक्तवाच्यार्थातिरिक्तो निषेधात्मा व्यङ्ग्यार्थोऽप्यास्वाद्यते । यतो हि वक्त्रीप्रकरणादिपर्यालोचनया धार्मिकस्य विहितं भ्रमणं निषेधे पर्यवस्यति । एवं वाच्यार्थोऽविदग्धानामपि स्फुटो विधिरूपः । परं विदग्धजनैकवेद्यो व्यङ्ग्यार्थो निषेधरूप एव । विधिनिषेधयोः स्वरूपभेदः सर्वजनानुभवसिद्ध इति कृत्वा स्वरूपभेदाद्वाच्यार्थव्यङ्ग्यार्थयोर्भेदः ।

(३) संख्यावशात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

वाच्यार्थव्यङ्ग्यार्थयोः संख्याकृतो भेदोऽपि प्रत्यक्ष एव । सूर्योऽस्तं गतः इत्युच्चारिते सूर्यास्तरूपार्थस्याभिधेयत्वाद् वाच्यार्थो नियत एव । परं वक्तृबोद्धव्यभेदादस्माद् वाक्यान्निरवधिरनन्तो व्यङ्ग्यार्थः परिस्फुरति । नृपेण यदि पूर्वोक्तं वाक्यं सेनापतिमुद्दिश्य प्रोक्तम्, तर्हि शत्रूणां हठेनावमर्दनावसरः, दूत्या अभिसारिकां प्रत्युक्तम्, तर्हि **अभिसरणमुपक्रम्यताम्** इति वक्तृबोद्धव्यप्रकरणाद्यनुसन्धानात् परिस्फुरति । परं वाच्योऽर्थः सदा नियत एव । नासौ व्यङ्ग्यार्थवन्नानारूपः । एवं वाच्यार्थस्यैकत्वाद् व्यङ्ग्यार्थस्य च नानात्वात्तयोः संख्याभेदः ।

(४) निमित्तभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

वाच्यार्थस्य प्रतीतिः शब्दोच्चारणनिबन्धनैव । परं व्यङ्ग्यार्थोऽभिधेयार्थवच्छब्दमाकर्ण्य साक्षान्नावबुध्यते । परमसौ प्रतिपत्तृहृदयसंवादप्रतिभावगम्यः । अत एव गड्डरिकाप्रवाहोपहतसहृदयधुराधिरोहणविहीनानां शास्त्रकोषादिज्ञानकृतपरिश्रमाणां हृदये सन्नप्यसावर्थो न परिस्फुरति । एवं निमित्तभेदादपि वाच्यार्थव्यङ्ग्यार्थयोर्भेदः ।

(५) कार्यभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

वाच्यार्थप्रतीतिः केवलमभिधेयार्थबोधपर्यवसायिनी । यतो वाचकशब्दात् केवलं सङ्केतितोऽर्थ एव प्रतीयते । परं व्यङ्ग्यार्थप्रतीतिसमये हृदयसंवादवशात् परमाह्लादोऽनुभूयते । अतो व्यङ्ग्यार्थावगतिर्न केवलमर्थबोधमात्रपर्यवसायिनी, प्रत्युत परमास्वादप्रसवित्री[1] । तेन च कार्यभेदादपि द्वयोर्भेदः स्फुट एव ।

---

१. सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥
ध्वन्यालोकः, १,४

(६) कालभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

वाच्यार्थज्ञानं प्रथमायां कक्ष्यायां भवति । परं वाच्यार्थप्रतीत्यौत्तरकालिकं व्यङ्ग्यार्थज्ञानं तुरीयायां कक्ष्यायां भवति । एवं वाच्यव्यङ्ग्यार्थयोः पूर्वपश्चाद्-भावेन प्रतीतेः कालभेदोऽपि तयोरनपह्नवनीयः ।

(७) आश्रयभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

वाच्यार्थः शब्दाश्रयः । शब्दोच्चारणमन्तरेण तस्याप्रतीतेः । परं व्यङ्ग्या-र्थस्याश्रयस्तु पदपदैकदेशातिरिक्तलोचनचालनभुजप्रक्षेपोरुस्फालनादिकमपि भवति । तद्यथा—

**द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया**
**प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।**
**आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने**
**वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते[1] ॥**

अत्रोरुयुगप्रस्फालनांशुकाधःपातनादिभिश्चेष्टाभिः प्रच्छन्नकान्तविषय आकूतविशेषात्मा व्यङ्ग्योऽर्थो ध्वन्यते । वाच्यार्थः सर्वदा शब्देनैवाभिधीयते, तदभावे तदप्रतीतेः । परं पूर्वोक्तोदाहरणेनेदमवदातं भवति यद् व्यङ्ग्यार्था-वगतिर्न सदा वाच्यार्थप्रतीतिवच्छब्दनिबन्धनी, परमशाब्द्या चेष्ट्यापि व्यङ्ग्यार्थः समुल्लसति[2] । एवं भिन्नाश्रयत्वाद् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः स्फुटः ।

(८) विषयभेदात् वाच्यार्थव्यङ्ग्यार्थयोर्भेदः

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्[3] ॥**

खण्डिताधरां काञ्चित् कुलटां तस्याः पतिः परपुरुषचौर्यरतिशङ्कया अवजानाति । अतः काचित् समीपस्था तद्वयस्या खण्डिताधरवशात् स्वसखी-

---

१. काव्यप्रकाशः, पृ० ७६

२. यदेव वाचकत्वं तदेव गमकत्वं यदि स्यात्, अवाचकस्य गमकत्वमपि न स्यात्, गमकत्वेनैव वाचकत्वमपि न स्यात् । न चैतदुभयमपि गीतशब्दे शब्दव्यतिरिक्ते चाधोवक्त्रत्वकुचकम्पनबाष्पावेशादौ तस्यावाचकस्या-प्यवगमकारित्वदर्शनात् ।

ध्वन्यालोकः, पृ० ३३६ (चौ० सं०)

३. तत्रैव, पृ० ७६

पतिचेतसि जायमानां चौर्यरतिशङ्कां वैदग्ध्येनोन्मूलयति यदियं मम सखी भ्रमरदंशवशादेव खण्डिताधरा ननु परपुरुषसम्भोगेन ।

प्रस्तुते पद्ये शब्दानामभिधेयार्थस्य विषयतामापन्ना काचित् पुंश्चली स्त्री । यतः सहस्वेत्यादिनासौ स्ववयस्यया सम्बोध्यते । परं तद्भर्तृसपत्नीप्रतिवेशिन्यादिकं प्रति पृथक् पृथगर्थध्वननाद् व्यङ्ग्यार्थस्य विषयो वाच्यार्थाद्भिन्नोऽनेकरूपश्च । तथाहि—विदग्धया सख्या खण्डिताधरदर्शनेन कस्याः प्रिय उपजातमन्युर्न भवतीति सूचयन्त्या वाच्यमुखेन सहस्वेत्यादिना लोकप्रदर्शनार्थं स्वसखी भर्त्स्यते । मया त्वं बहुधा सभ्रमरपद्माघ्राणकार्यान्निवारिता, परं त्वया मद्वचनमनादृत्य स्वशीलं न परित्यक्तम् । अधुना स्वाविनयस्य फलं त्वं भुङ्धि । अद्यत्वे लोको युवतीजनचारित्र्यविषये सापवादः । यद्यपि सभ्रमरपद्माघ्राणवशात्तवाधरे व्रणः परन्तु सशङ्को जनः परपुरुषसम्भोगचिह्नत्वेन सव्रणमधरमाकलयति । अतः मद्वचनोपेक्षाफलमधुना त्वयानुभवितव्यम् । अयं सर्वो वाच्यार्थः कुलटानायिकाविषयकः । परं भ्रमरेणैवास्यास्तव प्रियाया अधरो दष्टो न तूपपतिनेति परपुरुषसम्भोगाशङ्कया नेयं खलीकरणीया स्वहृदयवल्लभेति व्यङ्ग्यं कुलटाभर्तृविषयम् । खण्डिताधरां नायिकां वीक्ष्य तद्भर्ताऽवश्यं तामुपालप्स्यत इति तु न शङ्कनीयम् । सर्वथा साध्वीयं नायिका परपुरुषरतानभिज्ञा पतिव्रतेति नायिकापातिव्रतप्रत्यायनं प्रातिवेशिकलोकविषयं व्यङ्ग्यम् । नायकोपालम्भशङ्कया प्रहृष्टां सपत्नीं प्रति प्रियायाः इति शब्दमहिम्ना भर्तृहृदयप्रियेयमिति प्रकाशनात् तस्याः सौभाग्यातिशयख्यापनं सपत्नीविषयं व्यङ्ग्यम् । मया खण्डिताधरादीनि सुरतचिह्नानि परमचातुर्येण संगोप्याद्य तव हृदयवल्लभेत्थं सुरक्षिता, पुनरियमेवं नोपभोग्या येन तत्सम्भोगः प्रकाशमुपेयादित्युपनायकविषयं व्यङ्ग्यम् । मया वैदग्ध्येन स्ववयस्याया अविनयमपह्नुतमिति तटस्थसहृदयविषयं व्यङ्ग्यम्[1] ।

इत्थं वाच्यार्थस्य विषयस्तु खण्डिताधरा काचिन्नायिका । परं व्यङ्ग्यार्थविषयभूतास्तु तद्भर्तृसपत्नीप्रतिवेशिन्यादयः । तेन च वाच्यार्थव्यङ्ग्यार्थयोर्विषयभेदात् भेदः स्पष्टः ।

(ग) यथा वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थमभिधातुमुपादेयः, तथैव ध्वननलक्षणो व्यापारोऽपि वाच्यार्थव्यतिरिक्तं सहृदयहृदयानुभवसिद्धं व्यङ्ग्यमर्थं द्योतयितुमुपादेयः । अभिधया बोध्यो वाच्यार्थः शब्दस्य साक्षात् सम्बन्धी, परं व्यञ्जनावेद्यो व्यङ्ग्यार्थो न साक्षाच्छब्दात् प्रतीयते, परं सान्तरेण

---

१. ध्वन्यालोकलोचनम्, पृ० ७७-७८ (चौ० सं०)

वाच्यार्थेन लक्ष्यार्थेन वा सम्बद्धोऽसौ व्यक्तो भवति । अतो व्यङ्ग्यार्थस्य न साक्षादभिधेयत्वम्, प्रत्युत अभिधेयार्थसामर्थ्याक्षिप्तत्वमेव । यदि व्यङ्ग्यार्थोऽपि साक्षात् शब्दस्य सम्बन्धी स्यात्, तदा तस्याभिधेयत्वं युज्येत । परं स्वरूपसंख्या-विषयादिना व्यङ्ग्येऽर्थे वाच्यार्थात् भिन्ने सति यदि तयोरेकत्वं तदा नीलपीत-योरपि परस्परं कश्चिद् भेदो न स्यात् ।

अनेन विवेचनेनैतत् सर्वथा सुस्पष्टं सम्पद्यते यद् वेदवादिना मीमांसकेनापि व्यापारोऽसौ ध्वननात्माऽवश्यमभ्युपगन्तव्यः । नासौ व्यापारोऽभिधायां तात्पर्य-वृत्त्यां वान्तर्भवति । अभिधातात्पर्यवृत्तिविलक्षण एवासौ व्यापारो व्यञ्जनाभिध इत्यलं विस्तरेण ।

——:०:——

## अष्टमोऽध्यायः

# व्यञ्जनाविषये लक्षणावादिमतसमीक्षा

ध्वनिकारेण ध्वन्यालोकस्यारम्भे ध्वनेस्त्रयः प्रधानविप्रतिपत्तिकाराः प्रोक्ताः। तेषु ये ध्वनिं लक्षणायामन्तर्भावयन्ति, ते भाक्ता ध्वनिविरोधिनः[1]। भक्तिशब्दो लक्षणापरपर्यायः[2]। अतो ये भक्तिं लक्षणां भजन्ति ते भाक्ता उच्यन्ते। भाक्तानां मते शास्त्रसिद्धा लक्षणैव व्यङ्ग्यमर्थं द्योतयितुं प्रभवतीति ध्वनेर्लक्षणायामन्तर्भावाल्लक्षणाव्यतिरिक्तो व्यञ्जनाव्यापारो निष्प्रयोजन एव।

यद्यप्यानन्दवर्धनाचार्येण ध्वनिस्थापनप्रसङ्गे ध्वनिप्रतिद्वन्द्वी भाक्तवादोऽयं वैशद्येनोपस्थापितः, परं तथापि तेन भक्तिपक्षपोषका आचार्या शृङ्गग्राहिकया न निर्दिष्टाः। केवलं **भाक्तमाहुस्तमन्ये**[3] इत्यनेन भाक्तवादं निर्दिशता ध्वनिकारेण नित्यप्रवृत्तवर्तमानापेक्षया आहुरिति यल्लटः प्रयोगः कृतस्तेनेदं प्रतीयते यद् ध्वनिविरोधे महता संरम्भेणोत्थितोऽयं भाक्तवादो नोपकल्पितमात्र एव अपितु परम्परया प्रवर्तित आसीत्।[4] अत एवायं नवोदितं प्रतिद्वन्द्विनं ध्वनिं स्वशरीरेऽन्तरभावयत्।

---

१. भाक्तमाहुस्तमन्ये।
आनन्दवर्धनः, ध्वन्यालोकः, १,१

२. भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यते इति भक्तिर्धर्मः, अभिधेयेन सामीप्यादिः, तत आगतो लाक्षणिकोऽर्थः गुणसमुदायवृत्तेश्च शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः, तत आगतो गौणोऽर्थो भाक्तः। प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः, तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च, मुख्यस्य चार्थस्य भङ्गो भक्तिरिति एवं मुख्यार्थबाधा निमित्तं प्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति।
—शास्त्री, एस० कुप्पुस्वामी, आनन्दवर्धन—ध्वन्यालोक लोचनटीका, पृ० ६२-६४

३. आनन्दवर्धन—ध्वन्यालोकः, १,१

४. भाक्तवादस्त्वविच्छिन्नः पुस्तकेष्वित्यभिप्रायेण 'भाक्तमाहु'रिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम्।
तत्रैव, पृ० ६२

आनन्दवर्धनात् पूर्ववर्तिनां भामहादीनामलङ्कारग्रन्थानामनुशीलनेन भक्तेः महत्त्वं पुष्टं भवति । यतोहि—

**शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च**[1] इत्यनेन **भट्टोद्भटेन**, **साहश्यात्लक्षणा वक्रोक्तिः**[2] इत्यनेन **वामनेन** च लक्षणामङ्गीकृत्य काव्ये तच्चमत्कारोऽभ्युपेतः । अतो वामनादीनां लक्षणामार्गावगाहित्वं स्पष्टं भवति । परतो मुकुलभट्टेन भक्तिपक्षे दृढः सम्प्रत्ययः प्रदर्शितः, ध्वनिश्च लक्षणाया-मन्तर्भावितः[3] । विद्याधरादीनामाचार्याणां वचनप्रामाण्यात्[4] कुन्तकाचार्यस्यापि भक्तिपक्षानुवर्तित्वं स्पष्टं भवति । एवं ध्वनिं ध्वंसयितुं भाक्तवादोऽयं महता पराक्रमेण समुदतिष्ठत् ।

साम्प्रतं भाक्तानां मतं प्रस्तूयते । ध्वनतीति ध्वन्यत इति वा ध्वननमिति वा यदि ध्वनिस्तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित्[5] इति वदन्तो लक्षणावादिनो लक्षणाव्यतिरिक्तं व्यञ्जनोपाह्वं व्यापारान्तरं सर्वथा विप्रतिपद्यन्ते । अयं भावः । अभिधानशक्तेः शब्दाश्रयत्वादवगमनशक्तेर्ध्वनेस्तु शब्दार्थोभयाश्रयत्वाद्युक्त एवाभिधाव्यञ्जनयोर्भेदः । परं गुणवृत्तिस्तूपचार-लक्षणा शब्दार्थोभयाश्रया भवतीति व्यञ्जनाव्यापारस्य गुणवृत्तेर्व्यतिरेको न शक्योपपादः । तद्यथा—**गङ्गायां घोषः** इत्यत्र प्रतीतिपथमुपयातस्तटरूपो लक्ष्योऽर्थः साक्षात् गङ्गाशब्देन नाभिधीयते । परं गङ्गाशब्दाभिहितप्रवाहरूपशक्यार्थ-व्यवहिता तटरूपस्य लक्ष्यार्थस्य प्रतीतिर्भवति । अतो व्यञ्जनाव्यापारवल्लक्षणा-व्यापारस्यापि शब्दार्थोभयाश्रयत्वं सिद्धमेव । ध्वनतीति व्युत्पत्त्या यच्छब्दस्य व्यञ्जकता ध्वनिवादिभिः प्रोच्यते, तदपि नोपचरितगङ्गादिशब्दातिरेकिणी, यच्च ध्वन्यत इति व्युत्पत्त्या व्यङ्ग्यार्थस्य ध्वनित्वं प्रतिपाद्यते, तदपि नोप-चरिततटाद्यर्थविविक्तम्, यच्च ध्वननं ध्वनिरिति व्युत्पत्त्या सर्वव्यापाराति-

---

१. ध्वन्यालोकलोचनटीका, पृ० ६८

२. वामनः, काव्यालङ्कारसूत्रवृत्तिः ४,३८

३. लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य विद्यते इति ।

—मङ्गेशः, रामकृष्णतैलङ्गः, मुकुलभट्ट अभिधावृत्तिमातृका, पृ० २१

४. एतेन यत् कुन्तकेन भक्तावन्तर्भावितो ध्वनिस्तदपि प्रत्याख्यातम्

त्रिवेदी के० पी०, विद्याधर-एकावली, पृ० ५२

५. शास्त्री, एस० कुप्पुस्वामी, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोकलोचन-टीका, पृ० ६६

शायी व्यञ्जनाह्वो व्यापारः सम्प्रतिपन्नस्तदपि नोपचारवृत्तिं लक्षणामतिक्राम्यतीत्यतो यन्नानाविधं ध्वनेः स्वरूपं प्रोक्तं तन्नोपचरितशब्दार्थव्यापारोल्लङ्घीति सम्प्रधार्यम् । मुख्ये ह्यर्थेऽभिधैवेति सर्ववादिसम्मतं दर्शनम् । अतोऽमुख्य एवार्थो व्यञ्जनया प्रत्याय्यः । नान्यस्तृतीयः प्रकारोऽर्थस्य । अमुख्यमर्थञ्च लक्षयितुं भक्त्यपरपर्याया लक्षणैव प्रगल्भत इति तद्व्यतिरिक्तो नासौ ध्वननावगमनाद्यपरपर्यायो व्यञ्जनाभिधोऽतिरिक्तो व्यापारोऽभ्युपेयः । तथाहि **गङ्गायां घोषः** इत्यस्मिन्पूर्वोक्त उदाहरणे प्रवाहरूपस्यार्थस्य मुख्यत्वादभिधाबोध्यत्वं सर्वसम्मतम् । अनन्तरं यथा लक्षणया मुख्यस्तटरूपोऽर्थो लक्ष्यते तथैव तदतिरिक्तोऽन्यः सर्वोऽर्थोऽपि तथैव प्रत्याययितुं शक्यते । अत एवामुख्यार्थप्रतिपादके लक्षणानाम्नि व्यापारे जाग्रति, ध्वननलक्षणस्य व्यापारस्याश्रयणं निर्निबन्धनमेव । तथा चानुमानमपि—

**(व्यञ्जना) विमतो व्यापारो, गुणवृत्तिः, अमुख्यार्थगोचरत्वात्, 'गङ्गायां घोषः' इतिवाक्यस्य गङ्गादिशब्दव्यापारवदिति ।**

अयमाशयोऽत्र पूर्वपक्षिणः । ननु मा भूद् व्यङ्ग्योऽर्थोऽभिधाया विषयो लक्षणया त्वसावर्थः प्रत्याययितुं शक्य एव । अतो व्यङ्ग्यार्थो न लक्ष्यार्थातिरेकी कश्चिदिति सम्प्रधार्यम् । तथाहि—व्यङ्ग्यस्याभिधेयत्वनिराकरणप्रसङ्गे व्यक्तिवादिना व्यङ्ग्यस्य नानात्वं प्रकरणादिसापेक्षत्वञ्चाभिधेयार्थात्तद्विभेदकं यदुदीरितम्, तत्सर्वं लक्ष्येऽर्थेऽप्युपपद्यते । अतो व्यङ्ग्यार्थो लक्ष्यार्थमतिशयानस्तावन्न दृश्यते । तद्यथा—**रामोऽस्मि सर्वं सहे, रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्, रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्** इत्यादौ रामशब्दस्य लक्ष्यार्थः क्वचित् खरदूषणनिहन्ता रामः, क्वचिच्च सकलकष्टसोढा राम इति व्यङ्ग्यार्थवन्नानारूपो दृश्यते । यथा च ध्वनिः संलक्ष्यासंलक्ष्यक्रमव्यङ्ग्याभ्यां बहुधा भिन्नस्तद्वल्लक्ष्यार्थोऽपि क्वचिद्वाच्यार्थस्योपादानात् क्वचिच्च तत्तिरस्कारादुपादानरूपो लक्षणरूपश्चेति विभक्तो दृश्यते । लक्ष्यार्थोऽपि व्यङ्ग्यार्थवन्न शब्दाधीन एव । प्रत्युतासावपि मुख्यार्थबाधादिसहकारिसामग्रीमपेक्षमाणो व्यङ्ग्यार्थवदर्थायत्तो दृश्यते । यथा वाच्यार्थः साक्षाच्छब्दात् प्रतीयते, न तथा लक्ष्यार्थः । प्रत्युत शब्दाभिहितमुख्यार्थस्य वाक्येऽन्वयेऽनुपपन्ने सति वाच्यार्थाल्लक्ष्यार्थोऽवगम्यते, अतोऽसावपि व्यङ्ग्यार्थवदर्थोत्थितः, तात्पर्यानुपपत्तेर्लक्षणाया बीजत्वाल्लक्ष्यार्थोऽपि व्यङ्ग्यार्थवत्तात्पर्योपपत्तये प्रकरणादिकमुपाधिमपेक्षमाणस्तिष्ठति । यतो हि लक्षणायाः प्रवर्तिका तात्पर्यानुपपत्तिः प्रकरणादिसहकारिसामग्रीज्ञानमन्तरेण नोत्तिष्ठति । अतो लक्ष्यार्थोऽपि

व्यङ्ग्यार्थवदौपाधिको दृश्यते । एवं लक्ष्यव्यङ्ग्यार्थयोस्तुल्ययोगक्षेमत्वात् यल्लक्ष्यार्थविषयो व्यापारः स एव व्यङ्ग्यार्थोन्मुखीभवतीति सिद्धमेव ध्वनेर्लक्षणाऽभिन्नत्वम् ।

नवीना वृत्तिर्व्यञ्जना शास्त्रकारैरननुज्ञातेत्यतोऽपि नासावाश्रयणीया । तद्वैपरीत्ये लक्षणाभिधावन्मीमांसकैस्तार्किकैश्चाभ्युपगता । अतः शास्त्रसिद्ध-लक्षणावृत्तिसद्भावे किमनेनादृष्टाश्रुतपूर्वेण व्यञ्जनाव्यापारेणेति परम्परा-नुयायिभिर्लक्षणावादिभिरास्थीयते ।

अत्रोच्यते । यथा व्यञ्जना अभिधातात्पर्यवृत्तिभिन्ना वृत्तिस्तथैव तस्या लक्षणायामपि नान्तर्भावः । तथाहि— मुख्यार्थानन्वयप्रभवेयं लक्षणा सामीप्यादि-सम्बन्धनिबन्धना निमित्तं किञ्चित् प्रयोजनत्वेनावश्यमपेक्षते । अन्यथा स्वायत्ते **गङ्गायास्तटे घोषः** इति शब्दप्रयोगे किमित्यवाचकं पदं **गङ्गायां घोषः** इति प्रयुज्यते । स चानन्वितः प्रयोगः **गङ्गायां घोषः**, **सिंहो वटुरित्यादौ** शैत्यपावनत्व-शौर्यातिशयत्वादिप्रयोजनजातप्रत्यायनार्थमेव । नहि तत् प्रयोजनं वाचकशब्देना-भिधातुं पार्यते । नापि च निष्प्रयोजनो लक्षकः शब्दः सुधीभिः समुपास्यते । यथोक्तम् **शर्करया यदि पित्तं शाम्यति, तर्हि किं कटुकौषधपानेन** । अतः प्रयोजनमेव लक्षणायाः प्रवर्त्तकम् । तद्विना लक्षणाऽनुत्थानात् । प्रयोजनञ्च शैत्यपावनत्वादिकं लक्षणाप्राणायितं लक्षणाऽगम्यम् । प्रयोजने सति लक्षणा न तं गोचरीकर्तुं प्रभवति यत् प्रयोजनं विनासावुत्थातुं न प्रभवति । मुख्यार्थबाध-प्रभवा सामीप्यादिसम्बन्धनिबन्धनमपेक्षमाणा लक्षणाऽन्वयमुपपाद्योपरता भवति । नहि स्वविषयभूतमन्वयसाधकं लक्ष्यमर्थमतिक्रम्य शैत्यपावनत्वादिकं प्रयोजनं स्वप्रवृत्तिप्रयोजकीभूतं प्रतिपादयितुमसौ प्रगल्भते । अतो लक्षणा लक्ष्यार्थविषय एव व्यापारो न व्यङ्ग्यार्थविषयः । यदि लक्षणायां प्रयोजनं नेष्यते तर्हि निष्प्रयोजनयाऽनया लक्षणया काव्ये किञ्चारुत्वम्, तस्या अभिधानतिरेकात् । प्रयोजनशून्या रूढिनिबन्धना लक्षणाऽभिधापर्यवसायिन्येव । यथोक्तं कुमारिल-भट्टेन——

**निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।**
**क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः**[1] **।।**

एवं प्रयोजनं लक्षणायामवश्यमेषणीयम् । तत्प्रयोजनञ्च न लक्षणाप्रत्याय्यम् । अतो लक्षणावादिनापि प्रयोजनप्रतिपत्त्यर्थं लक्षणाव्यतिरिक्तः कश्चिच्छब्द-

---

१. कुमारिलभट्टः, तन्त्रवार्त्तिकम्, ३, १,८

व्यापार ऊरीकार्य एव ।[1]

ननु यस्य प्रयोजनस्य कृते तुर्यकक्ष्यानिवेशी शास्त्रोक्तप्रसिद्धाभिधादि-व्यापारव्यतिरिक्तो व्यञ्जनाख्यो व्यापारोऽभ्युपगम्यते ध्वनिवादिभिस्तदेव प्रयोजनं लक्षणा तथा लक्षयिष्यति यथेयं तटादिकमर्थं लक्षयतीति किमनेन नूतनेन व्यापारेणादृष्टाश्रुतपूर्वेणेति चेन्न, प्रयोजनस्य लक्ष्यत्वेनावस्थानाभावात् । अमुख्यार्थविषयो लक्षणाव्यापारो मुख्यार्थबाधादिनिमित्तत्रितयमपेक्षमाणः प्रवर्तत इति भवतोऽपि लक्षणावादिनोऽनुमतम् । अतो यत्र न मुख्यार्थबाधस्तत्र भवतां लक्षणा नावतरितुं प्रभवति । एवं गङ्गाशब्दस्य प्रवाहरूपिणोऽर्थस्य घोषपदार्थेन सहानन्विते सति, यथा तीरादावर्थे लक्षणा सम्भवति, न तथा गङ्गाशब्दाद् ध्वननमहिम्ना विज्ञाते शैत्यपावनत्वाद्यर्थे प्रयोजनरूपे । यदि लक्षणावेद्यं प्रयोजन-मित्याहोपुरुषिकयाभिधीयते, तर्हि लक्षणावगमयितव्ये प्रयोजने मुख्यार्थबाधा-दिकं लक्षणानिबन्धनं योजनीयम् । शैत्यपावनत्वादिप्रतीतिर्यदि लाक्षणिकी, तर्हि तटरूपोऽर्थो मुख्यः स्वीकार्यः । अनन्तरञ्च तटरूपिणो मुख्यार्थस्य शैत्य-पावनत्वादिना लक्ष्यार्थेन सह कोऽपि सामीप्यादिरूपः सम्बन्धोऽन्वेषणीयः । ततश्च शैत्यपावनत्वादिलक्ष्यार्थस्य प्रत्यायने प्रयोजकं किञ्चित् प्रयोजनान्तरमवश्यं वक्तव्यं भवति ।

एतत्त्रयं लक्षणानिबन्धनं प्रयोजनस्य लक्षणीयतायां नोपपद्यत इति कृत्वा-ऽनुत्थानोपहतः पूर्वपक्षः । अत्रायमभिसन्धिः । तटरूपिणो मुख्यार्थस्य शैत्यपावनत्व-रूपेण लक्ष्यार्थेन सहानन्वयाभावान्न मुख्यार्थबाधः । नापि च तटरूपार्थस्य शैत्यपावनत्वाद्यर्थेन सह कश्चित् सम्बन्धो दृग्गोचरो भवति । सम्बन्धनिबन्धना च लक्षणा नासम्बद्धं कञ्चनार्थं कदापि लक्षयितुं प्रभवति । यथा प्रवाहार्थ-काद्गङ्गाशब्दात् सामीप्यसम्बन्धसम्बद्धस्तटरूपोऽर्थो लक्षितो भवति, न तथा तीररूपेणार्थेन सह सम्बद्धः शैत्यपावनत्वादिकोऽर्थो लक्ष्यते । नहि शैत्यपावन-त्वादिप्रयोजनजातस्य तीराद्यर्थेन सह कश्चन नियतः सम्बन्धो विभाव्यते ।

---

२. (क) सप्रयोजनायाञ्च लक्षणायां तदतिरिक्तो व्यापारोऽवश्यमङ्गीकार्यः, तथा च सति प्रयोजने लक्षणा । तच्च मुख्यार्थबाधादिनिमित्तवत् प्रमाणा-न्तराद् बोध्यम् । तदर्थमेव लक्षणाशब्दप्रयोगात् ।
—मङ्गेशतैलङ्गरामकृष्णः, मुकुलभट्ट—अभिधावृत्तिमातृका, मम्मट—शब्दव्यापारविचारः, पृ० ५

(ख) किञ्च प्रयोजने लक्षणीये लक्ष्यत्वादेव प्रयोजनं मार्गणीयम् । न च तदस्ति नापि युज्यते वक्ष्यमाणरीत्या अनवस्थाप्रसङ्गात् । एवं तावत् त्रितयाभावात् प्रयोजने लक्षणा न युज्यते । —रुचककृतः सङ्केतः, सुधांकरः, मम्मट-काव्य-प्रकाशः, परिशिष्टम् पृ०४

**गङ्गातटे घोषः** इत्यनभिधाय **गङ्गायां घोषः** इत्यनन्वितं वचनं किं प्रयुज्येत । किञ्च, शैत्यपावनत्वादीनां लक्ष्यत्वे प्रयोजनान्तरं किञ्चिद् वक्तव्यं भवति, तच्च न सम्भवति । असत्यपि प्रयोजने यदि प्रयोजनान्तरकल्पना क्रियते, तदा तस्यापि प्रयोजनस्य प्रयोजनान्तरेऽन्वेष्टव्ये महत्यनवस्था प्रसज्येत ।

न च प्रयोजनप्रतिपत्तिर्न भवतीति वाच्यम्, गङ्गाशब्दादेव तत्प्रतीतेः प्रयोजनस्य सर्वानुभवसिद्धत्वात् । सति च प्रयोजनरूपसर्वानुभवसिद्धार्थप्रत्यायके शब्दे तत्र शब्दस्यैवाभिधातात्पर्यलक्षणातिलङ्घी कश्चन व्यापार उपादेयः । अभिधातात्पर्यादिवृत्त्यशक्यसमर्प्यं प्रयोजनजातं मुख्यार्थबाधादिनिमित्तनिरपेक्षः शब्दो द्योतयितुं प्रभवतीति तत्र व्यापारेण केनचिद् भाव्यमेव । स च व्यापारः पूर्वोक्तव्यापारत्रितयं न्यक्कुर्वन् ध्वननावगमनादिसोदरव्यपदेशनिरूपितो व्यञ्जनोपाह्व एव[1] ।

ननु मुख्यार्थबाधादिलक्षणानिबन्धनानुपपत्तौ ध्वनिवादिना शैत्यपावनत्वादिधर्माणां यल्लक्ष्यत्वं प्रत्याख्यातं तन्न विरुद्धम्, परन्तु लक्षणा न केवलं तटमेव लक्षयत्यपितु शैत्यपावनत्वादिधर्मविशिष्टं तटमित्यनेन प्रकारेण लक्षणावगम्यमेव प्रयोजनं युक्तं, तेन च तत्प्रत्यायनार्थं व्यञ्जनाव्यापारोऽनाश्रयणीय इति चेन्न, **ज्ञानस्य विषयो ह्यन्यो फलमन्यदिति**[2] प्रामाणिकवचनापलापप्रसङ्गात् । अयमाशयः । मीमांसकैस्तार्किकैश्च प्रत्यक्षादिज्ञानस्य तज्जन्यस्य फलस्य च भेदः स्वीकृतः । **इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति** तल्लक्षणं नैयायिकैः

---

१.(क) यदि च सिंहो वटुरिति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः । उपचारेण करिष्यतीति चेत्, तत्रापि प्रयोजनान्तरमन्वेष्टव्यम्, तत्राप्युपचारेऽनवस्था । अथ न तत्र स्खलद्गतित्वं, तर्हि प्रयोजनेऽवगमयितव्ये न लक्षणाख्यो व्यापारस्तत्सामग्र्यभावात् ।

पट्टाभिरामः, आनन्दवर्धन—ध्वन्यालोकः, लोचनटीका, पृ० २७५-७६

(ख) अपि च सम्बन्धनिबन्धना लक्षणा प्रयोजने प्रवर्तितुं नार्हति । तटादेर्लक्ष्यस्य पावनत्वादेश्च प्रयोजनस्य सम्बन्धाभावात् । गङ्गागता हि पावनत्वादयस्तटे प्रतिपाद्याः, न स्वगताः, स्वगतानां स्वप्रतिपाद्यताऽनर्हत्वात् । न च गङ्गागतपावनत्वादिभिस्तटेन कश्चित् सम्बन्धः । अत एव तटस्थे लक्षणा शुद्धेति प्राग्दूषितम् । किञ्च प्रयोजने लक्षणीये लक्ष्यत्वादेव प्रयोजनं मार्गणीयम् । न च तदस्ति नापि युज्यते ।

उद्धरणम्, रुचककृतः काव्यप्रकाशसङ्केतः ।

शिवप्रसादः, मम्मट-- काव्यप्रकाशः, श्रीधरी टीका पृ० ४०

२. मम्मटः, काव्य-प्रकाशः२,१८

प्रोक्तम् । तथा सति मीमांसकमते प्रत्यक्षादेर्नीलादिविषयस्तत्फलं तु प्रकटता । तार्किकमते प्रत्यक्षादेर्विषयस्यानुव्यवसायापरपर्याया संवित् फलम् । अयं भावः । मीमांसकमते कम्बुग्रीवादिमति घटपदार्थे दृग्गोचरतामुपयाते प्रथमं प्रत्यक्षस्य विषयो घटः, अनन्तरं ज्ञातो घट इति ज्ञानाद् घटज्ञानेन तस्मिन् घटे ज्ञातता-परपर्याया प्रकटता जायते[1] । तार्किकमते घटज्ञाने जाते घटमहं जानामीत्यनु-व्यवसायापरनाम्नी संवित्तिर्जायते । द्वयोर्मतयोरयं भेदः । मीमांसकमते घटप्रत्य-क्षानन्तरं तत्फलभूता ज्ञातता घटवस्तुविषयिणी । परं तार्किकमते घटप्रत्यक्षा-नन्तरं तत्फलभूतोऽनुव्यवसायो बोद्धृविषयः । एवं मीमांसकमते ज्ञातता वस्तुधर्मः, तार्किकमतेऽनुव्यवसाय आत्मधर्मः । परं द्वयोर्मते ज्ञानफलयोः पूर्वापरभावेन प्रतीतेर्भेदः । तथासति प्रत्यक्षादिज्ञानविषयस्य घटादिकस्य तज्ज्ञानफलभूतस्य —मीमांसकमते **प्रकटतायाः**, तार्किकमते च **अनुव्यवसायस्य**—कालभेदेन प्रतीतौ न तयोरैक्यम् । प्रथमं प्रत्यक्षज्ञानस्य विषयो घटोऽनन्तरं घटज्ञानवानय-मिति घटविषयकज्ञानफलमुत्तरकालिकम् । अतः फलविषययोः पूर्वपश्चाद्भावेन प्रतीतौ न तयोरेककालावगाहित्वम् । तत एव लक्षणाज्ञानविषयभूतस्य तटस्य तज्ज्ञानफलभूतस्य शैत्यपावनत्वादिधर्मजातस्य पूर्वपश्चाद्भावेन प्रतीतौ न तयोरेकव्यापारगोचरत्वम् । अत एव लक्षणा स्वज्ञानविषयभूततटं लक्षयति, अनन्तरञ्च क्षीणायां तस्यां तज्ज्ञानफलभूतस्य शैत्यपावनत्वादिधर्मस्य प्रतीति-र्लक्षणाभिन्नेन व्यञ्जनाव्यापारेणैव भवति । लक्षणाज्ञानविषयभूतस्य तटस्य तत्फलरूपस्य च शैत्यपावनत्वादिकस्य मिथो भेदे सति लक्षणाया युगपत्तटप्रयो-जनौ बोधयितुमशक्यौ । तथा च प्रयोजनविषयो व्यापारो व्यञ्जनैवेति स्वीकृतं भवति[2] ।

---

१. घटादिविषये ज्ञाने जाते 'मया ज्ञातोऽयं घटः' इति घटस्य ज्ञातता प्रतिसं-धीयते, तेन ज्ञाने जाते सति ज्ञातता नाम कश्चिद् धर्मो जातः इति अनुमीयते । स च ज्ञानात् पूर्वमजातत्वात् ज्ञाने जाते च ज्ञातत्वात् अन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यते इति अवधार्यते ।

भण्डारकरः, देवदत्तरामकृष्णः, केशवमिश्र—तर्कभाषा, पृ० ५४

२. प्रत्येयविषयनिष्ठशब्दव्यापाररूपा हि लक्षणा, तस्या गर्भीकृत (प्रयोजन) विषयायाः प्रयोजनविषये कोऽवसरः प्रयोजनस्य ? लक्षणाविषयत्वेन गर्भीकृतत्वभङ्ग्या हि विषयस्य प्रयोजनं, न तु प्रयोजनं विषयः । तत्तु प्रत्येयतया विषयत्वेन विचार्यमाणं तदतिरिक्तव्यापारान्तरविषयो भवितुमर्हति, उत्तरकालिकत्वात् । तच्च व्यापारान्तरं व्यञ्जनमेव ।

—उद्धरणम्, रुचककृतकाव्यप्रकाशसङ्केतः, पृ० ६

भट्टाचार्यः, शिवप्रसादः, मम्मट—काव्यप्रकाशः, पृ० ४१

किञ्च, भक्तिव्यक्त्योर्यदि ताद्रूप्यं तर्हि पृच्छामः किं पर्यायवत्तयोस्ताद्रूप्यं यथा घटकलशादीनां शब्दानां पर्यायतया तादरूप्यम्, उत भक्तिर्ध्वनेर्लक्षणमिति कृत्वा तयोरैक्यम्, अथवा भक्तिर्ध्वनेरुपलक्षणमिति हेतोस्तयोरभेदः ? एवं भक्तिव्यक्त्योरभेदे एते त्रयः पक्षाः सम्भवन्ति।

(क) तत्र भक्तिव्यक्त्योः पर्यायवत्ताद्रूप्यपक्षं निराकुर्मः । तथाहि— पृथिवीमेदिनीधराधरणीप्रभृतीनां शब्दानां विषयो यथा पृथिवीरूपोऽर्थ एव सामान्यस्तेषां पर्यायत्वेनावस्थानात्, न तद्वद् भक्तिव्यक्त्योः पर्यायवत्तादात्म्यम् । तयोर्भिन्नविषयत्वात्, भिन्नस्वरूपत्वाच्च ।

उपचारमात्रं भक्तिः, ध्वननस्वरूपा व्यक्तिः । व्यञ्जनाया विषयास्तु रसादयोऽलङ्कारा व्यङ्ग्यरूपञ्च वस्तु । परं लक्षणाया विषयस्तु लक्ष्योऽर्थ एव । तत्र रसादिविषये तु लक्षणा स्वप्नेऽपि प्रवर्तितुं न प्रभवति । नापि च व्यङ्ग्यभूता अलङ्कारास्तद्गोचराः । अतो लक्षणा-व्यञ्जनयोर्विषयभेदः स्पष्ट एव ।

स्वरूपभेदोऽपि द्वयोरधोलिखितप्रकारेण द्रष्टव्यः—

**परिम्लानं पीनस्तनजघनसङ्गादुभयत-**
**स्तनोर्मध्यस्यान्तः परिमलिनमप्राप्य हरितम् ।**
**इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः**
**कृशाङ्ग्याः सन्तापं वदति बिसिनी-पत्रशयनम् ॥**[1]

इत्यत्र वदतिपदमन्वयेऽपर्यवस्यल्लक्षणाया प्रकाशनादिकं सम्बद्धमर्थान्तरं लक्षयति । अत्र सत्यपि लक्षणाप्राणायिते उपचारे व्यङ्ग्यव्यञ्जकभावविरहे न व्यञ्जना । यद्यपि कर्मणि कुशलः इत्यादौ प्रसिद्ध्यनुरोधाल्लक्षणाऽऽश्रीयते, परं तथापि कुशलादिपदानां चतुररूपिण्यर्थे रूढत्वात् प्रयोजनबन्ध्योपचारमात्रपर्यवसितेयं लक्षणा । **वदति बिसिनी-पत्रमित्यादौ** पत्रशय्याया वदनक्रियाऽसम्भवे मुख्यार्थबाधे सति लक्षणा प्रवर्तते परं वदतीत्यादीनां प्रकाशाद्यर्थे रूढत्वादेवंविधपदप्रयोगेण च कस्यचित् प्रयोजनस्यानुन्मेषात् प्रयोजननिबन्धना व्यञ्जना नावतरति । मुख्यार्थभङ्गादीनां लक्षणानिबन्धनानामुपपत्तौ, वदतीत्यादेर्लक्षणावगाहित्वमशक्यशङ्कम्, परन्तु निधानवद्गूढस्य प्रयोजनस्यासत्कल्पत्वाद् व्यञ्जनांघ्रि तत्र न निदधाति । अतएव 'वदति बिसिनीपत्रशयनमि'-त्यादौ **वदति** इति पदस्य लाक्षणिकत्वं तु युज्यते, न तु व्यञ्जकत्वम् । तथा सति भक्तेरुपचारमात्रत्वात् व्यञ्जनायाश्चातथात्वात् व्यङ्ग्यव्यञ्जकभावप्राणत्वाच्च

---

१. शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १४३

द्वयोर्व्यापारयोः स्वरूपभेदः स्पष्ट एव ।[1] एवञ्च लक्षणाया मुख्यार्थबाधेनोत्थानात् व्यञ्जनायाश्च तदनपेक्षणात्, लक्ष्यार्थस्य वाच्यार्थेन सह सदैव सामीप्यादिनियतसम्बन्धेनावस्थानात् व्यङ्ग्यार्थस्य च वाच्यार्थेन सहानियतसम्बन्धात्, लक्षणायाः प्रयोजनमन्तरेणापि प्रवृत्तेः परं व्यञ्जनायाः प्रयोजनं विनाऽनुत्थानात्, द्वयोर्व्यापारयोर्विषयस्वरूपभेदाद् भिन्नयोः सतोस्तयोः पर्यायवत्तादूरूप्यपक्षः नोपमर्दं क्षमते ।

(ख) नापि भक्तिर्व्यक्तेर्लक्षणम् । अतिव्याप्त्यव्याप्तीतिलक्षणदूषणग्रस्तत्वात् । यावल्लक्ष्यवृत्तित्वं लक्षणम् । पदार्थतत्त्वज्ञानं लक्षणस्य प्रयोजनम्, व्यावृत्तिर्व्यवहारो वा । यथा—गन्धवत्त्वं पृथिवीलक्षणम् । तत्र पृथिवीलक्षणे गन्धवत्त्वं व्यतिरेकिहेतुः । तद्यथा—विवादाध्यासितं द्रव्यं पृथिवीति व्यपदिश्यते गन्धवत्त्वात् । यत्पुनर्न पृथिवी न तद्गन्धवत्त्वम्, यथा अबादि । गन्धवती चेयम् । तस्मात् पृथिवी । एवं केवलव्यतिरेकिहेतुविशेष एव हि लक्षणम् । अतो लक्षणस्य शुद्धत्वे हेतोरपि पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वेन शुद्धतापेक्ष्या । यत्र हेतोः पक्षासिद्धिस्तत्रासम्भवं लक्षणदूषणम् । यत्र च हेतोः सपक्षासत्त्वं तत्राव्याप्तिर्लक्षणदूषणम् । यत्र च हेतोः विपक्षे सद्भावस्तत्रातिव्याप्तिर्लक्षणदोषः ।

(i) तत्र भक्तेर्ध्वनिलक्षणेऽतिव्याप्तिदोषः । यथा शृङ्गित्वस्य गोर्लक्षणे, महिष्याद्यलक्ष्यवृत्तित्वाद् विपक्षे सद्भावः, तेन च लक्ष्यमतिक्रम्यालक्ष्येऽपि लक्षणानुप्रवेशात् शृङ्गित्वं गोलक्षणमतिव्याप्तिदूषणग्रस्तं सद्धेयम् । भक्तिर्यदि व्यक्तेर्लक्षणम्, तदा **वदति बिसिनी-पत्रशयनम्** इत्यत्रातिव्याप्तिः ।[2] यतो

---

१. रूपभेदस्तावदयम्—यदमुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा । व्यञ्जकत्वं तु मुख्यतयैव शब्दस्य व्यापारः । अयं चान्यः स्वरूपभेदः—यद्गुणवृत्तिरमुख्यत्वेन व्यवस्थितं वाचकत्वमेवोच्यते । व्यञ्जकत्व तु वाचकत्वादत्यन्तं विभिन्नमेव । अयं चापरो रूपभेदः—यद् गुणवृत्तौ यदार्थोऽर्थान्तरमुपलक्षयति तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते । यथा 'गङ्गायां घोषः' इत्यादौ । व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत् ।

तत्रैव, पृ० ४२३-३४

२. तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात् । यत्र हि व्यङ्ग्यकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते ।

शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १४२

हि प्रकाशाद्यर्थे रूढस्य वदति इति पदस्य प्रयोगे न किञ्चित् व्यञ्जनावेद्यं प्रयोजनमत्र दृश्यते । अतो बिसिनीपत्रशयनस्य मुखभाषणरूपार्थानुपपत्तौ मुख्यार्थबाधनिबन्धना लक्षणा त्वत्र स्फुटा, परं प्रयोजनस्यासद्भावे न व्यञ्जना। अतः स्वार्थादन्यत्रार्थे रूढाः प्रवीणादयः शब्दा लक्षकत्वेन तु गृह्यन्ते, न तु व्यञ्जकत्वेन ।[1] भक्तेर्व्यक्तिलक्षणे सति कुशलद्विरेफद्विकादिरूढशब्देष्वपि ध्वनित्वं प्रसज्येत । तच्चानिष्टम् ।

(ii) भक्तेर्ध्वनिलक्षणेऽव्याप्तिलक्षणदोषोऽपि स्पष्टः । लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । यथा गोः कपिलत्वस्य लक्षणत्वाङ्गीकारे शुक्लगवि कपिलत्वस्याभावेन अव्याप्तिः ।[2]

अतएव कपिलत्वं गोर्लक्षणं शुक्लगोरूपलक्ष्यैकदेशावृत्तित्वात् सपक्षेऽसत्त्वमव्याप्तिलक्षणदूषणग्रस्तम् । भक्तेर्व्यक्तिलक्षणेऽयं द्वितीयो लक्षणदोषोऽपि पुरः स्फुरति। तथाहि—अभिधामूले ध्वनौ मुख्यार्थबाधादिलक्षणानिबन्धनानामभावेऽपि व्यङ्ग्यव्यञ्जकभावे ध्वनिः । परं लक्षणोत्थापकहेतुत्रयाभावात् तत्र न लक्षणाया गन्धोऽपि । अभिधामूले ध्वनौ स्वार्थो वाच्यात्मा स्वशब्दानभिधेयव्यङ्ग्यार्थस्य प्रत्यायने उपायरूपेणावस्थितो भवति । परं लक्षणायां **गङ्गायां घोषः** इत्यादौ गङ्गापदस्याभिधेयार्थः प्रवाहरूपस्तटरूपस्य लक्ष्यार्थस्य प्रतीतौ नोपादीयते । अतः स्वार्थस्याविवक्षायां तत्र लक्षणात्मिकोपचारवृत्तिः । एवं भक्तिर्यदि ध्वनेर्लक्षणम्, तर्हि विवक्षितान्यपरवाच्यध्वनेर्ध्वनित्वं व्याहतं भवेत् लक्षणस्य तत्राप्रसरणात् । एवं भक्तेर्विवक्षितान्यपरवाच्यध्वनिलक्ष्यैकदेशावृत्तित्वाल्लक्ष्यैकदेशावृत्तित्वमव्याप्तिर्नाम लक्षणदूषणम् ।[3] तस्मादतिव्याप्त्यव्याप्तिलक्षणदूषणग्रस्तत्वान्न भक्तिर्ध्वनेर्लक्षणम् ।[4]

---

१. रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ।।
आनन्दवर्धनः, ध्वन्यालोकः, १,१६

२. झलकीकरः, भीमाचार्यः, न्यायकोशः, पृ० १७१

३. तथाहि लक्षणस्य केवलव्यतिरेकित्वादेवं किलानुमानरचना । व्यक्तिरितरेभ्यो भिद्यते, भक्तिमत्त्वात् । यत्पुनरितरेभ्यो न भिद्यते न तद्भक्तिमत् यथाभिधादिः । तथा च सत्यभिधैकमूलध्वनौ भक्तेरभावाद् भागासिद्धो हेतुः ।

—त्रिवेदी, क० प्रा०, विद्याधर-एकावली, पृ० ४६

४. अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ।
आनन्दवर्धनः, ध्वन्यालोकः, १, १४

(ग) नापि भक्तिर्ध्वनेरुपलक्षणम् । उपलक्षणं तु कादाचित्को व्यावर्तकः धर्मः । तद्यथा—**काकवद्देवदत्तस्य गृहमिति** प्रयोगकालेऽपि गृहे काकासत्त्वेऽपि यदा कदाचित् काकासमवधानेऽपि पूर्वोपस्थितकाकस्मरणेन देवदत्तगृहं विज्ञायते इति काकस्योपलक्षणम् ।[1] अनया दिशा यद्यप्यविवक्षितवाच्यध्वनौ भक्तिरस्ति तथापि न तदवशिष्ट एव ध्वनिः । तत्रापि प्रयोजनस्य व्यङ्ग्यत्वेनैव प्रतीतिर्नतु लक्ष्यत्वेन । भक्तिस्तूपलक्षणमात्रा न सर्वदा ध्वननमनुगच्छति । यथोपलक्षणेन विनाऽप्युपलक्षणीयस्य सिद्धिस्तथा भक्तिं विनापि विवक्षितान्यपरवाच्यध्वनौ व्यञ्जनासिद्धिः । अस्तु वा भक्तिर्ध्वनेरुपलक्षणम् । परमियता किं लक्षणा-वादिनः सिद्धम्, किं वा व्यक्तिवादिनो नष्टम् ? सर्वथा अभिधामूले ध्वनौ तु मुख्यार्थबाधाद्यभावात् भक्तिव्यतिरिक्तोऽन्यो व्यापारो मार्गणीय एव । लक्ष-णायामपि प्रयोजनप्रतीतिः सर्वदा ध्वननद्वारिकैवेति प्राक् निरूपितम् । किञ्चासंलक्ष्यक्रमव्यङ्ग्यध्वनौ लक्षणायाः का नाम सम्भावना ? तत्र तु सहृदयैकसमास्वाद्यस्य रसस्य चर्वणा व्यञ्जनानिबन्धनैव न तत्र मुख्यार्थ-बाधशङ्कापि । अतः संलक्ष्यक्रमव्यङ्ग्यध्वनौ तु कदाचिद् भक्तिरनुप्रविशेदपि, परं हृदयसंवादवशात्तन्मयीभवनयोग्यताग्राह्यो रसस्तु भक्तेः सर्वदा अविषय एव । विभावानुभावसंवेदनसमकालास्वाद्यस्य रसस्य चर्वणायां मुख्यार्थ-बाधादिलक्षणानिबन्धनस्य प्रवेशानर्हत्वात् । अतो भक्तिर्न ध्वनेरुपलक्षणम् ।

## मुकुलभट्टमतं तन्निराकरणञ्च

मुकुलभट्टाचार्येणापि व्यञ्जना विप्रतिपद्यते । लक्षणायाञ्च ध्वनिरन्त-र्भाव्यते ।[2] तन्मते शब्दस्याभिधाव्यापारो द्विविधो निरन्तरार्थविषयः सान्तरार्थ-निष्ठश्च ।[3] मुकुलभट्टस्य सान्तरार्थनिष्ठोऽभिधाव्यापार एव लक्षणा । अतस्तन् मते पूर्वोक्तव्यापारद्वयातिरिक्तस्यान्यस्य कस्यचिद्व्यापारस्यानवस्थानात् सर्वो ध्वनिर्लक्षणापरपर्याये सान्तरार्थनिष्ठे व्यापारेऽन्तर्दधाति ।

---

१. झलकीकरः, भीमाचार्यः, न्यायकोशः, पृ० १७१

२. लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य विद्यते । तैलंगमङ्गेशः रामकृष्णः, मुकुलभट्ट—अभिधावृत्तिमातृका, पृ० २१

३. एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च ।
तत्रैव, पृ० ४

मुकुलभट्टस्य लक्षणा वक्त्रादिसामग्र्यपेक्षयैवार्थमवगमयति ।[१] अतस्तेन वक्तृवाक्यवाच्या लक्ष्यार्थावगतौ निबन्धनत्वेन स्वीकृताः । यदि लक्ष्यमाणस्यार्थस्यावगतौ वक्त्रादीनां निबन्धनानामपेक्षा न स्यात्, तदा सर्वदा शब्दो लक्ष्यमर्थमवगमयेत् । परं नैतत्तथा । अतो वक्त्रादिसामग्र्यपेक्षयैव लक्ष्यमाणस्यार्थस्य प्रतीतिर्भवति । तथा च प्रकरणादिसहकारिसामग्रीमपेक्षमाणः सोपाधिको व्यञ्जनाव्यापारोऽपि लक्षणासहोदर एव । अतएव त्रिविधो वस्त्वलङ्काररसरूपो ध्वनिर्वक्तृवाक्यवाच्यनिबन्धनलक्षणान्तर्गतः । तद्यथा—

**दृष्टिं हे प्रतिवेशिनि, क्षणमिहाप्यस्मिन् गृहे दास्यसि**
**प्रायेणास्य शिशोः पिता न विरसा कौपीरपः पास्यति ।**
**एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं**
**नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥**[२]

अत्र चौर्यरतिरूपोऽर्थः साक्षात् शब्देन नाभिधीयते, प्रत्युत शब्दाभिहितादर्थाद् व्यज्यते । अतः प्रच्छन्नसुरतरूपार्थस्य गूढतायां वस्तुध्वनिर्ध्वनिवादिनां मते । असौ च वक्त्र्याः पुंश्चल्या वैशिष्ट्यादास्वाद्यते । अतस्तस्याः सहकारित्वेनापेक्षा । यदि वक्त्री साध्वी तदा चौर्यरतिरूपिणो व्यङ्ग्यार्थस्य अप्रतीतिः ।

मुकुलभट्टमतेऽत्र वक्तृनिबन्धना लक्षणा । यतो ह्यत्र जलानयनरूपोऽलीकार्थ उपनिबद्धः । असाध्व्या वस्तुतो जलानयनस्यानिष्टत्वात् मुख्यार्थबाधः । ततश्च वैपरीत्यसम्बन्धेन संबद्धः प्रच्छन्नसुरतसम्भोगरूपोऽर्थोऽवगम्यते । अतोऽत्र जलानयनरूपालीकार्थस्यानुपपत्तौ स्वार्थसिद्ध्यर्थं चौर्यरतिरूपार्थस्याक्षेपादुपादानात्मिका लक्षणा । असाध्व्याः परपुरुषसम्भोगसमुत्सुकाया वक्तृत्वं पर्यालोच्यात्र चौर्यरत्यपह्नुतिराक्षिप्यते । अत एवासावुपादानात्मिकाया वक्तृनिबन्धनाया लक्षणाया विषयः ।[३]

---

१. वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात् ।
लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः ॥
—मुकुलभट्टः, अभिधावृत्तिमातृका, ६

२. तैलङ्ग मंगेशरामकृष्णः, मुकुलभट्ट-अभिधावृत्तिमातृका, पृ० १२

३. सा चात्रापह्नुतिरसाध्व्या वक्तृत्वं पर्यालोच्यावगम्यते । अपह्नवस्य चालीकवस्त्वभिधानात्मकत्वादलीकस्य च सत्यार्थविपर्यासकारित्वादलीकेनार्थेन स्वसत्योक्तिः स्वसिद्ध्यर्थत्वेनाक्षिप्यते । तेनात्र वक्तृविशेषपर्यालोचनया सत्यार्थे निष्ठाया उपादानात्मिकाया लक्षणायाः प्रतिपत्तिः ।
तत्रैव, पृ० १२-१३

ध्वनिवादिनामलङ्कारध्वनिर्मुकुलभट्टस्य वाक्यनिबन्धनायां लक्षणायामन्तर्भूतः । तद्यथा—

**प्राप्तश्रीरेष कस्मात् पुनरपि मथितं मन्थखेदं विदध्यात्**
**निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।**
**सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥**[1]

अस्मिन् पद्ये कोऽपि नृपतिश्चाटुवचनैः स्तूयते । अत्राक्रमणार्थमायातस्य तस्य नृपतेर्बलभरेण समुद्रस्य क्षोभ्यमाणत्वात्तस्य वासुदेवाऽभिन्नत्वमुत्प्रेक्ष्यते । समुद्रमन्थनादयो ये भगवतो मुरारेर्व्यापारविशेषास्त एवास्य नृपतेरपि विभाव्यन्ते । अतएव सेतुबन्धादिभिर्वासुदेवनृपयोरभेदाद् रूपकमुत्प्रेक्षान्यो वा कश्चिदलङ्कारोऽभिव्यज्यते । तेन चालङ्कारस्य ध्वननादलङ्कारध्वनिरत्र ध्वनिवादिनां मते ।

परं मुकुलभट्टमते ध्वन्यमानोऽलङ्कारोऽध्यवसानगर्भगौणोपचारमिश्राया लक्षणाया विषयः । वाक्योपात्तपदजातं पर्यालोच्य भिन्नयोरपि वासुदेवनृपयोरैक्यमुत्प्रेक्ष्यतेऽतोऽत्र वाक्यं लक्षणाया निबन्धनम् । इत्थं व्यक्तिवादिनामलङ्कारध्वनिर्मुकुलभट्टस्य वाक्यनिबन्धनाया लक्षणाया गोचरः ।[2]

ध्वनिवादिनां रसध्वनिरपि मुकुलभट्टेन लक्षणाया भेदेष्वेवान्तर्भाव्यते । तद्यथा—

**दुर्वारा मदनेषवो दिशि दिशि व्याजृम्भते माधवो**
**हृद्युन्मादकराः शशाङ्करुचयश्चेतोहराः कोकिलाः ।**
**उत्तुङ्गस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद्वयः**
**सोढव्याः सखि साम्प्रतं कथममी पञ्चाग्नयो दुस्सहाः ॥**[3]

अत्र वसन्तचन्द्रप्रकाशकोकिलालापादय उद्दीपनभावा सहृदयहृदये वासनात्मकतया स्थितां रतिमुद्दीपयन्ति, अतो रतिभावस्याभिव्यक्तौ शृङ्गाररसध्वनिर्ध्वनि-

---

१. अभिधावृत्तिमातृका, पृ० १३

२. प्राप्तश्रीरित्यादिषु तु त्रिषु वितर्केषु भगवद्वासुदेवविषयेषु यथायोगं तत्तत्कार्यानिराकरणहेतुगर्भतया प्रवर्तमानेषु नृपतेर्भगवद्वासुदेवताऽऽक्षिप्ता । तेनात्रोपादानात्मिका लक्षणा । एतच्चात्र सर्ववाक्योपात्तपदसमन्वयान्यथानुपपत्त्यावगम्यत इति वाक्यनिबन्धनात्र लक्षणा ।
तत्रैव, पृ० १४

३. तत्रैव, पृ० १४

वादिनां मते। परं मुकुलभट्टमते शृङ्गाराद्यर्थो वाच्यनिबन्धनाया लक्षणाया विषयः। प्रस्तुते मदनबाणचन्द्रज्योत्स्नाकोकिलालापादिपञ्चपदार्थेषु पञ्चाग्नीनामारोपः क्रियते। अयमेव वाक्यार्थः। परमसौ स्वतोऽनुपपन्नः। अतः वाक्ये पदानामन्वयोपपत्त्यर्थं विप्रलम्भशृङ्गाररसस्याक्षेपः क्रियते। तत एवोपादानात्मिका लक्षणात्र।[1] यतो हि वाच्यार्थस्यावगत्या विप्रलम्भशृङ्गार आक्षिप्यते, तत एव वाच्यार्थस्यात्र निबन्धनत्वेनावस्थानम्, तद्विना शृङ्गाररसस्यानास्वादात्। एवं रसध्वनिर्वाच्यनिबन्धनलक्षणान्तर्गतः।

पूर्वोक्तेन विवेचनेनैतत्स्पष्टं भवति यद् मुकुलभट्टेन बलाद् ध्वनिर्लक्षणायामनुप्रवेशितः। वस्तुतस्तु ध्वनिर्लक्षणाया भिन्न एव। यतोहि पूर्वोक्तेषूदाहरणेषु परममेधाविनापि पदानां परस्परमन्वयानुपपत्तिरूपो मुख्यार्थबाधः प्रतिपादयितुं न शक्यते। तद्विना च लक्षणानुत्थानात्। वक्तृवाक्यवाच्यानां लक्षणायां यन्निबन्धनत्वं मुकुलभट्टेन प्रोक्तं तद् ध्वन्यनुकूलमेव। ध्वनावपि वक्तृबोद्धव्यादीनामुपाधीनां सहकारित्वेनापेक्षा, तद्विना व्यङ्ग्यार्थानुल्लासात्। लक्षणायां वक्तृवाक्यादयो यदि निबन्धनत्वेनापेक्ष्या एव, तर्हि वक्तृबोद्धव्याद्युपाधिजुक् ध्वननव्यापारो किं न सह्यते। उपाधीनामङ्गीकारात् औपाधिक एव व्यापारो लक्षणा व्यञ्जनावत्। तेन च वक्तृवाक्याद्यभिधानच्छद्मना व्यञ्जनैव व्याख्याता भवति। इत्थं वक्तृवाक्यवाच्यनिबन्धना लक्षणा न शास्त्रसिद्धा लक्षणा। परं व्यञ्जनैव प्रसिद्धाभिधानमनादृत्य व्यपदेशान्तरेणोपस्थापिता मुकुलभट्टेन।

एवं व्यञ्जनाया लक्षणायामन्तर्भावाभावात् सिद्धं तस्यास्तुरीयवृत्तित्वम्।

——:०:——

१. अत्र हि स्मरशरप्रभृतीनां पञ्चानामध्यारोपितवह्निभावानामसह्यत्वं वाक्यार्थीभूतम्। अतस्तस्य वाच्यता। तात्पर्यालोचनसामर्थ्याच्च विप्रलम्भशृंगारस्याक्षेप इत्युपादानात्मिका लक्षणा वाच्य-निबन्धना।
तैलङ्गमङ्गेशरामकृष्णः, मुकुलभट्ट-अभिधावृत्तिमातृका, पृ० १४

# नवमोऽध्यायः

## व्यञ्जनाविषये भट्टनायकमतमीमांसा

भट्टनायकः काव्ये रसस्य प्राधान्यमङ्गीकुर्वन्नपि व्यञ्जनया तस्याभिव्यक्तिं प्रत्यवतिष्ठते। तन्मते काव्यात्मनः शब्दस्याभिधाभावकत्वभोजकत्वेत्याख्यास्त्रयो व्यापाराः।[1] रसस्य च य आस्वादो नासौ व्यञ्जनासमर्प्यः, अपि तु त्र्यंशस्य व्यापारस्य महिम्नैव। रसस्याभिव्यक्तिपक्षे महतीं कृपाणवृष्टिमुत्ससर्जासौ। तेन शास्त्रप्रसिद्धाभिधातिरिक्तो रसविषयेण विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण सहकृतः सहृदयविषयो भोजकत्वनामा तृतीयो व्यापारो विश्रान्तिधामतया प्राधान्येनाङ्गीकृतः।[2]

महिमभट्टाचार्यवद् भट्टनायकेनापि व्यञ्जनानामाभिनवो व्यापारो ध्वंस्यते। एवं यथा महिम्ना व्यक्तिं विप्रतिपद्य रसाद्यर्थस्यानुमेयत्वं सिद्धान्त्यते, तथा भट्टनायकेन भोगकृत्त्वव्यापारेण रसस्य भोगः। ध्वनिमार्गाध्वनीनैरङ्गीकृता व्यञ्जनावृत्तिस्तु तेन सर्वथा विडम्ब्यते। वस्त्वलङ्कारयोर्ध्वननं प्रत्याख्याय भट्टनायकेन भोजकत्वव्यापारेण रसस्य भोग एव संस्थाप्यते।

यद्यपि भट्टनायकप्रणीतः कोऽपि ग्रन्थोऽद्य नोपलभ्यते, परं तथापि अभिनवगुप्तमम्मटभट्टादीनामाचार्याणां ग्रन्थेषु भट्टनायकस्य भुक्तिवादः स्पष्टमुट्टङ्कितः दृश्यते। तेषां ग्रन्थानां पर्यालोचनयैतदपि स्पष्टं भवति यद् भट्टनायकेन ध्वनिं ध्वंसयितुं **हृदयदर्पणो** नाम कोऽपि ग्रन्थो व्यरचि। एवं भट्टनायकमतविषये

---

१. अभिधा भावना चान्या भोगीकरणमेव च।
अभिधाधामतां याते शब्दार्थालङ्कृती ततः॥
भावनाभाव्य एषोऽपि शृङ्गारादिगणो हि यत्।
तद्भोगीकृतरूपेण व्याप्यते सिद्धिमन्नरैः॥
आचार्यविश्वेश्वरः, अभिनवगुप्त-अभिनवभारती, पृ० ४६७

२. तत्राभिधायकत्वं वाच्यविषयम्, भावकत्वं रसादिविषयम्, भोगकृत्त्वं सहृदयविषयमिति त्रयोऽंशभूतव्यापाराः।
पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोक-लोचनटीका, पृ० १८२

तत्कृतस्वतन्त्रग्रन्थानुपलब्धेर्ध्वनिवादिभिराचार्यैर्यत्किञ्चित्तदुद्भावितरसभुक्ति-सिद्धान्तमवलम्ब्य प्रोक्तं तदाश्रित्य भट्टनायकमतसमीक्षा क्रियते ।

भट्टनायकः काव्ये रसप्राधान्यवादी । यथा आनन्दवर्धनाचार्येण भरतमुनि-व्यवस्थापितस्य रसस्य प्राधान्यं काव्ये अङ्गीकृतम्,[1] तथैव भट्टनायकेनापि रसस्य मुख्यत्वं सम्प्रतिपन्नम्[2] । द्वयोराचार्ययोर्मते काव्यस्य सहृदयहृदयावर्जकता रसास्वादेनैव । अतो रस एव काव्यस्य प्राणभूतः ।

परमानन्दवर्धनाचार्येण रसध्वनिचमत्कारमङ्गीकुर्वताऽपि वस्त्वलङ्कार-ध्वन्योरपि काव्ये महिमा स्वीकृतः । यद्यपि ध्वन्यमानो रसश्चारुत्वेन सर्वातिशायी परं तथापि वस्त्वलङ्काररूपिणोरर्थयोरपि ध्वननात् तयोः काव्ये परमं महत्त्वम् । एवमानन्दवर्धनाचार्यमते सत्यपि काव्ये रसप्राधान्ये, वस्त्वलङ्कारध्वन्यपि सहृदय-हृदयाह्लादकौ । अत एव ध्वनिसिद्धान्ते वस्त्वलङ्काररसरूपिणस्त्रिविधस्यार्थस्य ध्वननादुत्तमं काव्यम् ।

परं भट्टनायकमते काव्ये रसस्यैव महत्त्वम्, नतु वस्त्वलङ्काररूपिणोरर्थयोः । अत एव तेन वस्त्वलङ्कारध्वनी सर्वथा विप्रतिपद्येते । वस्तुरूपिणोऽलङ्कार-रूपिणो वार्थस्य ध्वनने सत्यपि काव्यं रसास्वादवशादेवोपादीयते । तद्यथा—

**भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण ।**
**गोलाणइकच्छकुड्डगवासिणा दरिअसीहेण ॥**[3]

इत्यस्यां गाथायामानन्दवर्धनप्रभृतिभिर्ध्वनिवादिभिराचार्यैर्वस्तुरूपिणोऽर्थस्य ध्वननात् काव्यचारुत्वं प्रोक्तम् । परं भट्टनायकमतेऽत्र भयानकरसावेशकृत एव चमत्कारः ।[4] निषेधरूपिणो वस्त्वात्मनोऽर्थस्य ध्वनिरपि भयानकरसावेशकृतैव ।

---

१. व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे सम्भवत्यपि ।
रसादिमय एकस्मिन् कविः स्यादवधानवान् ॥
—आनन्दवर्धनः, ध्वन्यालोकः, ४, ५

२. यदाह भट्टनायकः—
वाग्धेनुर्दुग्ध एतं हि रसं यद् बालतृष्णया ।
तेन नास्य समः स स्यात् दुह्यते योगिभिर्हि यः ॥
पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोक-लोचन-टीका, पृ० ९१

३. तत्रैव पृ० ५३

४. यत्तु भट्टनायकेनोक्तम्—इह दृप्तसिंहादिपदप्रयोगे धार्मिकपदप्रयोगे च भयानकरसावेशकृतैव निषेधावगतिः तदीयभीरुवीरत्वप्रकृतिनियमावगम-मन्तरेणैकान्ततो निषेधावगत्यभावात् ।
ध्वन्यालोक-लोचन-टीका, पृ० ६८

अतो रसास्वादेनैवात्र सहृदयहृदयाह्लादकत्वं हि नाम काव्यम्। वस्त्वलङ्कार-रूपार्थप्रत्यायनार्थं व्यञ्जनाव्यापारस्योपयोगो भवेन्नाम, परन्तु रसरूपोऽर्थस्तु व्यञ्जनयाऽप्रत्याय्यः। तत्र तु न्यग्भावितशब्दार्थस्वरूपस्य भावकत्वभोजकत्व-व्यापारद्वयस्यैव गतिः। तद्विना रसास्वादासम्भवात्।

एवं भट्टनायकेन व्यञ्जनाव्यापारं विप्रतिपद्य तत्स्थाने भावकत्वभोजकत्वाख्यौ व्यापारौ रसास्वादमाधातुं स्वीक्रियेते। अत एवासौ परवर्तिभिराचार्यैः काव्ये व्यापारप्राधान्यवादित्वेन प्रतिष्ठापितः।[1] काव्ये व्यापारप्राधान्यमभ्युपगच्छतो भट्टनायकस्यायमाशयः प्रतिभाति। वेदादिष्वपौरुषेयेषु ग्रन्थेषु शब्दस्य प्राधान्यम्। तत्र राजाज्ञावद् यथोक्तं तथैव गृह्यते। इतिहासादिषु च शब्दस्याप्राधान्यमर्थवादवशादर्थस्य मुख्यत्वम्। तत्र सुहृद्वचनवदर्थस्योपयोगः शब्दस्य चाप्राधान्यम्। यथा सुहृद्वचनं हितकारितायै उपादीयते, तथेतिहासादीनां वचनमभिनन्द्यते। परं न तस्य राजाज्ञावद् वेदवचनवद् वा शब्दप्राधान्येन ग्रहणम्। परं काव्ये शब्दार्थयोर्द्वयोर्न्यग्भावः। यतो हि शब्दार्थौ भावकत्वभोजकत्वव्यापारासहकृतौ न किञ्चिच्चारुत्वमातनुतः। काव्ये शब्दैरुक्ता अर्था यदा भावकत्वव्यापारेण साधारणीकृता उपस्थिता भवन्ति, तदा हृदयसंवादमादधाना ते सहृदयविषयेण भोगकृत्त्वव्यापारेण रसिकानामास्वादविषयतामुपयान्ति। एवं साधारणीकृताः शब्दार्था भोगकृत्त्वव्यापारेण भुज्यमानाः काव्ये परमाह्लादनिष्यन्दिनो भवन्ति। अतो वेदशास्त्रादिभ्यः काव्यस्य वैलक्षण्यं पूर्वोक्तव्यापारद्वयमहिम्नैव। वेदशास्त्रादावुपात्ताः शब्दार्थाः असाधारणीभूता रसचर्वणोन्मुखा न भवन्ति। परं काव्ये गुणालङ्कारोपादानेन शब्दार्थाः सरसाः सन्तः सचेतसां मनांस्यनुरञ्जयन्ति। काव्ये रसास्वादो हृदय-संवादवशादेवोदेति। अत एव ये केवलं शब्दार्थशासनज्ञानकृतपरिश्रमाः शाब्दिकाः शुष्कतर्ककर्कशधियस्तार्किका वेदविहितविधिनिषेधानुयायिनश्च मीमांसकास्ते हृदयसंवादमादधानं भावकत्वव्यापारमजानन्तो रसात्मनः काव्यस्यांशमात्रमप्यास्वादयितुमसमर्थाः।[2]

एवं भट्टनायकमते न्यग्भावितशब्दार्थस्वरूपस्य भावकत्वभोजकत्वनाम्नो

---

१. भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्।
द्विवेदी पं० गिरिजाप्रसादः, रुय्यक-अलङ्कारसर्वस्वम्, पृ० ३८

२. यथोक्तम्—
काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्।
शास्त्री पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, लोचन-टीका, पृ० ३६

व्यापारद्वयस्यैव प्राधान्यम् ।[1] यतो हि व्यापारद्वयस्यैव महिम्ना साधारणीकृता रत्यादयो भावाः सहृदयैरास्वाद्यन्ते ।

भट्टनायकस्य व्यापारप्राधान्यानुप्राणितो रसभोगः काव्यशास्त्रे परमप्रसिद्धः। भट्टलोल्लटेन रसस्योत्पत्तिः, शङ्कुकेन तस्यानुमितिर्भट्टनायकेन च तस्य भुक्तिः सिद्धान्तिता । तेन रसस्य प्रतीत्युत्पत्त्यभिव्यक्तिपक्षान् विदूष्य भावकत्वव्यापार-सहकृतो रसभोगो यौक्तिक्या बुद्ध्या व्यवस्थापितः ।

तथाहि—रसस्य प्रतीतिः किं परगता स्वगता वा ? तत्र नाद्यः पक्षो युक्तिसङ्गतः । यदि रसोऽनुकार्ये रामसीतादावथवानुकर्तरि नटे विद्यते, तर्हि सहृदयस्यास्वादयितुर्नाटकादौ प्रवृत्तिरेव न स्यात् । नहि परगतो भावः केनापि चर्व्यते । प्रत्युत रसस्य परगतत्वात् सहृदयस्यास्वादयितुस्ताटस्थ्यमेव स्यात् । रामेणानुकर्त्रा नटेन वाऽऽस्वाद्यमाना रतिस्तद्गतत्वात्तयोरेव प्रीतेर्विषयतामुपेयात् न तु तटस्थस्य सहृदयस्य । अतः परगतो रस इति पक्षे सहृदयस्यास्वादयितुः रसास्वादस्य का नाम चर्चा । तथा च न परगता रसप्रतीतिः ।

नापि द्वितीयः पक्षो न्याय्यः । स्वात्मगतत्वेन रसप्रतीतौ रसस्योत्पत्तिरेवाभ्युपगता भवति । सा च न युज्यते । विभावादिद्वारिकैव रसप्रतीतिरिति सर्वजन-सम्मतं दर्शनम् । तत्र सीताया ये भुजचालनकटाक्षनिक्षेपस्मितावलोकनादय उद्दीपकास्ते राममुद्दिश्य कृता रामहृदये एव वासनात्मतया स्थितां रतिमुद्दीपयन्ति, नतु सहृदयहृदये । उद्दीपनविभावैस्तैरुद्दीपिता रती रामेणैवास्वाद्यते। नह्यकारणात् कार्यस्य जन्म क्वापि सम्भवम् । कारणान्यत्र सीतायाः कटाक्षा-दीनि राममुद्दिश्य कृतानि कार्यभूतां रतिं रामस्य हृदय एवोद्बोधयितुं समर्थानि नतु सहृदयहृदये। तेषां तथात्वेनावस्थानात् । यदि सीतया कटाक्षनिक्षेपस्मि-तादयः सहृदयमुद्दिश्य कृता भवेयुस्तदा सहृदयहृदये रसस्योत्पत्तिः स्यात् । यर्हि भुजचालनकटाक्षनिक्षेपादयो रसोद्दीपकाः सीतया राममुद्दिश्य क्रियन्ते, तर्हि राम एव रसस्योत्पत्तिर्नतु सहृदये। एवञ्चात्मगतत्वेनापि परगतैरुद्दीपनविभावैः सहृदये रसोत्पत्तिरसम्भवा ।

---

१. तेन यदाह भट्टनायकः—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थतत्त्वेनतु युक्तं वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत् ।।

ध्वन्यालोकलोचनटीका, पृ० ८७

ननु रामादिचरितमये काव्ये सीताया मानुषीत्वेन तस्यां सहृदयानां कान्तात्वबुद्धिर्भवतीति कृत्वा सीतादयः कान्तात्वेनोपस्थिता भवन्ति कान्तात्वं साधारणञ्च सहृदयगतरत्यादिवासनोद्बोधे विभावत्वेन निमित्ततामुपैतीति चेन्न, वासनाविकासहेतुविभावतां प्राप्तानां सीतापार्वत्यादीनामाराध्यत्वेन नायिकात्वसंवेदने प्रतिबन्धकत्वात्। अयमाशयः। रामादिचरितमये काव्ये सीतादीनां देवकल्पत्वात् सहृदयानां तत्र पूज्यबुद्धिर्भवति। अतः सीतादयः साधारणनायिकात्वेन सामाजिकैर्नावबुध्यन्ते। पूज्यबुद्धिः सीतादीनां साधारणनायिकात्वप्रतीतौ प्रतिबन्धिका भवति। अत एव पूज्यानां सीतादीनां साधारणनायिकारूपेणावस्थानाभावात् कान्तात्वं साधारणं सहृदयहृदये रत्यादिवासनाविकासे विभावत्वेन निमित्ततां नोपयाति। तथा सति न रसास्वादः।

ननु काव्ये सीतापार्वत्यादिज्ञाने जाते सहृदयानां स्वकान्तास्मरणं भवति, तेन च रत्यादिवासनोद्बोधात् रसप्रतीतीरिति चेन्न, कान्तावतामेव रसप्रतीतेरकान्तावताञ्च रसास्वादासम्भवात्। नहि ये कान्तावन्तस्त एव काव्ये रसानुभूतिक्षमाः नान्ये कान्ताविरहिता इति पक्षो युक्तः। रसप्रतीतिमन्तरा सहृदयाः कान्तास्मरणं नानुभवन्ति। परमेकबुद्धिग्राह्ये रसे मध्ये कान्तास्मरणादिकं व्यवधानं रसप्रतीतौ शल्यभूतमिति स्वकान्तास्मरणमपि सहृदयानां वासनाविकासे निबन्धनतां नोपयाति।

किञ्च सहृदयवासनाविकासे कान्तात्वं साधारणं यत् प्रयोजकमुच्यते, तदितोऽप्यनुपपन्नम्, वीराद्भुतरसादौ समुद्रसेतुबन्धनादीनां विभावानां साधारणत्वेनावस्थानाभावात्। शृङ्गारे रसे सीतापार्वत्यादीनां कान्तात्वं साधारणं यथा कथञ्चिदुपपद्येतापि, परमलोकसामान्या अननुभूताः समुद्रोल्लङ्घनपर्वतोद्धरणादय उत्साहविकासे न कदापि साधारणत्वेनोपस्थिता भवन्ति। तेन च वीराद्भुतरसाद्यास्वादो न भवेत्।

ननु रामादिगतोत्साहादिस्थायिज्ञानं सहृदयानां रसोद्बोधे हेतुरिति चेन्न रामादिचरितमये काव्ये उत्साहादिमतो रामस्य स्मरणासम्भवत्वात्, अनुभूतपूर्व एवार्थः स्मर्यते, नाननुभूतपूर्वः। नह्युत्साहादिमान् रामः पूर्वं दृष्टः येन तद्गतोत्साहस्मरणाद् रसोद्बोधः स्यात्।

न च शब्दादनुमानाद् वा रसप्रतीतिः सङ्गतेति वाच्यम्। तथात्वे तस्याः सहृदयहृदयावर्जकत्वाभावात्। नह्यनुमितः शब्दात् प्राप्तो वार्थः सरसो भवति। नापि च लौकिकप्रत्यक्षसहोदरा रसप्रतीतिः। तथात्वे नायकनायिकयोर्मिथः

चुम्बनालिङ्गनादिकं वीक्ष्य शृङ्गाररसस्य स्थाने लज्जाजुगुप्साद्यनिष्टवृत्त्यन्तरोदयः स्यात् यथा लोके स्त्रीपुरुषयोः परस्परमालिङ्गनचुम्बनादिदर्शनेन भवति ।

एवं सीतादीनां राममुद्दिश्य कृताभिः कटाक्षनिक्षेपादिभिश्चेष्टाभिः रामादिकस्यैव हृदये रत्युद्दीपनत्वात्, प्रतिबन्धकपूज्यबुद्धिसद्भावे सीतादीनां साधारणकान्तात्वेनाप्यवस्थातुमशक्यत्वात्, रसानुभूतिसमये मध्ये स्वकान्तास्मरणस्याप्यनुपपन्नत्वात्, वीराद्भुतरसादौ समुद्रलङ्घनादीनामलोकसामान्यानां विभावानां साधारणत्वेनावस्थानासम्भवत्वात्, शब्दादनुमानाद्वा रसप्रतीतौ रसस्यानाह्लादकत्वात्, प्रत्यक्षज्ञानवद् रसप्रतीतौ लज्जाजुगुप्सादिवृत्त्यन्तरोदयात्, स्वगतत्वेनापि न रसप्रतीतिः ।

नापि च रसोत्पत्तिर्युक्ता । करुणरसयुक्ते काव्ये क्रन्दनाश्रुपातमूर्च्छामरणादिभिर्दुःखोत्पत्तिः स्यान्न रसास्वादः । किञ्च रसोत्पत्तिपक्षेऽपि त एव दोषा उद्धुरकन्धरा भवन्ति ये रसप्रतीतिपक्षे प्राङ्निर्दिष्टाः ।

अभिव्यक्तिरपि रसस्यासम्भवा । अभिव्यक्तिस्तु पूर्वं सिद्धं किञ्चिद् वस्त्वन्तरमपेक्षते । प्रकाशकेन दीपेन पूर्वसिद्ध एव घटः प्रकाश्यते, नापूर्वसिद्धः । रसो न पूर्वसिद्धो येन तस्याऽभिव्यक्तिर्युज्येत । नासौ रसः स्वाभिव्यक्तेः पूर्वम् पश्चाद् वा लौकिकघटपटादिपदार्थवत् स्थितिं लभते । प्रत्युत प्रत्यायकेन विभावादिना सहैव तस्य प्रतीतिः । तत्सत्त्वे तत्सत्त्वात्, तदभावे तदभावात् । अतो विभावानुभावसञ्चार्युत्थो रसो न पूर्वसिद्धो येन लौकिकघटपटादिपदार्थवत् तस्याभिव्यक्तिरुपपद्येत । यावद्विभावादयस्तिष्ठन्ति तावदेव रसस्तेषामपगमे रसस्यापगमाद्दुष्टः सर्वथा व्यक्तिपक्षः ।

ननु वासनात्मतया पूर्वं स्थितस्य रत्यादेरभिव्यक्तिर्नासम्भविनीति चेन्न रत्यादेरधिकाधिकाभिव्यक्तये तदुपायभूतस्य विभावादेरधिकाधिकानुभवरूपार्जने सहृदयानां प्रवृत्तेः । अयमाशयः । लोकेऽभिव्यञ्जकस्य दीपादेर्मन्दतीव्रप्रकाशेन यत्तारतम्यम्, तेन विषयस्य प्रकाश्यस्य घटपटादेः क्वचित्तीव्रप्रकाशवशात् स्फुटत्वं, क्वचिन्मन्दप्रकाशकारणादस्फुटत्वं यथा विभाव्यते, तथा रसोऽपि क्वचित्स्फुटः क्वचिदस्फुटो वा प्रतीतिपथमवतरेत् । परं रसानुभूतिसमये सत्त्वोद्रेकादखण्ड एवानन्दोऽनुपाख्येय अयमेतावानिति परिच्छेत्तुमशक्य एकाकारः समुदेति । नहि तच्चर्वणासमये सहृदयहृदयसंवेदनसाक्षिकं किञ्चित्तारतम्यम् । रसाभिव्यक्तौ तत्साधनानां क्वचिदल्पत्वे क्वचिच्च तेषामाधिक्ये रसाभिव्यक्तिरपि क्वचिदल्पा क्वचिच्चाधिका स्यात् । अधिकाधिकरसाभिव्यक्त्यर्थं तत्साधनानाञ्चाप्यधिकाधिकोपार्जनार्थं सर्वदा प्रवृत्तिः स्यात् । अतो न

रसस्याभिव्यक्तिरपि। अभिव्यक्तावपि रसस्य तत्रैव स्थितो वेतालः। यतो हि न रसस्य स्वगतत्वेनाभिव्यक्तिरुपपद्यते न परगतत्वेन। अतः पूर्ववदेव दोषः। अतो न रसस्य प्रतीतिर्नोत्पत्तिर्नाप्यभिव्यक्तिः सम्भवेति त्रयः पक्षा दुष्टाः सन्तोऽग्राह्याः।[1]

एवं भट्टनायकेन रसस्य प्रतीत्युत्पत्त्यभिव्यक्तिपक्षान् विदूष्य त्र्यंशताप्रसादात् रसो भुज्यत इति भोगपक्षः प्रतिष्ठापितः। तन्मतेऽभिधाभावकत्वभोगकृत्त्वाख्याः त्रयो व्यापाराः। तत्राद्योऽभिधाव्यापारस्तावच्छास्त्रप्रसिद्ध एव। असौ च वाच्यार्थविषयः। तत्प्रसादादभिधेयार्थप्रतीतिः। परं नासावभिधा शुद्धा काव्ये उपादेया। यतो हि काव्यस्य शब्दार्थौ वेदपुराणेतिहासशब्दार्थाभ्यां विलक्षणौ। नहि काव्ये शब्दतदभिधेयार्थमात्रज्ञानेन रसास्वादः। यदीतरव्यापारानालिङ्गितः शुद्धोऽभिधाव्यापार एव काव्ये स्यात्, तदा मीमांसाव्याकरणादिशास्त्रेभ्यः काव्यस्य को भेदो भवेत्। उभयत्र शब्दार्थयोः समानभावेनावस्थानात्। तेन च व्याकरणशास्त्रे तन्त्रवशात्[2] '**हलन्त्यम्**'[3] इति सूत्रे यथार्थद्वयप्रतीतिस्तथैव '**सर्वदो माधवः**'[4] इत्यादौ काव्येऽपि द्वयर्थप्रतीतेरुभयोर्न कश्चिद् भेदः स्यात्। काव्येऽभिधामात्रस्वीकारे उपनागरिकादीनां वृत्तीनां भेदकरणं

---

१. (क) स्वगतत्वेन तथाभावे न रसस्य रसनीयत्वम्, परगतत्वेन ताटस्थ्याद् रसनीयत्वाभाव एव। अभिव्यक्तिपक्षे विषयार्जनतारतम्यादपि रसनीयत्वाभावः।
भट्टाचार्यः शिवप्रसादः, मम्मट-काव्यप्रकाशः, श्रीधरी-टीका, पृ० ६८
(ख) न ताटस्थ्येन रसः प्रतीयते स्वव्यतिरिक्ताश्रयप्रतीतौ रसनीयत्वाभावात्। नाप्यात्मगतत्वेन सीतादावपि कामित्वप्रसङ्गात्। नाप्युत्पद्यते विभावादिकारणानां निवृत्तावपि घटादिवत् तस्यावस्थानप्रसङ्गात्। न च व्यज्यते प्रदीपाद्यभिव्यङ्ग्यघटादिवत् पूर्वसिद्धत्वाभावात्।
—लालचन्द्रभगवानदासः, नरेन्द्रप्रभसूरि-अलङ्कारमहोदधिः, पृ० ५७

२. एकोऽनेकार्थकृद्यत्र स्वभावेनैव दीपवत्।
समयस्मृत्यनाकाङ्क्षस्तन्त्रस्य विषयो हि सः॥
—महिमभट्टः, व्यक्तिविवेकः, २, ८५

३. पाणिनिः, अष्टाध्यायी, १, ३, ३

४. शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० २४०

निरर्थकम् । 'अधाक्षीत् तृणेढी'ति श्रुतिदुष्टानां शब्दानां वर्जनं सर्वं निष्फलं स्यात् । यतो ह्यभिधेयार्थमात्रस्वीकारे शब्दार्थयोः यथा वेदपुराणादावुपयोगस्तथैव काव्येऽपि । तयोरुभयत्र समानभावेन दर्शनात्, काव्यशास्त्रयोः परस्परं कश्चिद् भेदो न स्यात् । अतः शुद्धाभिधातिरिक्तोऽन्योऽपि कश्चिद् व्यापारः काव्येऽवश्यमूरीकार्यो येन शास्त्रेतिहासादिभ्यः काव्यस्य वैलक्षण्यं सम्पद्येत । असौ च काव्यवैलक्षण्यकारी रसभावकत्वाख्यो द्वितीयो व्यापारो यद्वशादभिधाबोध्या अर्था वैचित्र्यमासादयन्तः शास्त्रेतिहासादिषु प्रयुक्तेभ्यः शब्दार्थेभ्यो भिद्यन्ते । काव्ये च किमप्यद्भुतं चारुत्वं पदं निदधाति । शब्दप्रधानेषु वेदादिशास्त्रेष्वर्थप्रधानेषु चेतिहासादिषु शुद्धाभिधादर्शनान्न रमणीयता सहृदयहृदयावर्जिका । अतः काव्ये शुद्धाभिधातिरिक्तोऽन्यः कश्चिद् व्यापार एषणीय एव भवति ।

भावकत्वं हि नामाभिधातिरिक्तो हृदयसंवादमादधानो व्यापारः काव्ये विभावानुभावादिकं साधारण्येनोपस्थापयन् सचेतसां काञ्चिद्विलक्षणां चेतश्चमत्कृतिं प्रतनुत इति भावकत्वव्यापारवशाच्छास्त्रेतिहासादिभ्यः काव्यस्य वैलक्षण्यं भवति । भावकत्वेन व्यापारेण रामसीतादिसम्बन्धिनोऽनुकार्यगता भावा रामसीतागतत्वरूपं विशेषांशं विहाय साधारण्येनोपस्थिता भवन्ति । सहृदयहृदयमानन्दवारिणा परिपूरयन्तः काव्ये भुज्यमाना रत्यादयो भावा न रामस्य न वा सीताया न वान्यस्य कस्यचित् भावा भवन्ति, परमनुकार्यैं रामसीतादिभिरनुभूताः, अनुकर्तृभिर्नटैश्चाभिनीताः, त एव रत्यादयो भावा रामत्वसीतात्वनटत्वादिविशेषसम्बन्धांशशून्या भावकत्वव्यापारमहिम्ना साधारणीकृताः काव्ये सामाजिकानामास्वादविषयतामुपयान्ति । सामाजिकैः काव्ये या रतिरास्वाद्यते, सा रतिर्न रामसीताविषयिण्येव रतिर्न वानुकर्तृनटादिगता रतिर्न वाऽऽस्वादयितुः सहृदयस्यैव रतिः परं भावकत्वव्यापारमहिम्ना निर्विशेषाऽलौकिक्येव रतिर्भोगविषयतामायाति । साधारणीकरणेनैव रतेः काचिद् विलक्षणता काव्ये । तन्महिम्नैव रतिरास्वादतामुपगच्छति, न ममैव न परस्येति विचारराहित्यात् । अन्यथा सीतादेः रतेः कथमास्वादस्तत्र पूज्यबुद्धिसद्भावात् । करुणादौ रसे दुःखानुभवत्वात् स्वस्य भावस्यापि कथं चर्वणा । नापि च स्वकीया रतिः सर्वजनसम्मुखे केनचिदप्यास्वाद्यते, तत्र लज्जाजुगुप्सावशादप्रवृत्तेः । अतो रत्यादिभावस्य भावकत्वव्यापारमहिम्ना साधारणीकरणं काममभ्युपेयम् । तद्वशान्निर्विशेषा रतिः साधारण्येन भुज्यते । भावकत्वव्यापारप्रसादान्न केवलं रत्यादयो भावा एव साधारण्येनोपस्थिता भवन्ति, प्रत्युत विभावादयोऽपि विशेषांशाद्विनिर्मुक्ताः सन्तः साधारणीकरणेन सामान्यां रतिमनुभावयन्ति । यदि रामस्येमे विभावा इमे च सीताया इति सविशेषा प्रतीतिर्भवेत्,

तदा रतेरास्वाद्यत्वं कथाशेषीभूतम् । अतो रत्यादीनां स्थायिभावानां सीतात्वादीनामालम्बनानां कटाक्षपातसस्मितावलोकनादीनामुद्दीपनानां स्वेदपुलकादीनामनुभावानां लज्जास्मृत्यादीनां सञ्चारिणाञ्चेति सर्वेषां साधारण्येन रत्यादयो विगलितवेद्यान्तरेऽलौकिके रसे पर्यवस्यन्तो गिरामतीतमाह्लादं सहृदयहृदयेषु समुच्छालयन्ति ।

श्रव्यकाव्ये रत्यादिभावानां साधारणीकरणं गुणालङ्कारविनिवेशनाद् दोषपरिहाराच्चोपपद्यते । दृश्यकाव्ये च चतुःप्रकाराभिनयप्रभावाद् विविधनृत्यगानवेशभूषावैचित्र्याच्च तत् सम्भवति । यथा—चन्द्रकिरणसंस्पर्शेन चन्द्रकान्तोत्पले द्रवो जायते, तथैव काव्यनाट्ययोरपि गुणालङ्कारोपस्कृतशब्दार्थोपादानान्नाट्ये च नृत्यगानविचित्रवेशभूषादिसामग्रीवैशिष्ट्याद् रत्यादीनां भावानां साधारणीकरणं घटते। अतः पूर्वोक्तसामग्रीवैशिष्ट्येन साधारणीकरणं हि नाम भावकत्वव्यापारः ।

तथा च रसविषयेण भावकत्वव्यापारेण रत्यादीनां भावानां साधारणत्वापादने सहृदयविषयेण तृतीयेन भोगकृत्त्वव्यापारेण साधारणीकृता निर्विशेषा रत्यादयो भावा भुज्यन्ते । भाविते च रसे सत्त्वरजस्तमोमयत्रिगुणात्मकचित्ते रजस्तमसोर्न्यग्भावात् सत्त्वगुणोद्रेको भवति । तेन विषयान्तरेभ्यः स्वात्मचैतन्यरूपाया वृत्तेर्व्यावर्तनाद् विगलितवेद्यान्तरे आनन्द एव तस्या विश्रान्तिः । इत्थं भोगकृत्त्वव्यापारेण भावितस्य रसस्य भोगः । परब्रह्मानन्दसहोदरानन्दे पर्यवसानमेव भोगः । भुज्यमानेषु तेषु रत्यादिषु स्थायिभावेषु क्वचिच्चित्तस्य द्रुती रजसो गुणस्य प्रभावात्, क्वचिद्विस्तररस्तमसः प्रभावात्, क्वचिच्च विकासः सत्त्वगुणोत्कर्षात् । एवं रजोगुणस्य द्रुतौ तमसो विस्तारे सत्त्वस्य विकासे भोगः स्वरूपं लभते । चित्तस्य द्रुतिः शृङ्गारकरुणादौ, विस्तारो वीरबीभत्सरौद्रेषु, विकासश्च सर्वेषु रसेषु । इत्थं रजस्तमोवैचित्र्यसंवलितसत्त्वोद्रेकवशात् समुल्लसन् परब्रह्मास्वादसविधः काव्यानन्दो भोगकृत्त्वव्यापारमहिम्ना चर्व्यते । अतस्तृतीयस्यापि व्यापारस्य रसानुभूतावावश्यकता ।

एवञ्च वाक्यार्थावगमकेन काव्यार्थविषयेणाभिधाव्यापारेण, रसादिविषयेण साधारणीकरणात्मना द्वितीयेन भावकत्वव्यापारेण, सहृदयविषयेण रसास्वादाधायकेनान्त्येन भोजकत्वव्यापारेणेति त्र्यंशेन व्यापारेण वासनात्मतया सहृदयहृदये विद्यमानो रत्यादिस्थायिभावो हृदयसंवादवशात् रसतामेतीति भट्टनायकमतहृदयम् ।[1]

---

१. शब्दात्मनः काव्यस्य त्रयो व्यापाराः । अभिधा भावकत्वं भोजकत्वञ्चेति । तत्राभिधा निरन्तरसान्तरार्थनिष्टत्वेन द्विधा । भावकत्वं साधारणी-

रसाभिव्यक्तिप्रबलपरिपोषकेण व्यञ्जनासब्रह्मचारिव्यापारान्तरमसहमानेनाभिनवगुप्तपादाचार्येण भट्टनायकोद्भावितौ भावकत्वभोजकत्वव्यापारौ प्रत्याख्याय तौ व्यञ्जनायामेवान्तर्भावितौ। तथाहि—साधारणीकरणात्मना भावकत्वव्यापारेण भाविते रसे तद्भोग इति भट्टनायकेन व्यवस्थाप्यते। अत्र ब्रूमः। रसभावनायां न केवलं काव्यशब्दा भावकाः न वा केवलमर्थाः। अर्थापरिज्ञाने काव्यशब्दानां भावकत्वं नोपपद्यते। लौकिकवाक्येनार्थस्याभिधाने कृतेऽर्थानामपि न भावकत्वम्। अतो द्वयोर्भावकत्वं स्वीकार्यम्। न चानुपस्कृतौ वाच्यवाचकभावपर्यवसितौ शब्दार्थौ रसं भावयितुं पारयत इति वाच्यम्, तथा सति शास्त्रेतिहासादीनामपि भावकत्वसामान्यात् सरसत्वं स्यात्। अतो वाच्यवाचकभावापर्यवसितौ गुणालङ्कारोपस्कृतावेव शब्दार्थौ रसान् भावयत इति स्वीकार्यम्। नहि रामः सीतायामनुरक्त इति वचने रसस्य भावकता। परं काव्ये गुणालङ्कारपरिग्रहेण नाट्ये चातोद्यगानविचित्रमण्डपचतुर्विधाभिनयादिसामग्रीवैशिष्ट्येन रसो भाव्यते। रसस्येयं भावना न व्यञ्जनामतिक्राम्यति। यतो हि ध्वनिवादिभिरपि वाच्यवाचकभावापर्यवसितौ व्यङ्ग्यव्यञ्जकभावोपनिबद्धौ शब्दार्थौ रसानुभूताविष्टौ। यथोक्तं ध्वनिकारेण—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**[1]

यावच्छब्दार्थौ न व्यञ्जकौ तावन्न रसोदयः। वाच्यवाचकधर्मपर्यवसितसामर्थ्यानां शब्दार्थानां का नाम भावकता? अतो रसानुभूतिर्गुणालङ्कारोपस्कृतवाच्यवाचकभावापर्यवसितसामर्थ्यैर्व्यञ्जकैः शब्दार्थैरेव भवति। तेन च रसभावनायां शब्दार्थयोर्वाच्यवाचकभावपरिहाणेस्तयोर्व्यञ्जकत्वं स्वतः प्राप्तम्।

भट्टनायकोद्भाविता चेयं भावना त्रिधा विभक्ता। साधनसाध्येतिकर्तव्यताकरणम्। तेन हि विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणञ्चैतदेव यत् सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः स्थाय्यनुभावादीनाञ्च सम्बन्धिविशेषानवच्छिन्नत्वेन। एवं काव्ये नाट्ये च द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते।

पं० दुर्गाप्रसादः, गोविन्द-काव्यप्रदीपः, पृ० ६६

१. आनन्दवर्धनः, ध्वन्यालोकः, १, १३

रूपेण। तत्र साधनांशो व्यङ्ग्यव्यञ्जकभावान्न भिन्नः, शब्दार्थयोः स्वार्थमुपसर्जनीकृत्य व्यङ्ग्यार्थस्य ध्वननात्। भट्टनायकेनापि च रसभावनायां शब्दार्थयोर्गुणत्वे व्यापारप्राधान्याभ्युपगमात्। यथोक्तं तेन—

'द्वयोर्गुणत्वे व्यापार-प्राधान्ये काव्यधीर्भवेत्'

साध्यांशो रसः। गुणालङ्काराणां समुचितयोजना चान्तरो व्यापार इतिकर्तव्यतांशः। स साध्यस्य रसस्यानुभूतौ व्याप्रियमाणस्य व्यापारस्य सहायकः। एवं भट्टनायकस्य भावना त्रिधा विभक्ताऽपि साधनांशे व्यञ्जनाव्यापारात्ताटस्थ्येन नावस्थातुमर्हति। रसस्य स्वशब्दवाच्यत्वं तेनापि विप्रतिपन्नम्। रसस्य च स्वशब्दानुक्तौ व्यङ्ग्यत्वं तस्य दैवसिद्धम्। तथा सति भावनाख्यो व्यापारः समुचितगुणालङ्कारादिविशिष्टशब्दार्थयोरवश्यमभ्युपगमाद् व्यञ्जनाव्यापार एवान्तर्हितो भवति। यतो हि व्यञ्जनायामपि शब्दार्थयोरुपसर्जनीभावस्तयोश्च गुणालङ्काराभ्यामुपस्कारः।

भोजकत्वव्यापारोऽपि व्यञ्जनाकुक्षावेव निपतति। भाविते रसे यो भोगोऽसौ तस्याभिव्यक्तिरेव नान्यत्किञ्चित्। यदैव रत्यादयो भावा भाव्यन्ते, तदैव तेषामभिव्यञ्जनाद् रसास्वादः। अतो रसस्याभिव्यञ्जनमेव भोगः। काव्ये यदा विभावानुभावा उपनिबध्यन्ते, तदा तेषामपूर्वयोजनयैव तात्कालिकी रसानुभूतिः। इत्थं भट्टनायकेन रसभोगार्थं यस्तृतीयो व्यापारो भोजकत्वनामोद्भाव्यतेऽसौ निर्निबन्धन एव। व्यञ्जनयैव केवलया रसभावनतद्भोगे च प्राप्ते व्यापारद्वयस्येयान् भारः शब्दे नारोपणीयः। एवं ध्वनिवादिनां मते व्यङ्ग्यव्यञ्जकभावस्यावश्यमभ्युपगमाद् भावकत्वभोजकत्वाख्यौ व्यापारौ निरर्थकौ, तयोः पूर्वोक्तप्रकारेण व्यञ्जनायामेवान्तर्भावात्।[1]

किञ्च विषयमुखप्रेक्षो व्यापारो भवतीति सर्वसम्मतं मतम्। विषयाभावे व्यापारस्य प्रवृत्तिरेव न स्यात्। साध्यस्य विषयस्य प्रत्यायने व्यापारः साधनभूतः। अतः साध्यस्य विषयस्यैव सर्वथा प्राधान्यम्। तेनैव च काव्यस्योत्कर्षापकर्षौ चिन्त्येते। व्यापारस्य विषयमुखप्रेक्षित्वात्, विषयस्यैव प्राधान्यं समग्रभरसहिष्णुत्वञ्च। इत्थं विषये औपयिके सति व्यापारस्योपायता तावद्दैवसिद्धैव। यथा धूमो लिङ्गिनं वह्निं प्रत्याययन्न तमतिवर्तते तथैव विषयमुपस्थापयन् व्यापारो न तमुल्लङ्घयितुं प्रभुः। विषयं प्रतिपाद्य व्यापारो विरमति, पश्चाच्च विषयस्यैव प्राधान्यमवशिष्यते, तस्यैव चाक्षुण्णं प्रभुत्वम्।

---

१. पण्डितः पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, लोचनभाष्यम्, पृ० १८८-९०

काव्ये व्यङ्ग्यार्थ एव प्रधानभूतो विषयः। परं भट्टनायकेन विषयमुपेक्ष्य भावकत्वभोजकत्वाभिधस्य व्यापारस्यैव प्राधान्यं प्रतिष्ठापितम्।[1] व्यापारो विषयं विना स्वरूपलाभं न लभते। अतः काव्ये व्यङ्ग्यनामा विषय एव प्राधान्येनोरीकार्यः। विषयस्य प्राधान्यात्तत्प्रत्यायकस्य व्यापारस्य गौणत्वं तावत्प्राप्तमेव। एवं गुणालङ्कारोपस्कार्यस्य व्यङ्ग्यार्थस्य विषयस्य काव्ये मुख्यत्वे उपपन्ने, भावकत्वभोजकत्वव्यापारप्राधान्यं पराहतमेव भवति। तस्माद्विषयस्य व्यङ्ग्यार्थस्य प्राधान्यं वक्तुं युक्तम्, नान्यस्योपायस्थानीयस्य व्यापारस्य।[2]

अभिनवगुप्तपादाचार्यकृतमिदं भावकत्वभोजकत्वव्यापारद्वयप्रत्याख्यानं साम्प्रतमस्माभिर्विचार्यते। नहि रत्यादीनां भावानां साधारणीकरणात्मा भावकत्वव्यापारो भट्टनायकमते समुचितगुणालङ्कारपरिग्रहमात्रपर्यवसितः। विशेषांशविनिर्मुक्तैर्विभावादिभी रत्यादीनां भावानामास्वादः साधारणीकरणात्मना भावकत्वव्यापारमाहात्म्येन। नहि रसास्वादयिता सहृदयो रत्यादीनां भावानां साधारण्येनानुपस्थितौ रसमास्वादयितुं समर्थः। अतो रसानुभूतौ विभावादीनां साधारणीकरणमशक्यशङ्कम्। एवं भट्टनायकेन काव्ये नाट्ये च कथं रसानुभूतिरिति गहनं विचारयता काव्यशास्त्रे रसविषयको यो व्यापारो भावकत्वनाम्नाऽऽविष्कृतः स तु स्वीकरणीय एव। केवलं प्रसिद्धशास्त्रकारानुमोदितोऽयं व्यापार इति कृत्वा ध्वनिवादिनोऽस्य प्रत्याख्यानमारभन्ते। तञ्च व्यञ्जनायामन्तर्भावयन्ति। व्यञ्जना तु प्रसिद्धभर्तृहर्यादिवैयाकरणसिद्धान्तसम्मतेति कृत्वाऽप्रत्याख्येया। अतः शास्त्रकारानुमोदिते प्रसिद्धे व्यापारे ध्वनौ जागरूके सति, शास्त्रकारानुमोदितानां व्यापारान्तराणां स्वीकारः प्राचीनपरिपाटिविरुद्ध इति विचार्य भट्टनायकप्रोद्भावितं व्यापारद्वयं निराक्रियते ध्वनिवादिभिः। परं रत्यादीनां साधारणीकरणं रसानुभूतावववश्यं

---

१, द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्।
पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, ध्वन्यालोक-लोचन-टीका, पृ० ८७

२. व्यापारस्य विषयमुखेन स्वरूपप्रतिलम्भात्तत्प्राधान्येन प्राधान्यात् स्वरूपेण विदितत्वाभावाद् विषयस्यैव समग्रभरसहिष्णुत्वम्। तस्माद्विषय एव व्यङ्ग्यनामा जीवितत्वेन वक्तव्यः, यस्य गुणालङ्कारकृतचारुत्वपरिग्रहसाम्राज्यम्।
द्विवेदी, गिरिजाप्रसादः, रुय्यक-अलङ्कारसर्वस्वम्, पृ० १३

स्वीकार्यं भवति। नाम्नि खल्वयं विवादः । असौ व्यापारो रत्यादीनां साधारणी-करणात्मा भावनाभिधानेन व्यपदिष्टो भट्टनायकेन, ध्वनिवादिभिस्त्वसौ व्यञ्जना-व्यपदेशेन ।[1] परं रसविषयकस्यास्य व्यापारस्यान्वेषको भट्टनायकः । व्या-पारस्य भावकत्वव्यञ्जनानामभ्यां पृथक् पृथग्व्यपदेशकरणं तु विवादास्पदं भवेत्, परं न तस्य व्यापारस्य प्रत्याख्यानं कर्तुं शक्यते ।

यच्च रुय्यकाचार्येण भट्टनायकस्य व्यापारप्राधान्यपक्षो निष्पीडितस्तदपि न युक्तियुक्तम् । यतो हि ध्वनिसिद्धान्तेऽपि व्यञ्जनात्मनो व्यापारस्य प्राधान्यम-भ्युपगम्यत एव । अन्यथा महिमभट्टकुन्तकादिभिः काव्ये व्यङ्ग्यार्थः सम्प्रतिपन्न एव । केवलं व्यङ्ग्यार्थस्य व्यञ्जनया ध्वननं तस्य च ध्वनिरिति संज्ञा तैर्विरुध्येते । किञ्चापराद्धं भट्टोद्भटादिभिः । तैरपि समासोक्तिपर्यायोक्ता-द्यलङ्कारभङ्ग्या व्यङ्ग्यार्थः स्वीकृत एव । परं ध्वनिमार्गाध्वनीनैराचार्यैः सर्वाभ्युपगतस्य व्यङ्ग्यार्थस्य व्यञ्जनावेद्यत्वमेव स्थिरीक्रियते । अतस्तेषामपि व्यापारप्राधान्यपक्ष एव महानाग्रहः । यद्येवं न स्यात्तर्हि व्यङ्ग्यार्थस्यानुमेय-त्वादिखण्डनमकिञ्चित्करम् । ध्वनिवादिभिरपि ध्वनिसिद्धान्ते व्यञ्जनाव्यापार-प्राधान्यं प्रतिष्ठापितम्, यतो हि तैरपि रसस्य व्यञ्जनावेद्यत्वं समर्थयद्भिः काव्ये व्यापारप्राधान्यमेवाभ्युपगतम् ।

यद्यपि व्यञ्जनावादिभिः सहृदयविषयो रसभोगीकरणात्मा भोजकत्व-व्यापारोऽपि व्यञ्जनायामेवान्तर्भावितः, परं तथापि रसानुभूतौ कार्यकारण-परम्परा तु स्वीकार्यैव । भावकत्वाख्यो व्यापारो रसानुभूतौ कारणभूतः, तस्मिन् सति हि रसभोगः । रत्यादीनामसाधारण्ये का नाम चर्चा रसभोगस्य । अतः प्रथमं विभावानुभावादीनामपूर्वा योजना, तेषां साधारण्येनोपस्थित्यनन्तरञ्च भावितस्य रसस्य भोगः । एवं रसभोगप्रक्रियायां कार्यकारणयोः शृङ्खलां गवेषतया भट्टनायकेन द्वौ व्यापारावभ्युपगतौ । प्रथमो रसभोगे कारणभूतः । द्वितीयश्च कार्यभूतः । साधनांशे साधारणीकरणात्मा भावकत्वव्यापारः, साध्यांशे तु स्वयमेव भोजकत्वव्यापारः । यदा विभावानुभावादयो निर्विशेषाः सन्त उपस्थिता भवन्ति, तदा घनमोहान्ध्यसंकटतानिवृत्तिद्वारेण

---

1. The only difference between the Dhvanikāra, Bhaṭṭanā-yaka and Mahimabhaṭṭa was as regards the function par excellence which is operative in poetry....
—V. V. Sovani, Pre-Dhvani School of Alaṁkāra, Sir R. G. Bhandarkar Commemoration Volume, p. 391

आत्मस्वरूपस्यानन्दस्य भोगः। एवं रसभोगः कार्यरूप आत्मचैतन्यानन्दावरणनिवारकं किञ्चित् कारणमपेक्षते। तथा सति रसानुभूतिसमये या कार्यकारणश्रृंखला असावेव भट्टनायकेन भावकत्वभोजकत्वव्यापारद्वयनाम्ना सुनियोजिता। ध्वनिवादिभिस्तु विभावानुभावादीनां योजनैव रसाभिव्यक्तिरिति कारणांशे कार्यांशे चैक एव व्यापारो व्यञ्जनानामा स्वीकृतः।

इत्थं भावकत्वभोजकत्वव्यापारद्वयं यद् भट्टनायकेनान्वेषितम्, तत्प्रसिद्धशास्त्रकारोक्तशब्दव्यापारबाह्यत्वात् प्रत्याख्येयमपि भवेन्नाम, परं तद्व्यापारद्वयोद्भावनद्वारा रत्यादीनां साधारणत्वापादनं रसभोगञ्च व्याकुर्वता भट्टनायकेन रससिद्धान्ते नवीना दिगुन्मीलिता।

——:०:——

## दशमोऽध्यायः

# कुन्तकस्य वक्रोक्तिप्रस्थानं व्यञ्जना च

यद्यपि वक्रतावादिना कुन्तकाचार्येण न तथा ध्वनिर्विध्वंसितो यथा भट्टनायकेन महिमभट्टेन चासावुत्पाटितस्तथापि वैदग्ध्यभङ्गीभणितिस्वभावा वक्रोक्तिरेव तस्य काव्यात्मत्वेनेष्टा ।[1] तन्मते कविप्रतिभानिर्वर्त्यमुक्तिवैचित्र्यमेव काव्यस्य परमं तत्त्वम् । शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धनविविक्तत्वं हि नाम यत्काव्यम्, तद्वैलक्षण्यं कविव्यापारमहिम्ना वैचित्र्यमापन्नयाऽनया वक्रोक्त्यैव । वक्रत्वशाणोल्लीढौ वैचित्र्यपदवीमवतीर्णाविव शब्दार्थौ सहृदयहृदयधामस्वाह्लादमाधातुं क्षमेते । यत्र कविप्रतिभादारिद्र्यान्नोक्तेश्चमत्कारः कश्चित् समुल्लसति, तत्र लोकप्रसिद्धसाधारणशब्दार्थोपनिबन्धनान्न काचित्तद्विदाह्लादक्षमता । यथा मुनिप्रणीतानि सम्बोधनमात्रपराणि स्तोत्राणि, 'गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः'[2] इत्यादीनि साधारणेतिवृत्तमात्रकथनपराणि वचनानि कविप्रतिभादारिद्र्यवशादुक्तिवैचित्र्यस्याभावे काव्यतत्त्वज्ञानां सचेतसां मनांसि प्रीणयितुं नालं भवन्ति । प्रत्युत प्रतिभाप्रतिभासमानमघटितपाषाणशकलकल्पमणिप्रख्यमेव वस्तु विदग्ध-कवि-विरचितवक्रवाक्योपारूढं शाणोल्लीढमणिमनोहरतया तद्विदाह्लादकारिकाव्यत्वमधिरोहति[3] । तद्यथा——चन्द्रोदयवर्णनपरेऽधोदत्ते पद्ययुगले, एकत्र कविप्रतिभोल्लासेन विकसन्त्या वक्रताया अपूर्वः कश्चिच्चमत्कारः, अपरत्र च तदभावे सत्स्वपि चन्द्रोदयवर्णनपरेषु शब्दार्थेषु नासौ विच्छित्तिः काचित्तद्विदाह्लादक्षमा ।

---

१. वक्रोक्तिजीवितकारः पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवितमुक्तवान् ।
—द्विवेदी, गिरिजाप्रसादः, राजानकरुय्यकः, अलङ्कारसर्वस्वम्, पृ० ६

२. गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥
भामहः, काव्यालङ्कारः, २,८७

३. डे, सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० ६

**मानिनीजनविलोचनपातानुष्णबाष्पकलुषानभिगृह्णन् ।**
**मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥[1]**

अत्र कविप्रतिभासमुल्लासेन यद् वक्रत्वं नाम शब्दार्थयोस्तदेव काव्यात्मभूत परमाह्लादकारि । परमधोलिखिते पद्ये उक्तिवैचित्र्याभावे पूर्वोक्त एवार्थो नाह्लादकरः ।

**क्रमादेकद्वित्रिप्रभृति परिपाटीः प्रकटयन्**
**कलाः स्वैरं स्वैरं नवकमलकन्दाङ्कुररुचः ।**
**पुरन्ध्रीणां प्रेयो विरहदहनोद्दीपितदृशां**
**कटाक्षेभ्यो बिभ्यन्निभृत इव चन्द्रोऽभ्युदयते ॥[2]**

अत्र चन्द्रोदयरूपोऽसावेवार्थः प्रतिपादितो विदग्धानां मनांसि न तथाऽऽवर्जयति यथा पूर्वोक्तः कविप्रतिभाप्रभावेन भ्राजिष्णुरर्थः । अन्तरञ्चानयोर्निरन्तरकाव्याभ्यासवशात् मसृणीकृतान्तःकरणैः सहृदयैरेवानुभूयते । त एव जानन्ति, कुत्र कविप्रतिभानिर्वाह्यमुक्तेर्वैचित्र्यं परां प्रीतिं पुष्णाति, कुत्र च तदभावे विरसतैव सहृदयहृदयोद्वेजिनी । समानार्थोपनिबन्धनेऽपि कविकृतीनामुक्तिवैचित्र्येण शोभनत्वं तदभावे चाशोभनत्वमिति ।

यत्र परस्परस्पर्धिनौ द्वौ शब्दार्थौ साहित्यभावेनावतिष्ठेते, तत्रैव कविप्रतिभासंस्पर्शेन विलसन्तौ तौ काव्यस्य परां भूषां पुष्णीतः । न केवलं शब्देन नापि च केवलमर्थेन कश्चिच्चमत्कारः, अपितु भामहपदाङ्कानुगेन कुन्तकेन शब्दार्थयोः परस्परस्पर्धित्वं नाम यत् साहित्यं तदेव काव्यत्वं प्रोक्तम्[3] । एवं स्थिते कविव्यापारमहिम्ना यत्र द्वयोः शब्दार्थयोः परस्परस्पर्धिसाहित्यवशाच्छोभनत्वं, तत्रैवोक्तेः परमवैचित्र्यादुत्तमं काव्यं भवति । एवंविधानि परस्परस्पर्धिशब्दार्थसाहित्यलक्षणानि काव्यानि सहृदयहृदयमहाह्लदेषु परमानन्दतरङ्गान् समुच्छालयन्ति । तद्यथा—

---

१. वक्रोक्तिजीवितम्, पृ० ९

२. तत्रैव, पृ० १०

३. शब्दार्थौ काव्यम्, वाचको वाच्यं चेति द्वौ सम्मिलितौ काव्यम् । द्वावेकमिति विचित्रैवोक्तिः । तेन यत्केषाञ्चिन्मतं कविकौशलकल्पितकमनीयातिशयः शब्द एव केवलं काव्यमिति, केषाञ्चित् वाच्यमेव रचनावैचित्र्यचमत्कारकारि काव्यमिति पक्षद्वयमपि निरस्तं भवति । तस्माद् द्वयोरपि प्रतितिलमिव तैलं तद्विदाह्लादकारित्वं वर्तते, न पुनरेकस्मिन् ।
तत्रैव, पृ० ७

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्[१] ॥

अत्र शशिनः सुरतसुखपरिम्लानेन कामिनीकपोलेन सह यदौपम्यं तत्कविप्रतिभासमुत्थमर्थसौन्दर्यम्, ककारादीनां वर्णानामपूर्वयोजनयाऽनुप्रासरूपञ्च शब्दचारुत्वम् । अनयोः शब्दार्थयोः परस्परस्पर्धित्वरूपसाहित्येनावस्थानादुत्तमं काव्यं सहृदयहृदयानुरञ्जकम् । न केवलं शब्दो नापि च केवलमर्थः, परं द्वौ परस्परं मिलितौ कविप्रतिभाशाणसमुल्लीढौ साहित्येनावतिष्ठेते, अतोऽपूर्वा कापि विच्छित्तिरत्र सहृदयहृदयसमास्वाद्या ।[२]

एवं कुन्तकस्य दर्शने परस्परस्पर्धिलक्षणेन साहित्येनावस्थितयोः शब्दार्थयोः कविव्यापारमहिम्ना यद् वैचित्र्यमाधीयते, तेन काव्ये काप्यपूर्वा सहृदयहृदयाह्लादकारिणी शोभा समुल्लसति । एतेनोक्तेर्वैचित्र्यं काव्यस्यानुप्राणकं परमं तत्त्वं समायातम् । वैदग्ध्यभङ्गीभणितिरूपयानया वक्रोक्त्या काव्यस्य सर्वं शरीरं व्याप्तम् । वर्णपदवाक्यप्रबन्धादिषु तद्दर्शनात्[३] ।

वक्रोक्तेर्महिमा कुन्तकाचार्येणैवादौ न गीतः । परमलङ्कारतन्त्रप्रजापतिना भामहाचार्येणापि वक्रोक्तेर्माहात्म्यमुद्घाटितम् । यथाहि—

न नितान्तादिमात्रेण जायते चारुता गिराम् ।
वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः ॥[४]

इत्यनेन—

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥[५]

---

१. वक्रोक्तिजीवितम्, पृ० ११

२. अत्रारुणपरिस्पन्दमन्दीकृतवपुषः शशिनः कामपरिक्षामवृत्तेः कामिनीकपोलफलकस्य पाण्डुत्वसाम्यसमर्थनादर्थालङ्कारपरिपोषः शोभातिशयमावहति वक्ष्यमाणवर्णविन्यासवक्रतालक्षणः शब्दालङ्कारोऽप्यतितरां रमणीयः ।

—वक्रोक्तिजीवितम्, पृ० ११

३. वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता ।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः ॥
वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
वक्रोक्तिजीवितम्, १, १९-२०

४. भामहः, काव्यालङ्कारः, १, ३६

५. तत्रैव, २, ८५

इत्यादिना च भामहेनादौ वक्रोक्तेर्दिगुत्सूत्रिता । तदनुसृत्य कुन्तकाचार्येण भामहोपज्ञेयं वक्रोक्तिः सप्रपञ्चं व्याख्याता ।[1]

दण्डिना तत्प्रणीतकाव्यलक्षणग्रन्थस्य टीकाकर्त्रा रत्नश्रीज्ञानेन चातिशयोक्तिनाम्ना वक्रोक्तेरेव माहात्म्यं भणितम्[2] । दण्डिनो लोकसीमातिवर्तिन्या अतिशयोक्त्यास्तदेव बीजं यद्विचित्राभिधानरूपायाः कुन्तकस्य वक्रोक्तेः । दण्डिनातिशयोक्तीतिव्यपदेशेन वक्रोक्तेरात्मभूतं तत्त्वमेवोद्घाटितम् । यतो हि दण्डिनोऽप्यतिशयोक्तिरलङ्काराणां प्रसवित्री । तद्विनाऽलङ्काराणामशोभनात् । यद्यपि यथालिखितक्रमेण दण्डिना वक्रोक्तिर्न व्याख्याता, तथाऽप्यतिशयोक्तिव्याजेन वक्रोक्तेश्चमत्कारस्तेन काव्येऽभ्युपेत एव । वक्रोक्तिविषये दण्डिनो भामहेन सह पूर्णं मतैक्यम् । केवलमियान् खलु विशेषो यद्दण्डिना स्वभावोक्तिर्वक्रोक्तेर्भिन्ना समाख्याता[3], भामहाचार्येण च स्वभावोक्तिरपि वक्रोक्तावन्तर्भाविता । भामहमते स्वभावकथनमपि वक्रताप्रकार एव, परं दण्डिमते स्वभावकथनं वक्रकथनात् सुतरां भिन्नमवरञ्च । अत एव दण्डिना वाङ्मयं द्विधा विभक्तम् । एवं वक्रोक्तिं स्वीकुर्वताऽपि दण्डिना स्वभावोक्तिं वक्रोक्तेर्निष्कास्य तत्क्षेत्रं सङ्कोचितम् ।

परतो वामनाचार्येण **सादृश्याल्लक्षणा वक्रोक्तिः**[4] इति वदता सादृश्य-

---

१. वक्रोक्तिरेव सर्वेषामलङ्काराणां मूलमिति यन्मतं भामहः पूर्वं स्थिरीकृतवान्, तस्यैव प्रकारान्तरमाश्रितो भूयान् प्रपञ्चो वक्रोक्तिजीवितकारस्य कुन्तकाचार्यस्य ग्रन्थे समुपलभ्यते ।

शर्मा, वटुकनाथः, भामहः, काव्यालङ्कारः, प्रास्ताविकम्, पृ० ७

२. (क) अलङ्कारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहतामुक्तिमिमामतिशयाह्वयाम् ॥

दण्डी, काव्यादर्शः, २, २२०

(ख) सा चेयमलङ्काराणामन्येषामुत्तमा प्रधाना, अत्यन्तमनोहरत्वात् । यथाहि—वस्तुनो मनोज्ञस्य प्रकृत्या ततोऽप्यतिरिक्ता काप्यवस्था प्रतिसंस्क्रियते, सा नितरामनुरागमातनोतीत्यलङ्कारराजाधिराजत्वेनैषा अभिषिच्यते कविभिरिति ।

ठाकुर, अनन्तलालः, दण्डी, काव्यलक्षणं, रत्नश्री टीका, पृ० १३५

३. भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ।

दण्डी, काव्यादर्शः, २,३६०

४. वामनः, काव्यालङ्कारसूत्रवृत्तिः, ४, ३, ८

निबन्धनलक्षणानतिरिक्तं वक्रोक्तिस्वरूपं प्रोक्तम्। असौ च स्वच्छन्दसञ्चारिणी व्यापिका भामहोक्ता वक्रोक्तिर्लक्षणागले बद्ध्वातीव लघुतामानीता। वामनाचार्यमते वक्रोक्तिर्विशेषालङ्कारपर्यवसायिनी, नासावलङ्काराणां प्राणभूता यथा तत्स्वरूपं भामहेन प्रोक्तम्। परं वक्रोक्तेर्व्यापकं स्वरूपमस्वीकुर्वताऽपि वामनेन ओजश्श्लेषकान्त्यादिषु गुणेषु वक्रोक्तेश्चमत्कारः प्रच्छन्नरूपेणाभ्युपेत एव। अतो वामनमतेऽपि यथा तथा वक्रोक्तेर्माहात्म्यं काव्येऽस्त्येव।

रुद्रटाचार्येण वक्रोक्तिर्विशेषालङ्काररूपेणैव स्वीकृता, नत्वलङ्काराणां जननीत्वेन। तदारभ्य परवर्तिभिरालङ्कारिकैर्वक्रोक्तिरलङ्काराणामन्यतमप्रकाररूपेणैव स्वीकृता नत्वलङ्काराधिराजत्वेन। रुद्रटेन वक्रोक्तिरलङ्काररूपा द्विधा विभक्ता[1]। तद्यथा—(१) काकु-वक्रोक्तिः (२) श्लेष-वक्रोक्तिः।

मम्मटविश्वनाथादिभिः परवर्तिभिराचार्यैः रुद्रटोक्तदिशा वक्रोक्तिर्विशेषालङ्काररूपेणैव व्याख्याता[2]।

एवं भामहाचार्येण सर्वालङ्कारजननीरूपेण सिद्धान्तिता वक्रोक्तिरलङ्कारमात्रार्थे पर्यवसिता सती परवर्तिनामालङ्कारिकाणां ग्रन्थेष्वतीव लघ्वी जाता। केवलं भामहानन्तरवर्तिना कुन्तकेनैवासौ पट्टमहिषीत्वेनाभिषिक्ता।

---

१. वक्त्रा तदन्यथोक्तं व्याचष्टे चान्यथा तदुत्तरदः।
वचनं यत्पदभङ्गैर्ज्ञेया सा श्लेषवक्रोक्तिः॥
विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशेषतो भवति।
अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः॥

रुद्रटः, काव्यालङ्कारः, २, १४-१६

२ (क) यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥

मम्मटः, काव्यप्रकाशः, ६,७८

(ख) अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्तथा द्विधा॥

विश्वनाथः, साहित्यदर्पणः, १०,९

यद्यपि वक्रोक्तीति पदं भामहकुन्तकपूर्ववर्तिषु प्राचीनेषु काव्येष्वपि दृश्यते,[1] परं न तत्र वक्रोक्तिपदं पारिभाषिकेऽर्थे प्रयुक्तम् । तत्र वक्रोक्तिपदस्यार्थो वक्र-वचनमात्रार्थे पर्यवसितः । न तत्र वक्रोक्तिपदस्य तादृशोऽभिप्रायो यादृशो भामह-कुन्तकाभिमतः ।

आनन्दवर्धनोद्धृते मनोरथकविकृते श्लोके वक्रोक्तिपदस्यालङ्कारारूपेऽर्थे व्यवहारः[2] । अभिनवगुप्तवचनप्रामाण्यादिदं प्रतीयते यन्मनोरथकविकृते पद्ये वक्रोक्तिपदं सर्वालङ्कारार्थे प्रयुक्तमस्ति[3] । यथा तथा वा भवतु, मनोरथ-कविकृतेन श्लोकेनेदं स्पष्टं भवति यत्तस्य समये वक्रोक्तिपदव्यवहारः पारिभा-षिकेऽर्थे प्रसिद्धिं प्राप्तः ।

भामहेन वक्रोक्तेरयं विचारो मनोरथनाम्नः कवेर्गृहीतोऽथवा मनोरथेन भामहोक्ता वक्रोक्तिस्तस्य ग्रन्थादुपात्तेति विनिगमनाभावे निश्चेतुं न पार्यते । राघवपाण्डवीयकारस्य वचनादिदं प्रतीयते यत् सुबन्धुबाणभट्टादयः कवयो वक्रोक्तिमार्गनिपुणा आसन्[4] । परं तेषां वक्रोक्तिः किं भामहकुन्तकादिभिरङ्गीकृता

---

१. (क) 'वक्रोक्तिनिपुणेन विलासिजनेन'
'एषापि बुध्यत एवैतावतीः वक्रोक्तिः'
बाणभट्ट-कादम्बरी, उद्धरणम्, Kane, P. V., History of Sanskrit poetics, p. 384
(ख) सा पत्युः प्रथमापराधसमये सख्योपदेशं विना ।
नो जानाति सविभ्रमांगवलनावक्रोक्तिसंसूचनम् ॥
अमरुः, अमरुशतकम्, २०

२. यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति
व्युत्पन्नै रचितं च यन्न वचनैर्वक्रोक्तिशून्यञ्च यत् ।
शास्त्री, एस० कुप्पुस्वामी, आनन्दवर्धनः, ध्वन्यालोकः, पृ० ५८

३. वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वालङ्काराभाव उक्त इति केचित् ।
तत्रैव, ध्वन्यालोक-लोचन-टीका, पृ० ७०

४. सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥
कविराजः, राघवपाण्डवीयम्, १,४

अन्यो वार्थो वक्रोक्तिपदस्येति न स्फुटम् । तथापि काव्यलक्षणग्रन्थरचयितृष्वादौ भामहेनैव स्वकीये काव्यालङ्कारे वक्रोक्तिरुपनिबद्धा । अतः असावेवास्या व्यवस्थापक आद्य आचार्यः प्रतीयते । भामहोत्सूत्रितदिशमनुसृत्यैव कुन्तकेन वक्रोक्तिजीविते वक्रोक्त्या व्यापि स्वरूपं स्थिरीकृतम्, काव्यात्मत्वञ्च तस्याः सिद्धान्तितम् ।

एवं वक्रोक्तेर्विचारः प्राचीनो भवेन्नाम, परं प्रस्थानरूपेण तस्याः प्रतिष्ठा कुन्तकेन वक्रोक्तिजीविते ग्रन्थे कृता । तस्य दर्शनञ्च भामहाचार्यविचारप्रभावितमिति निश्चप्रचम् । तद्यथा—भामहाचार्येण हेतुसूक्ष्मलेशादीनामलङ्कारत्वं प्रत्युक्तम्, उक्तिवैचित्र्यस्याभावात्[1] । अयं विचारः कुन्तकाभिमतोऽप्यस्ति । तेनाप्युक्तिवैचित्र्यस्याभावे काव्यत्वमपलपितम् ।[2] भामहमते सर्वातिशायिन्या वक्रोक्त्यैवालङ्काराः स्वरूपलाभं लभन्ते । वक्रत्वं हि नाम सर्वालङ्कारजीवातुभूतम् । भामहाचार्येण वक्रोक्तिर्विशेषालङ्काररूपेण नोपात्ता, प्रत्युत सर्वालङ्कारप्रपञ्चस्य जननीरूपेणेयं गृहीता । तदेवोपजीव्य कुन्तकस्य वक्रोक्तिदर्शनं प्रवृत्तम् । प्राचीनपरिपाटिमनुरुध्य सहितयोः शब्दार्थयोः काव्यत्वं ब्रुवता कुन्तकाचार्येण भामहोत्सूत्रितं तदेव वक्रोक्तिरूपं काव्यतत्त्वं व्यापकरूपेण वक्रोक्तिजीविते उपस्थापितम् । अतो वक्रोक्तिमूलकं कुन्तकस्य दर्शनं सर्वथा भामहपदाङ्कानुबन्धीति निर्गलितार्थः ।

कुन्तकाचार्येण परम्पराप्राप्तां वक्रोक्तिं विस्तार्य सर्वं काव्यचारुत्वं तच्छरीरेऽन्तर्भावितम् । वाच्यवाचकधर्ममूलानामलङ्काराणां शोभा, तरुणीलावण्यसदृशस्य प्रतीयमानार्थस्य चारुत्वं वा सर्वमेतद् वक्रोक्तेः षड्भ्यः प्रकारेभ्यो नातिरिच्यते । सर्वं काव्यसौन्दर्यं वक्रोक्तिमुखप्रेक्षम् । वक्रोक्त्या एव चारुत्वं व्यवस्थापयन् कुन्तकः काव्ये ध्वनिप्राधान्यं प्रत्यवतिष्ठते । वक्रोक्तिमूलके काव्यचारुत्वे सिद्धे ध्वन्यादिरूपः पक्षान्तरः प्रतिष्ठां न लभते । एवं कण्ठतो ध्वनिमदूषयताऽपि कुन्तकेन वक्रोक्तेः सर्वातिशायित्वं रूपं व्यवस्थाप्य काव्ये ध्वनेरात्मत्वं तावद् विप्रतिपन्नमेव ।

कुन्तकोऽभिधावादी । यतो ह्यभिधातिरिक्तो नान्यः शब्दव्यापारस्तेनानुमन्यते । तथा हि वक्रोक्तिस्वरूपमुद्घाटयता तेन प्रोक्तम्—

---

१. हेतुः सूक्ष्मोऽथ लेशश्च नालङ्कारतया मतः ।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ॥

भामहः, काव्यालङ्कारः, २, ८६

२. वस्तुमात्रञ्च शोभातिशयशून्यं न काव्यव्यपदेशमर्हति ।
—डे, सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० ८१

**काऽसौ ? वक्रोक्तिरेव । वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा । कीदृशी वैदग्ध्यभङ्गीभणितिः । वैदग्ध्यं विदग्धभावः, कविकर्मकौशलं तस्य भङ्गी विच्छित्तिस्तया भणितिः । विचित्रैवाभिधा वक्रोक्तिरुच्यते[1] ।**

अनेनेदं प्रतिपद्यते यत्कुन्तकस्याभिधा न सामान्याऽभिधेयार्थबोधोपरता शास्त्रप्रसिद्धाऽभिधा । परं विचित्रैवाभिधा । वैचित्र्यञ्चास्या लोकातिक्रान्तरूपेणावस्थानात् । लोके व्यवहृताः साधारणा घटपटादयश्शब्दाः काञ्चिच्चमत्कृतिं नातन्वन्ति, उक्तेर्वैचित्र्याभावात् । शब्दार्थयोश्चमत्कारश्च तयोर्लोकोत्तररूपेणावस्थानादेव । अतोऽभिधा यदा कविकर्मकौशलमहिम्ना वक्रत्वमाप्नोति, तदा विचित्राऽसावभिधा काव्ये परमशोभाधायिनी भवति । एवं कुन्तकोक्ताऽभिधा, न सामान्याभिधा, प्रत्युत कविकौशलोपस्कृता विचित्रैवाभिधा काचित् । कुन्तकेनास्यां विचित्रायामभिधायामेव लक्षणाव्यञ्जनेऽप्यन्तर्भाविते । यथोक्तं तेन—

**ननु च द्योतकव्यञ्जकावपि शब्दौ संभवतः, तदसंग्रहान्नाव्याप्तिः, यस्मादर्थप्रतीतिकारित्वसामान्यादुपचारात्तावपि वाचकावेव । एवं द्योत्यव्यङ्ग्ययोरर्थयोरपि प्रत्येयत्वसामान्यादुपचाराद् वाच्यत्वमेव ।[2]**

अयमाशयः । यथा वाचकः शब्दोऽर्थप्रतीतिकारितायै व्यवह्रियते, तथैव व्यञ्जकद्योतकपदानामप्युपयोगः । यथा च प्रत्येयत्वं वाच्यार्थस्य धर्मः, तथैव व्यङ्ग्यार्थोऽपि प्रत्येयत्वसामान्याद् वाच्यो व्यपदिश्यते । इत्थं प्रत्येयत्वार्थप्रतीतिकारित्वधर्मौ वाच्यवाचकव्यङ्ग्यव्यञ्जकशब्दार्थयोः समानभावेन प्रसक्तौ । अत एवोपचाराद् व्यङ्ग्यव्यञ्जकयोः शब्दार्थयोर्वाच्यवाचकरूपेण नामकरणमुपपद्यते । एवं कुन्तकदर्शने व्यङ्ग्यव्यञ्जकयोः शब्दार्थयोर्वाच्यवाचकसब्रह्मचारित्वमेव, तयोर्विशेषादर्शनात् । इदमत्र बोध्यम् । कुन्तकेन वाच्यवाचकौ शब्दार्थौ न तथा गृहीतौ यथा वेदवादिना मीमांसकेन । परं तन्मते तयोर्व्यापकं स्वरूपम् । तथा सति यथा व्यङ्ग्यव्यञ्जकयोर्वाच्यवाचकाभ्यां न कश्चिद्विशेषस्तद्वद् व्यञ्जनाऽपि न विचित्राभिधाव्यतिरिक्ता । यथोपचाराद् द्योत्यद्योतकयोः शब्दार्थयोर्वाच्यवाचकेत्यभिधानमुपपन्नम्, तथैवोपचारवशाद् व्यञ्जनाप्यभिधैव । द्वयोरर्थप्रत्यायनकारितायाः समानभावेन व्याप्तत्वात् । अनेनेदं प्रतीयते यत्कुन्तकमते नाभिधातिरिक्तोऽन्यो व्यञ्जनादिकः कश्चिच्छब्दव्यापारः ।

वस्तुतस्त्वभिधावैचित्र्यवादिना कुन्तकेनाऽप्यभिधाया वैलक्षण्यं प्रतिपादयता ध्वननद्योतनावगमनादिव्यपदेशनिरूपितो व्यञ्जनाव्यापारो नोपेक्षितुं शक्यः ।

---

१. डे, सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० २२

२. तत्रैव, पृ० १५

अभिधाया यद् वैचित्र्यं तदसाधारणशब्दार्थोपनिबन्धनमूलकमेव। ध्वनिवादिभिरपि वाच्यवाचकभावं न्यक्कृत्य व्यङ्ग्यव्यञ्जकभावाभ्युपगमेन शब्दार्थयोरसाधारणत्वं प्रत्यपादि । ध्वनिकाव्ये शब्देनाभिधेयोऽर्थो न्यक्कृत्य, अर्थेन च स्वार्थं उपसर्जनीकृत्य व्यङ्ग्यार्थः प्रत्याय्यते[1] । अतो ध्वनावपि साधारणैर्लोकप्रसिद्धैः शब्दार्थैर्न निर्वाहः, परं शब्दार्थयोर्वेदशास्त्रप्रसिद्धशब्दार्थवैलक्षण्यात्तयोर्व्यङ्ग्यव्यञ्जकभावे एवोत्तमं काव्यत्वम् । कुन्तकेनापि साधारणशब्दार्थविविक्तयोर्विवक्षितार्थैकवाचक-सहृदयाह्लादकारि-स्वस्पन्दसुन्दरशब्दार्थयोरेव काव्यत्वं प्रोक्तम् । उभयोर्दर्शने साधारणशब्दार्थाभ्यां काव्यस्य न काचिद् भूषा। परं प्रसिद्धशब्दार्थातिरेकिणौ शब्दार्थाविव विवक्षितार्थबोधसामर्थ्यात् स्वस्पन्दसौन्दर्याच्च काव्यस्य श्रियमातनुतः[2] ।

इत्थं स्थिते विशेषार्थाभिधायित्वेनैव शब्दस्य यत् वैचित्र्यं कुन्तकेन प्रोक्तं तत्सर्वथा ध्वनिकारप्रोक्तव्यञ्जकशब्दस्वरूपानुकूलमेव। यतो हि ध्वनिसिद्धान्तेऽपि विवक्षितस्य प्रतीयमानार्थस्य प्रत्यायकत्वेनैव सहृदयहृदयानुरञ्जिका शब्दस्य व्यञ्जकतोदेति । कुन्तकदर्शनेऽपि सामान्यवाच्यार्थानभिधायिनो वक्रत्वशाणोल्लीढा विवक्षितार्थबोधसमर्था वाचकाः शब्दाः काव्य उपादेया भवन्ति, नेतरे। एवमुभयोः सिद्धान्ते साधारणस्य वाच्यवाचकधर्मस्य सर्वथा परित्यागः। तदेवानर्घं तत्त्वं कुन्तकेन वक्रोक्तिनाम्ना व्याकृतम्, ध्वनिकारेण च ध्वनिनाम्ना। सर्वथा प्रसिद्धशब्दार्थातिरिक्तौ विचित्रौ शब्दार्थौ द्वयोरिष्टौ । कुन्तकदर्शने वक्रत्वेन शब्दार्थयोः शोभा, ध्वनिकारदर्शने तु व्यञ्जकत्वेन। परं प्रसिद्धशब्दार्थपरित्यागः समानभावेन प्रसक्तो द्वयोः सिद्धान्तयोः । एतदेवोदाहरणेन स्पष्टीक्रियते ।

---

१. यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ।।

आनन्दवर्धन-ध्वन्यालोकः, १, १३

२. विवक्षितो योऽसौ वक्तुमिष्टोऽर्थस्तदेकवाचकस्तस्य एकः केवलमेव वाचकः। कथमन्येषु सत्स्वपि । अपरेषु तद्वाचकेषु बहुष्वपि विद्यमानेषु। तथा च—सामान्यात्मना वक्तुमभिप्रेतो योऽर्थस्तस्य विशेषाभिधायी शब्दः सम्यग् वाचकतां न प्रतिपद्यते ।

डे, सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० १६

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥[1]

अस्मिन् पद्ये पिनाकीतिपदं परिवर्त्य तत्स्थाने कपालीति पर्यायवाचिपद-प्रयोगः साधुः, यतो हि **कपालिनः** इति पदस्य चारुत्वं भगवतो महादेवस्यानभि-भवनीयस्वरूपात्मकार्थाभिव्यञ्जनादेव । महादेवार्थवाचकशब्दसहस्रसम्भवेऽपि 'कपालिनः' इति पदं व्यञ्जकत्वादेव काव्यस्य शोभातिशयं पुष्णाति । पिनाक्या-दीनां पदानां प्रयोगे भगवत्याः पार्वत्या भगवति भवे जुगुप्सोदयरूपः कविविव-क्षितोऽर्थो नोदेति । अतोऽभीप्सितस्य सकलामङ्गलनिधानत्वदुराचारत्वस्पर्शसम्भा-षणाद्यनर्हत्वाद्यर्थस्य प्रत्यायनसामर्थ्यं कपालिपदस्यैव । सर्वथानभिभवनीयाकृति-वशान्महादेवो वरत्वेन नाभिलषणीय इत्यमुमर्थं यथा कपालीतिपदं स्फोरयति न तथा पिनाक्यादीनि पर्यायवाचीनि पदानि । अत एवासाधारणार्थध्वननात् कपालिपदस्य व्यञ्जकत्वं ध्वनिवादिभिः प्रशस्यते । अयमेव भावः कुन्तकेन वाचकवक्रताभङ्ग्या प्रकटितः[2] ।

एवं शास्त्रादिप्रसिद्धशब्दव्यतिरेकित्वं विवक्षितार्थवाचकत्वञ्च नाम यच्छ-ब्दस्य स्वरूपं कुन्तकेन प्रोक्तं तद्व्यञ्जकाच्छब्दान्न भिन्नम् । तथा सत्यसाधा-रणशब्दार्थछद्मना उपसर्जनीकृतस्वार्थशब्दार्थात्मकं ध्वनिलक्षणमेव प्रोज्जी-वितं कुन्तकेन । विचित्राऽभिधानाम्ना च प्रकारान्तरेण व्यञ्जनैवाभ्यु-पगता ।[3] व्यञ्जकं शब्दं व्यङ्ग्यमर्थं व्यञ्जनाव्यापारञ्च वक्रोक्तिछद्मना स्वीकुर्वन् कुन्तकः सर्वं ध्वनिं वक्रोक्तावन्तर्भावयतीति स्पष्टमेव तस्य भामहा-दिवदन्तर्भावपक्षानुगामित्वम् ।

---

१. कालिदासः, कुमारसम्भवम् ५, ७१

२. अत्र परमेश्वरवाचकशब्दसहस्रसम्भवेऽपि 'कपालिनः' इति बीभत्सरसा-लम्बनविभाववाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कामपि वाचक-वक्रतां विदधाति ।
डे, सुशीलकुमारः, कुन्तकः, वक्रोक्ति-जीवितम्, पृ० १७

3. Though Kuntaka belongs to a different School of Critical thought, he fully recognises the individuality of Dhvani (Suggestion and suggested element) in poetry and also its contribution to aesthetic pleasure.
—A. Shankaran, The Theories of Rasa and Dhvani, p.123

परं विद्याधरादिभिराचार्यैः

**एतेन यत् कुन्तकेन भक्तावन्तर्भावितो ध्वनिस्तदपि प्रत्याख्यातम्**[1] इति वदद्भिः कुन्तकस्य भक्तिपृष्ठानुयायित्वं प्रोक्तम्। वक्रोक्तिजीवितग्रन्थस्य पर्यालोचने क्रियमाणे कुन्तकस्य भक्तिपक्षपातिता स्फुटं न विभाव्यते। तेनोपचारवक्रतायामेवाविवक्षितवाच्याभिधो ध्वनिभेदः कश्चित् समावेशितः, न तु सर्वो ध्वनिरुपचारवक्रतायां तेनान्तर्भावितः। तन्मते वक्रताऽनेकविधा। तद्यथा—(१) वर्णवक्रता (२) पदपूर्वार्धवक्रता (३) पदपरार्धवक्रता (४) वाक्यवक्रता (५) प्रकरणवक्रता (६) प्रबन्धवक्रता[2]। एते वक्रताया मुख्या भेदाः। परं वर्णवक्रतादीनामवान्तरभेदेषु कृतेषु वक्रतयानया सर्वं काव्य-सौन्दर्यं व्याप्तम्। सर्वो ध्वनिः कुन्तकेन वक्रताया बहुविधेषु प्रकारेषु समावेशितो न तु केवलं लक्षणामूलायामुपचारवक्रतायामेव। यद्युपचारवक्रतायामेव सर्वो ध्वनिरन्तर्दध्यात्तदा कुन्तकस्य भक्तिमार्गानुगामित्वं स्यात्। परं ध्वनिः पदपूर्वार्धप्रकरणवक्रतादिषु वक्रताया बहुषु भेदेषु समन्वितो भवति, अतः कुन्तकस्य भाक्तत्वं सहेलं निराकृतमेव भवति।

ध्वनिकारेण यास्तिस्रो ध्वनिविप्रतिपत्तयो ध्वन्यालोके निर्दिष्टास्तासु ये ध्वनिं लक्षणायामन्तर्भावयन्ति ते भाक्ता[3] उच्यन्ते। परं पूर्वोक्तेन विवेचनेनैतत् स्फुटं भवति यत् कुन्तकस्य वक्रोक्तिर्न लक्षणानिबन्धनी परमसौ व्यापिका। विद्याधरादिभिराचार्यैर्लक्षणानुप्राणितायामुपचारवक्रतायां कस्यचिद् ध्वनिभेदस्यान्तर्भावं निरीक्ष्योपलक्षणरूपेण कुन्तकः भक्तौ ध्वन्यन्तर्भाववादी प्रोक्तः। वस्तुतस्तु भक्तेः वक्रोक्तेरंशमात्रस्पर्शात् विद्याधरादीनामाचार्याणां वचनं विभ्रमकरमेव।

यदि भक्तिपदस्य पारिभाषिको लक्षणारूपोऽर्थस्त्यज्यते तस्य चामुख्यो ध्वनिरित्यर्थो गृह्यते, तदा कुन्तकस्य भाक्तत्वमुपपन्नमेव। यतो हि कुन्तकदर्शने वक्रोक्तेरेव

१. (क) त्रिवेदी, क० प्रा०, विद्याधर-एकावली, पृ० ५१
(ख) इदानीं यद्यप्यन्यैरस्य (ध्वनेः) भक्त्यन्तर्भावमुक्तं।
गिरिजाप्रसादो द्विवेदी, रुय्यक-अलङ्कारसर्वस्वम्, पृ० ८

२. वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रितः॥
वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा॥
वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।
कुन्तकः, वक्रोक्तिजीवितम्, १, १९-२१

३. भाक्तमाहुस्तमन्ये
आनन्दवर्धनः, ध्वन्यालोकः, १,१

प्राधान्यात् सर्वो ध्वनिर्भाक्तः गौणः अमुख्य एव। इत्थं काव्ये वक्रोक्तेः पट्टमहिषीत्वेन विराजमानत्वात्, ध्वनेश्च वक्रोक्तावन्तर्भावात्, वक्रोक्त्यपेक्षया ध्वनिः काव्येऽमुख्य इत्याशयो यदि योज्यते, तर्हि कुन्तकस्य भाक्तत्वं युक्तमेव। तेन च भामह-वामन-भट्टनायक-महिमभट्टादीनामपि भाक्तत्वमुपपन्नं भवति। यतो हि तेषामपि दर्शने व्यञ्जनादिको व्यापारो गौण एव, न मुख्यः।[1] परं सर्वस्य ध्वनेरुपचारवक्रतायामन्तर्भावाभावे भक्तिव्यतिरिक्तो न कश्चिद् ध्वनिरिति पक्षो न कुन्तकाभिमतः प्रतीयते।

वस्तुतस्तु काव्यकाञ्चनकषाश्ममानी कुन्तकः काव्ये ध्वनेर्महिमानं नापलपितुं समर्थः। प्रतीयमानार्थसद्भावस्तेन स्वयं प्रतिपन्नः।

यथा हि—

**वक्त्रेन्दोर्न हरन्ति बाष्पपयसां धारा मनोज्ञां श्रियं**
**निःश्वासा न कदर्थयन्ति मधुरां बिम्बाधरस्य द्युतिम्।**
**तस्यास्त्वद्विरहे विपक्वलवलीलावण्यसंवादिनी**
**छाया कापि कपोलयोरनुदिनं तन्व्याः परं पुष्यति॥**[2]

अस्मिन् पद्ये विपक्वलवलीमनोहरकपोलवर्णनेन नायकविरहेण निरन्तरं दूयमानाया नायिकाया विरहावस्था ध्वन्यते। तेन च नायकस्य स्वकान्तासङ्गमरणरणकत्वरा प्रतीयमाना परां शोभामातनोति। एवं विचित्रमार्गं व्याख्यायता कुन्तकेन प्रतीयमानार्थस्य सौभाग्यं स्वहस्तितम्। वाच्यवाचकभिन्नवृत्तिवेद्यत्वञ्च तस्य सम्प्रतिपन्नम्।[3]

---

1. Kuntaka, therefore, in maintaining the primary importance of Vakrokti and regarding Dhvani as a secondary element included therein, certainly belongs to this School; but the same remark applies also to Bhāmaha, Udbhaṭa, Daṇḍin, and Vāmana, of older poetics who apparently include all ideas of Dhvani in particular poetic figures like Paryāyokta etc.

   De, S. K., Introduction to Vakroktijīvita of Kuntaka p. x/iii

2. De, S. K., Vakroktijīvita of Kuntaka, p. 64.

३. प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्यवाचकवृत्तिभ्यां व्यतिरिक्तस्य कस्यचित्॥
कुन्तकः, वक्रोक्तिजीवितम्, १, ५०

वस्त्वलङ्कारसरूपस्त्रिविधो ध्वनिः कुन्तकाभिमत एव। वस्तुवक्रता-व्याख्यानप्रसङ्गे तेन व्यङ्ग्यत्वेनापि वस्तुरूपिणोऽर्थस्य ध्वननमङ्गीकृतम्।[1]

तद्यथा—

**तां प्राङ्मुखीं तत्र निवेश्य तन्वीं**
**क्षणं व्यलम्बन्त पुरो निषण्णाः।**
**भूतार्थशोभाह्रियमाणनेत्राः**
**प्रसाधने सन्निहितेऽपि नार्यः ॥[2]**

अत्र पार्वत्याः सौन्दर्यातिशयरूपिणो वस्त्वात्मनोऽर्थस्य प्रतीतिर्व्यङ्ग्यत्वेनेति वस्तुध्वनिसद्भावाभ्युपगमस्तावत् सिद्ध एव। किञ्च वाक्यवक्रतायां भूयांसि वस्तुध्वनेरुदाहरणानि दर्शनीयानि भवन्ति।

निदर्शनापरिवृत्त्यादिष्वलङ्कारेषूपमायाः प्रतीयमानतायामलङ्कारध्वनिरपि कुन्तकाभिमत एव। किञ्च—

**लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-**
**न्स्मेरेऽधुना तव मुखे तरलायताक्षि।**
**क्षोभं यदेति न मनागपि तेन मन्ये**
**सुव्यक्तमेव जलराशिरयं पयोधिः ॥[3]**

इत्यत्र कुन्तकेन ध्वनिकारमनुकृत्य रूपकालङ्कारस्य प्रतीयमानता कण्ठतः सम्प्रतिपन्ना[4]। एतेन स्फुटं यदलङ्कारध्वनिरपि कुन्तकेन स्वीकृतः।

ध्वनिकारेण रसस्यालङ्कारतामपलप्य तस्य स्वशब्दावाच्यत्वं यथा

---

१. 'वक्रशब्दैकगोचरत्वेन'—वक्रो योऽसौ नानाविधवक्रताविशिष्टः शब्दः कश्चिदेव वाचकविशेषो विवक्षितार्थसमर्पणसमर्थः, तस्यैकस्य केवलस्य गोचरत्वेन प्रतिपाद्यतया विषयत्वेनेति। वाच्यत्वेन नोक्तम्, व्यङ्ग्यत्वेनापि प्रतिपादनसम्भवात्।
डे, सुशीलकुमारः, कुन्तक—वक्रोक्तिजीवितम्, पृ० १३४

२. तत्रैव, पृ० १३५

३. पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० २६१

४. (क) डे, सुशीलकुमारः, कुन्तक—वक्रोक्तिजीवितम्, पृ० १८७
(ख) आचार्यो विश्वेश्वरः, कुन्तक—वक्रोक्तिजीवितम्, पृ० ४११

स्थिरीकृतम्, तथा कुन्तकेनापि ।[1] तद्यथा—

अलङ्कारो न रसवत् परस्याप्रतिभासनात् ।
स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि ॥[2]

इत्यादिनाङ्गीभूतस्य रसस्यालङ्कारता कुन्तकेन विप्रतिपन्ना । परं तेन रसः प्रधानत्वेन न स्वीकृतः, परमसौ वक्रोक्तावेवान्तर्भावितः । तथापि ध्वनिकारवत् काव्ये रसस्य चमत्कारः कुन्तकानुमत एव ।[3]

शब्दशक्तिमूलादयोऽन्ये ध्वनेर्भेदा अपि तेन क्वचित् पर्यायवक्रताभङ्ग्या क्वचिच्चोपचारवक्रताछद्मनोररीकृताः । तद्यथा ध्वनिकारप्रोक्तो यः शब्दशक्तिमूलध्वनिरसौ कुन्तकस्य पर्यायवक्रतानुसंवादी । यथा ध्वनिकारेणोपमारूपकादीनामलङ्काराणां ध्वननं शब्दशक्तिमूलध्वनौ प्रोक्तम्, तथैव कुन्तकेनाप्युपमादीनामलङ्काराणां प्रतीयमानता पर्यायवक्रतायां प्रोक्ता ।[4] रूढि-

---

१. तदिदमुक्तं भवति—यत् स्वशब्दैरभिधीयमानाः श्रुतिपथमवतरन्तश्चेतनानां चर्वणचमत्कारं कुर्वन्तीत्यनेन घृतपूरप्रभृतयः पदार्थाः स्वस्वशब्दैरभिधीयमानास्तदास्वादसम्पदं सम्पादयन्तीत्येवं सर्वस्य कस्यचिदुपभोगसुखार्थिनस्तैरुदारचरितैरयत्नेनैव तदभिधानमात्रादेव त्रैलोक्यराज्यसम्पत् सौख्यसमृद्धिः प्रतिपाद्यत इति नमस्तेभ्यः ।
डे सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० १५९

२. कुन्तकः, वक्रोक्तिजीवितम्, ३,११

३. निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः ।
गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः ॥
वक्रोक्तिजीवितम्, ४, ११

४. यस्मादेवंविधे विषये प्रस्तुतस्याप्रस्तुतेन सम्बन्धोपनिबन्धो रूपकालङ्कारद्वारेण कदाचिदुपमामुखेन वा । यथा स एवायं स इवायमिति वा । एष एव च शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य पदध्वनेर्विषयः । बहुषु चैवंविधेषु सत्सु वाक्यध्वनेर्वा । यथा—'कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः ।' अत्र युगादयः शब्दाः प्रस्तुताभिधानपरत्वेन प्रयुज्यमानाः सन्तोऽप्यप्रस्तुतवस्तुप्रतीतिकारितया कामपि काव्यच्छायां समुन्मीलयन्तः प्रतीयमानालङ्कारव्यपदेशभाजनं भवन्ति ।
डे, सुशीलकुमारः, कुन्तकः, वक्रोक्तिजीवितम्, पृ० ९५

वैचित्र्यवक्रताव्याख्याने कुन्तकेन स्पष्टमेव शब्दानां वाचकत्वव्यापारस्यासामर्थ्यं प्रोक्तम्, ध्वनिकारोक्तो व्यङ्ग्यव्यञ्जकभावश्च स्वीकृतः।[1] वक्रताव्याख्यानावसरे कुन्तकेन ध्वनेरेवोदाहरणान्यक्षरश उद्धृतानि।

किञ्च—

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्[2]॥**

इत्यादिनाऽऽनन्दवर्धनाचार्येण सुप्तिङादीनां यद् ध्वननं निर्दिष्टम्, तदेव कुन्तकेन वचनकारकलिङ्गादिवक्रताछद्मना व्याख्यातम्।[3]

एवं वक्रोक्तिजीवितग्रन्थस्यानुशीलने कृते सति स्पष्टं भवति यत् कुन्तकस्य वक्रोक्तिमूलकं नवीनं काव्यदर्शनं न ध्वनिविरोधि। प्रत्युत ध्वनेर्ये भेदाः ध्वनिकारेण प्रदर्शिताः, त एव कुन्तकेन वक्रतानाम्नोपात्ताः। यच्चास्या वक्रोक्त्याश्चमत्कारित्वं, तच्च व्यङ्ग्यार्थानुग्रहेणैव, यदपि च मुख्यार्थबाधादुपचारदर्शनं तत्रापि प्रयोजनसद्भावात्, प्रयोजनस्य च व्यङ्ग्यत्वाद् व्यङ्ग्यार्थोपजीवकत्वं स्पष्टम्। तत्प्रोक्तं कविप्रतिभासमुत्थं शब्दार्थयोर्वैचित्र्यमपि साधारणलोकशास्त्रप्रसिद्धशब्दार्थातिरेकाद् ध्वनिकारोक्तोपसर्जनीकृतशब्दार्थानुबन्ध्येव। विचित्राभिधाऽपि व्यञ्जनासहोदर्येव। अतो वक्रोक्ति काव्यात्मत्वेन व्यवस्थापयदपि कुन्तकदर्शनं न ध्वनिविसंवादि। एवं तिलशस्तिलशो निष्पीड्यमानमिदं वक्रोक्तिदर्शनं ध्वनिपृष्ठसंलग्नं तत्पुच्छमिवाभाति। अत एव सूक्ष्मज्ञेन महिमभट्टेन ध्वनिवक्रोक्त्योरभेद एव प्रादर्शि[4]।

---

१. 'प्रतीयते' इति क्रियापदवैचित्र्यस्यायमेवाभिप्रायो यदेवंविधे विषये शब्दानां वाचकत्वेन न व्यापारः, अपितु वस्त्वन्तरवत्प्रतीतिकारिमात्रेणेति युक्तियुक्तमप्येतदिह न प्रतन्यते। यस्माद् ध्वनिकारेण व्यङ्ग्यव्यञ्जकभावोऽत्र सुतरां समर्थितस्तत्किं पौनरुक्त्येन।
कुन्तकः, वक्रोक्तिजीवितम्, २, ९

२. आनन्दवर्धनः, ध्वन्यालोकः, ३, १६

३. वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः॥
कुन्तकः, वक्रोक्तिजीवितम्, १, १९

४. (क) यतः प्रसिद्धोपनिबन्धनव्यतिरेकित्वमिदं शब्दार्थयोरौचित्यमात्रपर्यवसायि स्यात्, प्रसिद्धाभिधेयार्थव्यतिरेकि प्रतीयमानाभिव्यक्तिपरं

वयं त्वित्थं प्रतीमः। कुन्तकोपक्रमं वक्रोक्तिदर्शनं प्राच्यानां भामहादीनां नव्यानामानन्दवर्धनादीनामाचार्याणाञ्च सिद्धान्तान् व्यापिकायां वक्रोक्तावन्तर्भावयति। अत एव सर्वाङ्गिणी तदुद्भाविता वक्रोक्तिः। नहि वक्रोक्तेर्यादृक् स्वरूपं भामहाभिमतं तादृगेव कुन्तकस्य। परं काव्यकाञ्चनकषाश्ममानिना तेन वक्रोक्तेः स्वरूपं प्रसार्य काव्यसौन्दर्याधायकं सर्वं तत्त्वञ्च वक्रोक्तिशरीरेऽन्तर्भाव्य परिपूर्णं काव्यदर्शनं वक्रोक्तिभङ्ग्या समुपस्थापितम्। भामहादीनामालङ्कारिकाणां मते काव्येऽलङ्काराणां प्राधान्यात् काव्यचारुत्वमलङ्कारेष्वेवावशिष्टम्। आनन्दवर्धनेन नव्येनालङ्कारिकेण वाच्यवाचकधर्माणामलङ्काराणां न्यग्भावः प्रतीयमानार्थस्यैव च काव्ये माहात्म्यं प्रादर्शि। प्रतीयमानार्थस्य प्राधान्ये सत्युत्तमं काव्यम्, अलङ्काराणामेव च चमत्कारेऽमुख्यं काव्यमिति तदीयं दर्शनं व्यवस्थितम्।[1]

परं कुन्तकेन वक्रोक्तिं काव्यात्मत्वं ब्रुवताऽलङ्काराणामपि काव्ये चारुत्वं व्यवस्थापितम्। तन्मते कविप्रतिभासंस्पर्शेन वक्रत्वं हि नाम शब्दार्थयोश्चारुत्वं यदा समुल्लसति, तदा सर्वमेव तत्काव्यमुक्तिवैचित्र्यवशात्तद्विदाह्लाद-

---

वा स्यात्। × × × × द्वितीयपक्षपरिग्रहे पुनर्ध्वनेरेवेदं लक्षणमनया भङ्ग्या अभिहितं भवति, अभिन्नत्वाद् वस्तुनः। अत एव चास्य त एव प्रभेदास्तान्येवोदाहरणानि तैरुपदर्शितानि।

[illegible] शास्त्री, महिमभट्टः, व्यक्तिविवेकः, पृ० १२५

[illegible]यानुमितिप्रत्यभिज्ञः;

(ख) K[illegible] in his Vakroktijīvita, while talking of Vakrokti as the soul of poetry, is simply repeating what Ānanda has said in the third chapter of Dhvanyāloka.

—Pandey, K. C., Indian Aesthetics, p. 315.

(ग) Kuntaka, the author of Vakroktijīvita, on the other hand, had no direct intention of attacking or disproving the Dhvani theory. He appears to have accepted the fact of a suggested sense in poetry.

—De, Sushil Kumar, History of Sanskrit poetics, p, 184-85

१. ततोऽन्यद् रसभावादितात्पर्यविरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम्। न तन्मुख्यं काव्यम्। काव्यानुकरो ह्यसौ। पट्टाभिराम; आनन्दवर्धन—ध्वन्यालोकः, पृ० ४६५

करम् । अतः काव्यस्य चारुता न केवल प्रतीयमानार्थचमत्काराश्रिता, परं तदभावेऽपि यदि शब्दार्थयोर्वक्रभावः पदं निदधाति, तदाप्युक्तिवैचित्र्यवशात् काव्यं तादृगाह्लादकरं यादृक् प्रतीयमानार्थचारुत्वेन । एवमुक्तिवैचित्र्यप्राणं काव्यं न प्रतीयमानार्थेन नाप्यलङ्कारैः परं वक्रतामहिम्ना सौन्दर्यमञ्चति ।

इत्थं कुन्तकेन ध्वन्यलङ्कारसिद्धान्तौ व्यापके वक्रोक्तिशरीरेऽन्तर्भाविती । किं बहुना, भरतमुन्युत्सूत्रितं रसप्रस्थानमपि तेन वक्रोक्तावेव समावेशितम् ।

यद्यपि वक्रोक्तिध्वनिसिद्धान्तयोर्मिथः सहोदरभावस्तथापि कुन्तकोद्घाटितवक्रोक्तिसिद्धान्तो ध्वनिकारोद्भावितध्वनिसिद्धान्ताद्वक्ष्यमाणया रीत्या भिद्यते। ध्वनिकारेण सहृदयहृदयग्राहकधिया काव्यस्य स्वरूपमुन्मीलितम् । विशदीभूतमनोमुकुरा वर्णनीयतन्मयीभवनयोग्यतावन्तः सहृदया एव काव्यस्य चारुत्वाचारुत्वयोः प्रमाणभूताः परीक्षकाः। ध्वनिसिद्धान्ते कविकर्मणो न कश्चिन्महिमा। अत एव ध्वनिसिद्धान्ते काव्यस्यास्वादयितुः सहृदयस्य हृदयाह्लादकत्वेनैव काव्यं परीक्ष्यते, नतु काव्यशिल्पिनः कवेः कर्ममुखेन। परं कुन्तकस्य दर्शने कविकर्मणः काव्ये परमं महत्त्वम् । कवेः प्रतिभैव साधारणाञ्छब्दानर्थांश्च स्वसंस्पर्शेन तथा योजयति यथा ते वक्रभावमापन्ना अपूर्वां काव्यस्य शोभां परिपुष्णन्ति । यावत् कवेः प्रतिभासंस्पर्शो न भवेत्तावत्त एव शब्दास्त एवार्था अघटितपाषाणशकलकल्पा नावर्जयन्ति सहृदयान् । अतः काव्ये चारुत्वं कविकर्ममूलम् । तन्महिम्नाऽपूर्वो वक्रभावः शब्दार्थेषु समुल्लसति ।

एवं यद्यपि कुन्तकस्य वक्रोक्तिदर्शनमशेषलक्ष्यव्या[illegible] व्यापकं सोपपत्तिकं चोपनिबद्धमस्ति, तथाप्यस्यानन्दवर्धनव्यवस्थापित: निष्पीडचम[illegible] लग्न[illegible]त्वात् परवर्तिभिः काव्यशास्त्रज्ञैराचार्यैः ध्वनिरेव काव्याधिराजत्वेनाङ्गीकृतो वक्रोक्तिश्चोपेक्षिता ।

——:०:——

## एकादशोऽध्यायः

# व्यञ्जनाविषये महिमभट्टमतपर्यालोचनम्

ध्वनिमुत्पाटयितुं प्रवृत्तेषु प्रतिद्वन्द्विदर्शनेषु महिमभट्टाचार्यस्यानुमितिवादोऽतीव प्रचण्डः। महिम्ना स्वकीये व्यक्तिविवेके ग्रन्थे ध्वनेः प्राणायिता व्यञ्जनावृत्तिरुन्मूलिता, साध्यसाधनभावमूलेऽनुमाने च ध्वनिरन्तर्भावितः। ध्वनेः प्राणभूता व्यञ्जनैव। अतस्तामुत्पाट्य ध्वनिमर्दनं सुकरं भवतीति पण्डितधुरन्धरेण महिम्ना व्यञ्जनाव्यापार एव प्रथमं प्रत्यादिष्टः। ध्वनिमार्गाध्वनीना यमर्थं व्यञ्जनाव्यापारगम्यं व्यङ्ग्यं संज्ञपयन्ति, स एवार्थोऽनुमेयो व्यपदिष्टो महिम्ना तार्किकप्रवरेण।

**काव्यस्यात्मनि संज्ञिनि रसादिरूपे** न तस्य विमतिः।[1] स एवार्थो वाल्मीकिकालिदासप्रभृतिभिः कविपुङ्गवैरुपात्तः काव्यस्य परमा भूषा। रसरूपेण तेनार्थेनोपस्कृतं काव्यं विलसति। परं नासावर्थो व्यङ्ग्यो यत्प्रत्यायनार्थं शास्त्रसिद्धाभिधातिरिक्तस्तुरीयो व्यापारः समुपास्यते ध्वनिवादिभिः। परं महिमभट्टमते काव्यवासनापरिपक्वबुद्धिभिः सहृदयैः समास्वाद्योऽसावर्थः अनुमितिवेद्य एव। अतस्तस्यानुमितिप्रत्यायितस्यार्थस्यानुमेयत्वमेव युक्तियुक्तं न तु व्यङ्ग्यत्वम्। व्यापारोऽपि च न व्यञ्जना, अपितु कार्यकारणभावमूलाऽनुमितिरेव। यथा मीमांसकैरभिधया व्यङ्ग्यार्थस्य अभिधेयत्वम्, लक्षणावादिभिश्च लक्षणया तस्यार्थस्य लक्ष्यत्वं सिद्धान्तितम्, तथैव महिम्नाऽपि तार्किकोपज्ञया साध्यसाधनभावप्राणया अनुमित्या तस्यार्थस्य व्यङ्ग्यस्य अनुमेयत्वं महता संरम्भेण स्वकीये व्यक्तिविवेके ग्रन्थे प्रतिपादितम्।[2]

महिम्नः प्राक् श्रीशङ्कुकेनापि विभावानुभावव्यभिचारिसंयोगात् रसस्य अनुमेयत्वं प्रोक्तम्।[3]

---

१. व्यक्तिविवेकः, पृ० १०५, (चौखं० सं०)

२. पक्षधर्मत्वसम्बन्धव्याप्तिसिद्धिव्यपेक्षणात्।
वृक्षत्वाम्रत्वयोर्यद्वद् यद्वच्चानलधूमयोः॥
अनुमानत्वमेवात्र युक्तं तल्लक्षणान्वयात्।
महिमभट्टः, व्यक्तिविवेकः, पृ० १०६-७ (चौ० सं०)

३. काव्यप्रकाशः, पृ० ८८-९९

तार्किकधुरंधरेण **जयन्तभट्टेनापि** वाक्यार्थप्रतीतिं विचारयता **भम धम्मिअ वीसत्थो** इत्यादौ भ्रमणाभावरूपिणोऽर्थस्य प्रतीतिर्न व्यञ्जनया, अपि त्वनुमानादिप्रमाणान्तरसहकृतशब्दसामर्थ्यमहिम्ना भवतीति न्यायमञ्जर्यां प्रतिपादितम्। एवं जयन्तभट्टमतेऽपि व्यङ्ग्यार्थप्रत्यायनार्थं व्यञ्जना नोपादेया, तदर्थस्यानुमानादिप्रमाणावगतेः।[1]

आनन्दवर्धनाचार्येणापि ध्वन्यालोके व्यङ्ग्यार्थस्य अनुमानेऽन्तर्भावयितॄणां मतमुपनिबद्धं[2], पश्चाच्च तन्निराकृतमिति व्यङ्ग्योऽर्थोऽनुमेय इति विचारः परम्पराप्राप्तो महिमभट्टेन स्वकीये ग्रन्थे दाढर्चमानीतः।

सर्वोऽयं ध्वनिप्रपञ्चो व्यञ्जनापदव्यपदिष्टं तुरीयं व्यापारमेवावलम्ब्य जीवति। सर्वस्य ध्वनिसिद्धान्तस्य प्राणभूता शक्तिर्व्यञ्जनैव। यदि शब्दार्थयोः व्यङ्ग्यव्यञ्जकभावः सिद्धो भवेत्तदैव तद्वतः काव्यस्य ध्वनिरिति व्यपदेश औचित्यं बिभृयात्। व्यङ्ग्यव्यञ्जकभावो व्यञ्जनाशक्तिनिबन्धन एव। अतो ध्वनतीति ध्वन्यत इति ध्वननमिति सर्वं व्यञ्जनाव्यापारायत्तम्। ध्वनिकारेण व्यञ्जनाव्यापारमाश्रित्य परमोत्तमं प्रतीयमानार्थप्राधान्यानुप्राणितं ध्वनिप्रस्थानं काव्यशास्त्रे संस्थापितम्। अतएव यावद्ध्वनिसिद्धान्तजीवातुभूता व्यञ्जनाशक्तिर्नोपमर्द्यते तावच्छिन्नशिरस्कोऽप्ययं ध्वनिसिद्धान्तो रक्तबीजासुर इव पुनः पुनरुज्जीवितो भवतीति कृत्वा महिमभट्टेन व्यक्तिरेव महता बलेन क्षुण्णा।

---

१. एतेन शब्दसामर्थ्यमहिम्ना सोऽपि वारितः।
यमन्यः पण्डितंमन्यः प्रपेदे कञ्चन ध्वनिम्॥
'भम धम्मिअ वीसत्थो' 'मा स्म पान्थ गृहं विश'।
विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः।
मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम्।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा॥

—न्यायमञ्जरी, पृ० ४५

२. व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव एतेषां व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्।

—ध्वन्यालोकः, पृ० ४४८

अधुना महिम्नो दर्शनं यथामति समुपस्थापयामः। महिमभट्टो व्यक्तेः स्वरूपं तावदादौ प्रस्फुटयति। तद्यथा—सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानपेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरिति तल्लक्षणम्।[1] सदसद्विषयेण व्यक्तिः द्विविधा। तत्र सद्विषया व्यक्तिस्त्रिविधा।

(१) दधिवृक्षादयो दृश्यमानाः पदार्थाः पूर्वं कारणात्मनि पयोबीजादौ तिरोहिताः सन्तस्तिष्ठन्ति। अत एव अव्यक्तावस्थायाम् इन्द्रियविषयतामनापन्ना दधिवृक्षादयः पदार्था यदा व्यक्तावस्थां प्राप्नुवन्ति तदा इन्द्रियग्राह्या भवन्ति। वृक्षो बीजे कारणावस्थायामवतिष्ठमानः सन्नदृश्यः। परं तस्मादेव बीजात् प्रस्फुटितोऽसौ वृक्षः शाखास्कन्धपल्लवरूपतामापन्नः कार्यावस्थायां परिणतो भूत्वा दृग्गोचरतामुपयाति। इत्थं कारणदशायां तिरोभूतानां पदार्थानां कार्यदशायां विपरिणामेनेन्द्रियविषयतापत्तिः सद्व्यक्तेः प्रथमः प्रकारः।[2]

(२) कारणावस्थायाः कार्यावस्थां प्राप्तानां घटपटादीनां पदार्थानां तमसाच्छन्ने सद्मनि प्रकाशकेन दीपादिना सहैवाभिव्यक्तिः—व्यक्तेर्द्वितीयः प्रकारः। तथाहि—पूर्वं सूर्यालोके दृष्टा घटपटादयः पदार्थाः रात्रावन्धकाराच्छन्ने गृहे वर्तन्ते। परं दीपादिप्रकाशकस्याभावात् घटोऽयं पटो वेति किञ्चिन्न ज्ञायते। परं यदैव दीपप्रकाशो भवति, तदैव तमसा दृग्विषयतामनापन्ना घटपटादयः पदार्थाः प्रकाशे जाते अभिव्यक्तिम् उपयान्ति। अतः प्रकाशकेन दीपादिना सहैव प्रकाश्यस्य घटस्य नयनगोचरतापत्तिर्व्यक्तेर्द्वितीयः प्रकारः।[3]

(३) अनुभूतपूर्वाणां दृष्टानां श्रुतानां संस्कारात्मना प्रतिपत्तुर्मनसि विद्यमानानां तेषां प्रबोधकान्तरेण यत्प्रत्यायनमसौ व्यक्तेस्तृतीयः प्रकारः। अयमपि प्रबोधकत्रैविध्यात् त्रिविधः। प्रबोधकश्च (क) नान्तरीयकं धूमादि (ख) सदृशवस्त्वन्तरं (ग) वाचकः शब्द इति त्रिविधः। (क) प्रथमं यथा धूमादग्निज्ञानम्। महानसादौ प्रत्यहं ज्वलन्तं वह्निं दृष्ट्वा तद्गतः संस्कारो द्रष्टु-

---

१. व्यक्तिविवेकः, पृ० ७६ (चौ० सं०)

२. तत्र कारणात्मनि कार्यस्य शक्त्यात्मनावस्थानात् तिरोभूतस्येन्द्रियगोचरत्वापत्तिलक्षण आविर्भाव एका, यथा क्षीराद्यवस्थायां दध्यादेः। तत्रैव, पृ० ७७

३. तस्यैवाविर्भूतस्य कुतश्चित् प्रतिबन्धादप्रकाशमानस्य प्रकाशकेनोपसर्जनीकृतात्मना सहैव प्रकाशो द्वितीया, यथा प्रदीपादिना घटादेः। तत्रैव, पृ० ७७

र्मनसि सदा विद्यते। अतः पर्वतादौ पक्षे अदृश्योऽपि लिङ्गी वह्निरनुमात्रा पूर्वदृष्टवह्निधूमयोः नियतं सम्बन्धं प्रत्यभिज्ञाय लिङ्गेन धूमेनानुमीयते। इत्थं प्रबोधकेन धूमेन वह्नेर्यत्प्रत्यायनं परामर्शजन्यं तत्तृतीयस्या व्यक्तेः प्रथमो भेदः। (ख) सदृशवस्त्वन्तरेण प्रतिबिम्बालेख्यादिना प्रबोधकेन प्रतिबिम्बिनः प्रबोध्यस्य प्रत्ययः तृतीयस्या व्यक्तेर्द्वितीयो भेदः (ग) प्रबोधकाद् वाचकाच्छब्दात् संस्कारप्रबोधः तृतीयस्या व्यक्तेस्तृतीयो भेदः। इत्थं तृतीयस्या व्यक्तेस्त्रैविध्यम्।

असद्विषया व्यक्तिस्त्वेकप्रकारैव। तद्यथा—प्रावृट्समयेऽसतामेवेन्द्रधनुरादीनां सूर्यालोके नभसि दृग्गोचरता असद्व्यक्तिः।[1] तदेवं सद्विषया अभिव्यक्तिस्त्रिधा। असद्विषया त्वेकैवेति चतुर्धा व्यक्तिर्विवेचिता महिमभट्टेन।

इत्थं व्यक्तेः स्वरूपमुद्घाट्य महिमभट्टः सपीठिकाबन्धं ध्वनेः स्वरूपमुन्मूलयन्नाचष्टे—प्रतीयमानार्थव्यक्तिसमर्थकस्य ध्वनिवादिन एतासु कतमा व्यक्तिरिष्टा। न तावत् त्रिविधा सद्विषया व्यक्तिः। यतस्तत्र प्रथमे व्यक्तिभेदे व्यङ्ग्यार्थस्याभिव्यक्तिर्दधिवृक्षव्यक्तिसहोदरा न कदापि सम्भवा। व्यङ्ग्यार्थस्य दध्यादेरिवेन्द्रियविषयभावमनापन्नत्वात्। द्वितीये भेदेऽपि व्यङ्ग्यार्थस्य व्यक्तिर्न सम्भवति, व्यङ्ग्यार्थस्य प्रकाश्यस्य व्यञ्जकेन प्रकाशकेन सहैवाप्रकाश्यत्वात्। नहि वस्त्वलङ्काररसरूपेषु त्रिविधेष्वर्थेष्वन्यतमोऽप्यर्थः प्रकाशकेन व्यञ्जकेन शब्देन सहैवाभिव्यक्तो भवति। अन्धकारावृते गृहे विद्यमानो घटो यदा प्रकाशकेन दीपेन प्रकाश्यते, तदा प्रकाशकेन दीपेन सहैव तस्य प्रकाश्यस्य घटस्यावभासः। तयोर्मध्ये न कोऽपि सम्बन्धस्मरणादिकोऽन्तरायः। यस्मिन् क्षणे दीपप्रकाशस्तस्मिन्नेव क्षणे घटावभासः। यतो हि प्रकाश्यप्रकाशकयोर्युगपत्सहभावनिबन्धनम् अभिव्यञ्जनमेव व्यक्तिः।

महिमभट्टमते व्यक्तेरिदं प्रोक्तं स्वरूपं न लक्ष्ये ध्वनौ सङ्गच्छते। वाच्यार्थात् भवन्ती प्रतीयमानार्थप्रतीतिः सहभाविनीति शक्रेणापि नोपपादयितुं शक्यते। यथा सम्बन्धस्मरणादिकमनपेक्ष्य दीपेन घटो ज्ञायते, न तथा वाच्यार्थेन व्यङ्ग्यार्थः अवगम्यते। प्रत्युत प्रथमे क्षणे वाक्यार्थविद्भिः वाच्यार्थोऽवगम्यते, पश्चाच्च तत्सम्बन्धेनापरस्मिन् क्षणे व्यङ्ग्योऽर्थः प्रतिपद्यते। सम्बन्धेन वाच्यार्थेन प्रत्याय्यमानः सम्बन्धी व्यङ्ग्योऽर्थः सम्बन्धव्यवधानमन्तरेण प्रतीतिपथमनुपगच्छन् न कदापि व्यङ्ग्यत्वेन व्यपदेश्यः। अतः प्रदीपघटवद्

---

१. असतस्त्वेकप्रकारैव, तस्य प्रकारान्तरासम्भवाद्, यथार्कलोकादिनेन्द्रचापादेः।

—व्यक्तिविवेकः, पृ० ७८

वाच्यार्थव्यङ्ग्यार्थयोः साहित्येनाप्रकाशनान्न व्यक्तेर्द्वितीयं स्वरूपमपि लक्ष्यानुकूलम् ।[1]

तृतीये भेदे व्यक्तेः स्वरूपं नानुमानबाह्यम् ।[2] अव्यभिचारिणो लिङ्गादनुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्तिनोऽर्थान्तरस्य या प्रतीतिर्भवति, सा अनुमानस्यैव विषयः । यथा लिङ्गेन धूमेन लिङ्गिनो वह्नेर्ज्ञानमनुमानमूलम्, तथैव गमकेन वाच्यार्थेन प्रतिपद्यमानो गम्योऽर्थः प्रतीयमानोऽपि अनुमेय एव । वाच्यार्थस्य व्यङ्ग्यार्थेन सह यं कञ्चन सम्बन्धमवधार्यैव व्यङ्ग्यार्थप्रतीतिरतस्तयोः परस्परमुपायोपेयत्वं निर्बाधम् । अङ्गीकृते चोपायोपेयभावे कारणाद् भवन्ती कार्यप्रतीतिर्नियमेनैव भवतीति स्वीकार्यम् । कार्यकारणभावश्चाविनाभावमूलः साध्यसाधनभावप्राणायामनुमित्यामेव पर्यवस्यतीति स्वरूपासंस्पर्शिनि व्यक्तिलक्षणे सति, तन्निबन्धनं शब्दस्य व्यञ्जकत्वं, अर्थस्य व्यङ्ग्यत्वं तत्प्रत्यायनार्हस्य व्यापारस्य च व्यञ्जनेत्यभिधानं सर्वमसमञ्जसमेव महिमभट्टमतेन ।

नाप्यवशिष्टा असद्विषया व्यक्तिर्लक्ष्ये ध्वनौ संघटते । व्यङ्ग्यार्थस्य असद्विषयत्वस्य वक्तुमशक्यत्वात् । अतो लक्ष्यासंस्पर्शिनि व्यक्तिलक्षणे सति प्रतीयमानार्थस्य व्यङ्ग्यत्ववचनं सर्वथा असंगतमिति महिमभट्टस्याशयः ।

महिमभट्टमते शब्दस्यैक एवाभिधाख्यो व्यापारः ।[3] अन्यः सर्वोऽपि व्यापारोऽर्थगतः कार्यकारणभावमुपजीव्य प्रवर्तमानोऽनुमितिमूलक एव । तथा हि—शब्देनाभिधया यो वाच्यार्थोऽभिधीयते तद्द्वारा सम्बन्धिनोऽर्थान्तरस्य ज्ञानं भवति । अतो यत्र कुत्रचिदर्थादर्थान्तरप्रतीतिर्भवति, तत्तयोः परस्परं सम्बन्धमवधार्यैव । सम्बन्धसम्बन्धिभावे चाभ्युपगते तयोर्नियमेनैव प्रतीतिः

---

१. सतोऽभिव्यक्तिराद्ययोरर्थयोर्लक्षणं न प्रतीयमानेष्वेकमपि संस्प्रष्टुं क्षमते, तस्य दध्यादेरिवेन्द्रियविषयभावापत्तिप्रसङ्गाद् घटादेरिव वाच्यार्थसहभावेनेदन्ताप्रतीतेरसम्भवात् । न च स्वरूपासंस्पर्शि लक्षणं भवति ।
व्यक्तिविवेकः, पृ० ७८

२. तृतीयस्यास्तु यल्लक्षणं तदनुमानस्यैव सङ्गच्छते, न व्यक्तेः । यदुक्तम्—
'त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमितिः' तच्चानुमानमेव ।
—तत्रैव, पृ० ७८

३. अत्रोच्यतेऽभिधासंज्ञः शब्दस्यार्थप्रकाशने ।
व्यापार एक एवेष्टो यस्त्वन्योऽर्थस्य सोऽखिलः ।।
तत्रैव, पृ० १७१

स्वीकार्या। यथा धूमादग्नेः प्रतीतिः क्रमेण व्याप्त्यादिसम्बन्धमपेक्ष्य भवति।

यतो हि ध्वनिकारो व्यङ्ग्यव्यञ्जकयोः क्रमेण प्रतीतिमभ्युपगच्छति,[1] अतः तस्य वचनप्रामाण्यादेव व्यक्तेः प्राणायितः प्रकाश्यप्रकाशकयोर्युगपदभिव्यक्तिरूपः सहभावोऽपहस्तितो भवति। सहभावेऽनुपपन्ने घटप्रदीपवद् व्यङ्ग्यव्यञ्जकप्रतीतिर्न सम्भवति। अत आदौ वाच्यार्थोऽवगम्यते, अनन्तरञ्च तत्सम्बन्धात् सम्बन्धिनो व्यङ्ग्यार्थस्य प्रतीतिः क्रमेणैव भवतीति व्यङ्ग्यव्यञ्जकयोर्गम्यगमकभावः काममभ्युपेयः। एवं सहभावेऽसम्भवति अविनाभावमूलाया अनुमितेर्विना व्यक्तेर्नान्यः कोऽपि प्रकारोऽवशिष्यते।

ननु मास्तु वस्त्वलङ्काररूपिणोर्व्यङ्ग्यार्थयोः सहभावेन प्रतीतिः, परं व्यङ्ग्यो रसस्तु क्रमव्यवधानं विना अनुभूयते। अत एव रसध्वनेरसंलक्ष्यक्रमव्यङ्ग्यताभिधानम्। तथा च घटप्रदीपन्यायेन व्यक्तिलक्षणं स्वरूपसंस्पर्शि सन्निरवद्यमिति चेन्न, वस्त्वलङ्कारध्वन्योः पूर्वोक्तव्यक्तिलक्षणस्याव्याप्तौ, अव्याप्तिलक्षणदोषप्रसङ्गात्।[2] तेन च रसध्वनेर्व्यङ्ग्यत्वं स्यान्न वस्त्वलङ्कारध्वन्योः। परं नैतद् ध्वनिवादिन इष्टम्।

वस्तुतस्तु महिमभट्टमते रसादीनामर्थानामपि प्रतीतिर्न घटप्रदीपवत् सहभावनिबन्धना। नहि विभावादिज्ञानमेव रत्यादिसंवित्। विभावानुभावद्वारिका रसप्रतीतिरिति सर्वेषां ध्वनिवादिनां सिद्धान्तः। तथा सति विभावादीनां कारणत्वं रसादेश्च कार्यत्वं दैवसिद्धम्। नहि कारणज्ञानकाले एव कार्यस्य ज्ञानं भवति। प्रत्युत कारणात् कार्यप्रतीतिः सदैव क्रमपूर्विकेति विभावादिभ्यः कारणेभ्यो रत्यादीनां कार्याणां प्रतीतावपि क्रमभावोऽवश्यमभ्युपेयः। इत्थं विभावानुभावरसाद्यर्थानां कार्यकारणभावेनावस्थानात् साध्यसाधनभावमूला अनुमितिरेवात्र अभ्युपगन्तव्या, न तु व्यङ्ग्यव्यञ्जकभावप्राणो ध्वनिः।[3] तेन

---

१. ध्वन्यालोकः, पृ० ४०४

२. अथ रसाद्यपेक्षया तयोः सहभावेन प्रकाशोऽभिमत इत्युच्यते, अव्याप्तिस्तर्हि लक्षणदोषः, वस्तुमात्रालङ्कारप्रकाशस्य प्रकाशकासहभावेनाव्याप्तेः।

—व्यक्तिविवेकः, पृ० ७९

३. अतएव श्रूयमाणानां शब्दानां ध्वनिव्यपदेश्यानामन्तःसन्निवेशिनश्च स्फोटाभिमतस्यार्थस्य व्यङ्ग्यव्यञ्जकभावो न सम्भवतीति व्यञ्जकत्वसाम्याद् यः शब्दार्थात्मनि काव्ये ध्वनिव्यपदेशः सोऽप्यनुपपन्नः, तत्रापि कार्यकारणमूलस्य गम्यगमकभावस्योपगमात्।

—व्यक्तिविवेकः, पृ० ५७

च घटप्रदीपन्यायमाश्रित्य रसादीनां व्यङ्ग्यत्वेऽसम्भवति, व्यक्तेः सहभाव-निबन्धनं स्वरूपं लक्ष्यं त्रिविधं प्रतीयमानमर्थमेव न स्पृशतीति रसादीनां व्यङ्ग्यत्ववचनमसम्भवदोषदुष्टमिति महिमभट्टमतहृदयम्।

व्यङ्ग्यार्थस्य च प्रतीतिः लिङ्गलिङ्गिभावमूलेति प्रस्तूयमाने उदाहरणे स्पष्टम्—

**भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन॥**

अत्र आनन्दवर्धनाचार्येण निषेधरूपिणोऽर्थस्य व्यङ्ग्यत्वं समाख्यायि। तत्सर्वं विविच्यमानमनुमानेऽन्तर्भवति, **त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानमिति** तल्लक्षणात्। अनुमितेः द्वे अङ्गे। पक्षधर्मता, व्याप्तिश्च। पक्षसत्त्वसपक्षसत्त्व-विपक्षव्यावृत्तत्वेन अनुमितेः त्रिरूपाणि लिङ्गानि। अन्वयव्यतिरेकाभ्यां लिङ्ग-लिङ्गिनोरविनाभावः सिध्यति। अविनाभावः एव व्याप्तिः। अन्वयव्यतिरेका-त्मकसपक्षसत्त्वविपक्षासत्त्वरूपया अनया व्याप्त्या हेतोः शुद्धत्वं निश्चितं भवति। तेन चादुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिः।

पूर्वोक्ते पद्ये यो भीरुभ्रमणाभावरूपोऽर्थ आनन्दवर्धनाचार्येण वस्तुध्वनि-व्यपदेशेन प्रतिष्ठापितोऽसौ गोदातटे पक्षे दृप्तसिंहसद्भाववत्त्वेन उपात्तेन हेतुना साध्यो लिङ्गी सन्ननुमेय एव महिमभट्टमतेन।[1] अत्र परपुरुषचौर्यरतिसुख-लुब्धया कयाचिच्छुनो भीतः कश्चन धार्मिको विधिमुखेन भ्रमेत्यादिना निश्शङ्कं गोदातटे भ्रमणार्थमादिष्टः, यतो हि भीरुधार्मिकस्य भयप्रकम्प-मानामङ्गलतिकां प्रकुर्वाणः श्वा गोदानदीतटवासिना दृप्तसिंहेन पञ्चत्वं प्रापितः। अतो भयकारणस्य शुनोऽभावाद् धार्मिकस्य निष्कण्टकं वने भ्रमणं जातमिति सामान्येन रतिलम्पटायाः स्वैरिण्याः कस्याश्चिदुक्तिः। वस्तुतस्तु निरन्तरं धार्मिकेन पल्लवपुष्पावचयकारणात् प्रकाशतामुपगच्छत् गोदानदीतट-स्थितं चौर्यरतस्थानं कुञ्जं धार्मिकविहरणविरहितं भवेदिति साध्यं पुंश्चल्याः। अत एव शुनो भीतो धार्मिको दृप्तसिंहनामश्रवणादवश्यं तच्चौर्यरतसङ्केत-

---

१. (क) तेनानुमेय एव भ्रमणस्य निषेधो न व्यङ्ग्य इत्यवसेयं यथा नात्र-शीतस्पर्शोऽग्नेरित्यतः शीतस्पर्शस्य।

व्यक्तिविवेकः, पृ० ४०२

(ख) इत्थञ्च गम्यमानार्थस्पर्शमात्रमलङ्कृतिः।
वाच्यस्येत्येतदुक्तं स्यान्मता सैवानुमा ततः॥

—व्यक्तिविवेकः, पृ० १४३

स्थानात् सुगोप्यात् पराङ्मुखो भविष्यतीति विधिमुखेन असाध्व्या भीरुर्धार्मिको गोदानदीतटकुञ्जभ्रमणान्निवार्यते ।

एवमत्र आनन्दवर्धनोक्तस्य वस्तुध्वनेः सुनिपुणं पर्यालोचने क्रियमाणे निषेधरूपिणो ध्वन्यमानस्यार्थस्य अनुमेयत्वमेवोपपन्नं भवति नतु व्यङ्ग्यत्वम् । तथाहि—इदमनुमानशरीरम् । यद् यद् भीरुभ्रमणं तत् तत् भयकारणनिवृत्त्युपलब्धिपूर्वकम् । गोदावरीतीरं च भयकारणसिंहाधिष्ठितम्, अतस्तत् श्वभीरुभ्रमणायोग्यम् इति । अत्र भ्रमणस्य यद् व्यापकं भयहेतुनिवृत्तिज्ञानं तद्विरुद्धा भयकारणसिंहोपलब्धिः भ्रमणरूपं व्याप्तं निवारयति । अत्र गोदातीरं पक्षः । दृप्तसिंहसद्भावो हेतुः । भ्रमणाभावस्तु साध्यः । तेन च अनुमितेः पञ्चावयवं वाक्यमत्र प्रस्तूयमानया दिशा विनियोज्यम् । अयं देशो भीरुभ्रमणायोग्यो दृप्तसिंहसद्भाववत्त्वादित्यनुमानस्वरूपम् । तत्र—

१. अयं देशः भीरुभ्रमणायोग्य इति प्रतिज्ञावाक्यम् ।
२. दृप्तसिंहसद्भाववत्त्वादिति हेतुः ।
३. अरण्यमिति दृष्टान्तः ।[१]
४. तद्यथेति उपनयः ।
५. तस्मात्तथेति निगमनम् ।

अनया दिशा अन्येष्वपि ध्वनिनिदर्शनेषु व्यङ्ग्यार्थस्यानुमेयत्वमूह्यम् ।

किञ्च ध्वनिसिद्धान्ते प्रतीयमानार्थस्य प्रधानगौणभावस्तद्वशाच्च काव्यस्य ध्वनि-गुणीभूतव्यङ्ग्य-व्यपदेशाभ्यामुत्तमकाव्य-मध्यमकाव्येतिरूपेण विभागकरणं ध्वनिकाव्यस्य च तन्निबन्धनं वैशिष्ट्यं सर्वथानुपपन्नं रस्यमानतासारैकप्राणस्य काव्यस्योत्तममध्यमविभागासंभवात् । नह्यखण्डास्वादरूपिणि काव्ये प्रधानगुणभावेन काचिदपोद्धारबुद्धिः कृता भवति ।[२] य एव प्रतीयमानोऽर्थोऽनुमीय-

---

१. (क) यत्र यत्र दृप्तसिंहसद्भावस्तत्र तत्र भीरुभ्रमणायोग्यत्वम् ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥
श्लोकवार्त्तिकम्, अनुमानपरिच्छेदः, १३६-१२०
(ख) यार्थान्तराभिव्यक्तौ वस्सामग्रीष्टा निबन्धनम् ।
सैवानुमितिपक्षे नो गमकत्वेन सम्मता ॥
व्यक्तिविवेकः, ३, ३०-३१

२. न च तस्य विशेषः संभवति, निरतिशयसुखास्वादलक्षणत्वात्तस्य ।
व्यक्तिविवेकः, पृ०, ९४

मानः प्रधानः सन् उत्तमे काव्ये चारुत्वाधायकः स एव गुणीभूतः सन् मध्यमे काव्येऽपि। नहि प्रतीयमानेऽर्थे वाच्यादतिशायिनि सति काव्यानन्दस्य कश्चिदुत्कर्षः तस्मिश्च वाच्यार्थादप्रधाने सति कश्चिदपकर्षः। ध्वनिकारेण स्वयं प्रतीयमानार्थवशात् काव्यस्य सौभाग्यं स्वीकृतम्।[1] तथा सति काव्ये चारुत्वाधायकः प्रतीयमानोऽर्थ उत्तमकाव्यमध्यमकाव्ययोः समानभावेन व्याप्तः। तेन यत्र यत्र प्रतीयमानार्थपरिस्फुरणं तत्सर्वं काव्यं वक्तव्यं भवति, न नु तस्य काव्यस्य प्रतीयमानार्थप्राधान्याप्राधान्येन कश्चित् विवेकः कर्त्तव्यो भवति। चारुत्वं हि काव्यव्यपदेशभाक्, तच्च परमसौभाग्याधायकस्य प्रतीयमानार्थस्य सद्भावे सर्वस्मिन् काव्येऽस्ति प्रधानगौणभावमनपेक्ष्य। तद्यथा—

**व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि।**
**मा तवापि तया विना दाक्षिण्यहतस्य जनिषत॥**[2]

अत्र वस्तुरूपिणः प्रतीयमानार्थस्य प्राधान्याद् ध्वनिवादिनोत्तमं काव्यं व्यपदिश्यते—

**लावण्यसिन्धुरपरैव हि केयमत्र**
**यत्रोत्पलानि शशिना सह संप्लवन्ते।**
**उन्मज्जति द्विरदकुम्भतटी च यत्र**
**यत्रापरे कदलिकाण्डमृणालदण्डाः॥**[3]

इत्यत्र तस्यैव वस्तुरूपिणोऽर्थस्य अप्राधान्यात् गुणीभूतव्यङ्ग्यं मध्यमं काव्यं व्यपदिश्यते ध्वनिवादिभिः। वस्तुतः प्रतीयमानार्थसद्भावसौभाग्यवशात् द्वयोः पद्ययोस्तुल्यमेव हि चारुत्वम्। यदि लावण्यसिन्धुरित्यत्र प्रतीयमानार्थसद्भावो न स्यात्, तदा वाच्यार्थस्य प्राधान्येऽपि तत्र चारुत्वं न स्यात्। एवं काव्यस्य चारुत्वं सर्वथा प्रतीयमानार्थाश्रितम्। तद्यथा—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्॥**[4]

---

१. सर्वथा नास्त्येव हृदयहारिणः काव्यस्य स प्रकारः, यत्र प्रतीयमानार्थसंस्पर्शेन न सौभाग्यम्।

—ध्वन्यालोकः, पृ० ९४

२-३. व्यक्तिविवेकः, पृ० १३७ (चौ०सं०)

४. तत्रैव, पृ० ११

इत्यत्र गुणीभूतव्यङ्ग्ये मध्यमेऽपि काव्ये यदि नायकनायिकारूपिणः प्रतीयमानार्थस्य प्रतीतिर्न भवेत्तदा वाच्यार्थस्यापि चारुत्वं कथं स्यात्। अतोऽत्रापि प्रतीयमानार्थेनैव रमणीयता। एवं प्रतीयमानोऽर्थः प्रधानो वा भवेदप्रधानो वा काव्यस्य चारुत्वं तु तन्मूलमेवेति ध्वनिगुणीभूतव्यङ्ग्याभ्यां यः काव्यस्योत्तममध्यमविभागः ध्वनिसिद्धान्ते, सोऽप्यनुपपन्नो महिमभट्टमतेन। एवञ्च प्रतीयमानार्थस्य व्यक्तेरनुपपन्नत्वात् अनुमितेश्च ध्वन्यपेक्षया महाविषयत्वात्—प्रधानव्यङ्ग्य-गुणीभूतव्यङ्ग्योभयलक्ष्यव्यापित्वाच्च काव्यानुमितिरेव स्वीकार्या न तु ध्वनिरिति महिमभट्टमतनिष्यन्दः।

साम्प्रतं ध्वनिवादिनः पक्षः प्रस्तूयते। निमित्तनैमित्तिकभावमवलम्ब्य व्यङ्ग्यव्यञ्जकयोरविनाभावसम्बन्धं समर्थयता अनुमितिवादिना महिमभट्टेन व्यक्तेर्यत्स्वरूपं दूषितं, तत्स्थाने च लिङ्गलिङ्गिभावप्राणा अनुमितिः सिद्धान्तिता, तन्न समीचीनम्। न हि ध्वनिवादिनां मते व्यक्तेस्तादृशं स्वरूपं यादृशं महिम्ना लक्षितम्। व्यङ्ग्यव्यञ्जकयोः निमित्तनैमित्तिकभावो नापह्नूयते ध्वनिवादिना, परं नासावनुमितिपर्यवसायी। **नहि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति, वाच्याविनाभावेन तस्य प्रकाशनात्**[1] इत्यत्र ध्वनिकारवाक्येऽविनाभावशब्दः तार्किकानुकूले व्याप्त्यर्थे न प्रयुक्तः। अत्र अविनाभावस्य सम्बन्धमात्रोऽर्थ इष्टः। यथा **अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते**[2] इत्यत्राविनाभावः सम्बन्धमात्रार्थे पर्यवसितः। एवं व्यङ्ग्यव्यञ्जकयोर्निमित्तनैमित्तिकभावः पारिभाषिकेऽर्थे नोपादेयः। परमविनाभावस्य सम्बन्धमात्रोऽर्थ एवात्र विवक्षितः।

सदसद्विषया या चतुर्धा व्यक्तिर्महिम्ना प्रतिपादिता तासु घटप्रदीपन्यायेनैव व्यङ्ग्यार्थस्याभिव्यक्तिर्ध्वनिवादिमतानुकूला। नहि कारणात् पयसो दध्यादीनामिन्द्रियविषयतापत्तिर्व्यक्तिरिति केनचित् सुमतिना व्यक्तिलक्षणं सम्प्रतिपद्यते। अत एवात्मीयेन व्यक्तिलक्षणेन लक्ष्यस्य ध्वनेः परीक्षा न युक्तियुक्ता। यदपि घटदीपकन्यायेन प्रतीयमानार्थस्य व्यङ्ग्यत्वं ध्वनिवादिन इष्टं तदपि न तथा यथा अनुमानवादिना महिम्ना प्रतिपादितम्। नहि व्यञ्जकेन सहैव व्यङ्ग्यप्रतीतिर्भवतीति ध्वनिवादिन आशयः। प्रत्युत व्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकबुद्धिर्न दूरीभवतीत्याशयेन ध्वनिवादिना व्यक्तिः समर्थिता। यथा घटप्रकाशवेलायां प्रदीपप्रकाशो न निवर्तते, तद्वत् व्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकप्रतीतिरपि न दूरीभवतीति ध्वनिवादिन आशयः। नहि शब्दच्छलेन परकीयं मतं दूषयितुं युक्तम्। यदि व्यञ्जकप्रतीतिसमय एव व्यङ्ग्यस्य

१. ध्वन्यालोकः, पृ० ४२०
२. काव्यप्रकाशः, पृ० ५० (पू०सं०)

प्रतीतिर्व्यक्तिवादिन इष्टा स्यात्तदैव व्यक्तिं विदूष्य ध्वनिध्वंसो न्याय्यः, न तु तद्वैपरीत्येन । अतो व्यक्तिवादिनो मते व्यङ्ग्यव्यञ्जकयोर्घटप्रदीपन्यायमूलमवगमनमदूषणमेव । यथा पदार्थद्वारेण वाक्यार्थः प्रतीयते प्रदीपेन च घटः प्रकाश्यते तथैव ध्वनिवादिमते वाच्यार्थावबोधपूर्विका व्यङ्ग्यार्थप्रतिपत्तिः । कार्यकारणभावेनापि व्यङ्ग्यार्थप्रतीतिर्न तथा नियता यथा लिङ्गाल्लिङ्गिज्ञानं नियतम् । केवलं वाच्यार्थ उपायः सन्नौपयिकमर्थं प्रत्याययति, प्रत्याय्यप्रतीतिकाले प्रत्यायकस्यापि प्रतीतिर्न विरमतीति ध्वनिवादिनोऽभिमतम् । तस्मादनेन स्वकृतेन व्यक्तिलक्षणेन ध्वनिध्वंसनमनुचितम् ।

यच्चापि महिम्ना नियमेन विभावानुभावव्यभिचारिभिः रसप्रतिपत्तिर्भवतीति रसस्य व्यङ्ग्यत्व विदूष्य तस्यानुमेयत्वं प्रोक्तं तदपि न शोभनम् । यद्यपि रसप्रतीतिकाले क्रमोऽस्ति परमसावलक्ष्यः सूचीभिन्नशतदलवत् । नापि रसप्रतीतौ सम्बन्धस्मरणादिव्यवधानं किञ्चिदनुभूयते यथानुमितौ । निमित्तनैमित्तिकभावस्त्वस्ति, विभावादीनां कारणत्वात् रसस्य च कार्यत्वात् । परं नानेन क्रममूला साध्यसाधनभावावलम्बिनी रसप्रतीतिरिति विनिगमयितुं शक्यम् । विभावानुभावादिभिरास्वाद्यमाना एव रत्यादयो भावाः स्वसंविदानन्दे पर्यवस्यन्तः ब्रह्मानन्दसहोदरं रसरूपिणं परमानन्दमनुभावयन्तीति व्यञ्जकेभ्यो विभावादिभ्यो रसोऽभिव्यक्तो भवति, सम्बन्धस्मरणादिव्यवधानं विनेति रसस्य व्यङ्ग्यत्वं सिद्धं नत्वनुमेयत्वम् ।[1]

वस्त्वलङ्कारध्वन्योः प्रतीतिः क्रममूला अस्ति, परं नैतावता तयोरनुमेयत्वं शक्यसम्पादम् । तत्राप्यभिधालक्षणानुमानव्यतिरिक्तस्य व्यञ्जनाव्यापारस्यावश्यमाश्रयणीयत्वात् । नहि वस्त्वलङ्काररूप्यर्थः क्रमेण संवेद्य इति तस्यानुमेयत्वं युक्तम् । भ्रम धार्मिक इति पूर्वोक्ते उदाहरणे हेतुदोषादनुमानस्वरूपमेव दूषितं भवतीति भ्रमणाभावरूपिणो व्यङ्ग्यार्थस्यानुमेयत्वं सर्वथाऽनुपपन्नम् । तेन च वस्त्वलङ्काररूपिणोरर्थयोरपि व्यङ्ग्यत्वमविरुद्धम् । तत्रापि अभिधालक्षणादिव्यापारस्य प्रवेष्टुमशक्यत्वात् ।

---

१. विभावादिप्रतिपत्त्यनन्तरं रसादिप्रतिपत्तिरिति 'अशक्तास्तत्पदं गन्तुं ते नो निन्दां प्रचक्रिरे' इति न्यायादनुमानखलीकारपात्रतामस्याभिदधानाः प्रतीतिपरामर्शबाह्यत्वादनादरणीया एव । एवञ्च लिङ्गलिङ्गिभावादपरोऽस्त्येव व्यङ्ग्यव्यञ्जकभाव इति स्थितम् ।
भट्टाचार्यः शिवप्रसादः, काव्यप्रकाशः, श्रीधरकृता काव्यप्रकाशविवेकटीका, पृ० १७८

यच्चापि महिम्ना 'भ्रम धार्मिके'त्यत्र वस्तुध्वनेरनुमेयत्वं प्रोक्तम्, तदप्यनुमितिस्वरूपमपर्यालोच्यैव। तथाहि—निर्दुष्टेन हेतुना नियतस्य साध्यस्य पक्षे सिद्धिरिति सर्वजनाभ्युपगतमनुमितिस्वरूपम्। यदि हेतुर्दुष्टस्तदा पक्षे साध्यस्यानुमितिरपि विदूषिता भवति। अत एवानुमितौ हेतुना सर्वथा निर्दोषेण भाव्यम्।

हेतुत्वञ्च अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्। यथा—पर्वतादिपक्षकवह्न्यादिसाधकस्थले धूमादिः। यत्र हेतोर्हेतौ वा आभासः स हेत्वाभास इति व्युत्पत्त्या हेत्वाभासपदस्य हेतुदोष इत्यर्थः। स चानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयरूपः। यथा—ह्रदो वह्निमान् धूमादित्यस्मिन्नुदाहरणवाक्ये वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितेः कदाचिदप्यनुदयात्। एवं ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववत् ह्रदादिरूपो दोषो हेत्वाभासः।[1]

अयं देशः भीरुभ्रमणायोग्यः दृप्तसिंहसद्भाववत्त्वादित्यस्मिन्ननुमाने दृप्तसिंहसद्भावरूपः साध्यस्य भीरुभ्रमणाभावस्यानुमापको हेतुरनैकान्तिको हेत्वाभासः। सव्यभिचारोऽनैकान्तिकः। यथाहि—नित्यः शब्दः प्रमेयत्वात्। अत्रहि प्रमेयत्वं हेतुः। स तु नित्यानित्यवृत्तिः। प्रमेयत्वं नित्येषु अनित्येषु उभयत्र वर्तते इति भावः। पूर्वप्रतिपादितस्यानुमानाकारस्य दुष्टहेतुवशाद्धेत्वाभासाकारस्तु निम्नलिखितप्रकारेण बोध्यः—अयं देशो भीरुभ्रमणायोग्यो दृप्तसिंहसद्भावादित्यनुमितौ राजाज्ञया अन्येन केनचिद् वा कारणेन दृप्तसिंहसद्भावेऽपि भीरुभ्रमणयोग्यतायाः सम्भवादनैकान्तिको हेत्वाभासः। पूर्वप्रतिपादिते व्याप्तिस्वरूपे हेतुदोषसङ्गमनं यथा—यत्र यत्र दृप्तसिंहसद्भावस्तत्र तत्र भीरुभ्रमणायोग्यत्वमित्यस्या अन्वयव्याप्तेः राजाज्ञया दूषितत्वात्। अपि च पूर्वोक्तेऽनुमानशरीरे दृप्तसिंहसद्भावरूपो हेतुर्विरुद्धोऽपि, अस्पर्शत्वादेर्हेतोः शुनो बिभ्यतोऽपि धार्मिकस्योत्साहवशात् मृगयादिकुतूहलेन वा दृप्तसिंहसद्भाववति गोदानदीतटे भ्रमणसम्भवात्। गोदातीरे दृप्तसिंहसद्भावो न प्रत्यक्षप्रमाणेन सिद्धः। पुंश्चल्या वचनमेव तत्र प्रमाणम्। न च तद्वचनं सर्वथा सत्यम्। सुरतसुखविघ्नकोपाकुलायास्तस्या वचनेऽविश्वासात्। अतो गोदातटं भीरुभ्रमणायोग्यं दृप्तसिंहसद्भावादित्यनुमानेऽसिद्धो हेत्वाभासोऽपि दृश्यते। एवञ्च यद्भीरुभ्रमणं तद्भयकारण-

---

१. झलकीकरकृतः न्यायकोशः, पृ० १०७१

निवृत्त्युपलब्धिपूर्वकमिति व्यतिरेकव्याप्तेः दूषितत्वादनुमानशरीरं सर्वथा दुष्टम्। तत एव भीरुभ्रमणाभावो व्यङ्ग्य एव नत्वनुमेयः।

किञ्च लिङ्गात् यल्लिङ्ग्यनुमीयते, असौ सर्वदा नियत एव। धूमादनुमीयमानोऽग्निस्तदुत्पत्तिसम्बन्धात् सदा नियतरूपः। परं व्यङ्ग्योऽर्थो न सदा नियतः। नापि च तत्प्रत्यायको वाच्योऽर्थस्तेन सह सदा नियतसम्बद्धः। परन्तु वक्तृबोद्धव्यकाक्वादीनामुपाधीनां बलादनुभूयमानो व्यङ्ग्योऽर्थ औपाधिकः सन्ननियतसम्बन्धोऽपि दृश्यते। अतएव **सूर्योऽस्तं गतः** इत्यत्र नियताद् वाच्यार्थादुपाधिभेदेन अनियता अनवधयोऽर्था अवभासन्ते। यदि व्यङ्ग्योऽर्थोऽनुमेय एव स्यात्तदा धूमाद् यथा वह्निज्ञानं नियतं तथा प्रस्तुताद् वाक्यादपि नियतस्यैवार्थस्य प्रतीतिः संभवेत्। परं 'गावः संह्रियन्ताम्' 'दूरं मा गाः' इत्यादयोऽनवधयोऽर्था वक्तृबोद्धव्यादीनामुपाधीनां महिम्ना बोद्धरि बोद्धरि भासन्ते। नहि 'सूर्योऽस्तं गतः' इत्यस्य वाक्यस्य 'गावः संह्रियन्ताम्' इत्येतावानेव नियतोऽर्थः येन तस्यानुमेयत्वं स्यात्। प्रत्युत पूर्वोक्तदिशा वक्तृबोद्धव्यवैशिष्ट्यमहिम्ना असंख्या अर्थाः परिस्फुरन्ति। अपि च व्यङ्ग्योऽर्थो यद्यनुमेयः स्यात्तदा शब्दार्थविषये मिथ्याविवादा एव न प्रवर्त्तेरन्। सर्वस्यार्थस्य अनुमेयत्वेन नियतत्वात्, तत्र च विसंवादानामनवकाशत्वात्। किञ्च व्याप्तिस्मरणादिकल्पनातो व्यञ्जनायाः कारणत्वकल्पनमेवोचितम्। अतस्तुरीयस्यार्थस्य व्यङ्ग्यत्वं सर्वथा सिद्धम्॥

ननु मास्तु व्यङ्ग्योऽर्थोऽनुमितिवेद्यः, परं 'जीवति चात्र गोष्ठ्याम् अविद्यमानश्चैत्रः' इत्यादौ यथा अर्थापत्त्या चैत्रस्य गोष्ठ्या बहिर्निवासः सम्भाव्यते, तद्वत् 'भ्रम धार्मिक' इत्यादौ भीरुभ्रमणाभावरूप्यर्थोऽर्थापत्तिप्रमाणवेद्यः स्वीकार्यः, किमनया व्यञ्जनया शशशृङ्गायमाणयेति चेन्न, अर्थापत्तिप्रमाणस्याप्यनुमानेऽन्तर्भावात्तत्रापि च व्याप्त्यादिसम्बन्धस्यावश्यमपेक्षणीयत्वात्। अयमाशयः। इह हि द्विविधा अर्थापत्तिः। श्रुतार्थापत्तिरर्थापत्तिश्चेति। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः। यथा द्वारमिति शब्दः पिधेहीति क्रियापदं कल्पयति। अतः श्रुताच्छब्दाच्छब्दस्याध्याहारे श्रुतार्थापत्तिः। यत्र च दृष्टः श्रुतो वार्थोऽनुपपन्नोऽर्थान्तरं कल्पयति सा अर्थापत्तिः, यथा तत्रैव द्वारमित्यर्थोऽनुपपन्नः पिधेहीत्यर्थं कल्पयति। अतोऽत्रानुपपन्नादर्थादर्थान्तराध्याहारे कृतेऽर्थापत्तिः। 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र दिवाभोजनाभाववत् पीनत्वं रात्रिभोजनं विनानुपपन्नमित्यनुपपत्त्या श्रुतार्थापत्तौ रात्रौ भुंक्ते इति शब्दोऽर्थापत्तौ च तदर्थमात्रं कल्प्यते। एवमर्थापत्तिवशात् रात्रिभोजनवान् देवदत्तः इत्यर्थो गृह्यते। **पर्वतो वह्निमान्** धूमात् इत्यत्र यथा धूमवह्न्योर्व्याप्त्यादिसम्बन्धं पर्यालोच्य पर्वते वह्निज्ञानं भवति तथैवार्था-

पत्तावपि **रात्रिभोजनवान् देवदत्तः** इत्यर्थो व्याप्त्यादिसम्बन्धपर्यालोचनया प्रतीयते। यथा—यः यः पीनः स स भोजनवान्, देवदत्तः पीनोऽतो रात्रौ भोजनवानित्यादिना पीनत्वभोजनत्वयोः व्याप्त्यादिसम्बन्धं पर्यालोच्य दिवा भोजनाभाववतो देवदत्तस्य रात्रिभोजनत्वं कल्प्यते। एवमर्थापत्तिर्नानुमान-बाह्या। यतो हि व्यङ्ग्यार्थस्य अनुमेयत्वमेव नोपपद्यते तत एव अनुमानपुच्छ-भूतया अर्थापत्त्या असौ ललनालावण्यरमणीयो व्यङ्ग्यार्थः कथं प्रत्याय्यः। अतोऽवश्यमाश्रयणीयायाः ध्वननवृत्तेरनुमानादिना प्रकारेण खलीकरणप्रयासः सर्वथा दूरमपास्तो भवति।

यच्चापि प्रधानव्यङ्ग्यगौणव्यङ्ग्याभ्यां काव्यस्योत्तममध्यमविभागौ महिम-भट्टाचार्येण विप्रतिपद्येते तदपि ध्वनिवादिनामभिप्रायमपर्यालोच्यैव। यद्यपि अखण्डास्वादविषयः काव्यार्थ इत्यत्र नास्ति विप्रतिपत्तिः, परं तथापि विवेकि-भिरवान्तरव्यङ्ग्यं वाच्यसमुदायमधिकृत्य जीवितान्वेषणे क्रियमाणे क्वचित् प्रतीयमानं भृत्यवद् वाच्यार्थमेवोपस्कुर्वाणं सत् गुणीभावम् आप्नोति, क्वचिच्च मूर्धाभिषिक्तभूपतिवदुपस्कार्यं सत् प्रधानभावम् आसादयतीति प्रतीयमानार्थस्य प्राधान्ये ध्वनिर्गौणभावे च गुणीभूतव्यङ्ग्यं काव्यं सहृदयहृदयानुभवबलात् सिद्धम्। उत्तमे ध्वनिकाव्ये प्रतीयमानार्थस्य प्राधान्येनास्वादः, मध्यमे काव्ये च तस्याप्राधान्येन अन्यादृश्येव चारुता। चारुत्वं तु प्रतीयमानार्थकृतमित्यत्र न विवदामहे। परं प्रतीयमानार्थप्राधान्याप्राधान्येन कृतः काव्यस्योत्तममध्यमभेदः सहृदयहृदयसाक्षिकः। प्रसिद्धं हि लक्ष्यमाश्रित्य लक्षणं प्रवर्त्तते। अयञ्चोत्तम-मध्यमव्यवहारः सहृदयहृदयानुभवसिद्धो न केनाप्यपह्नूयते। ध्वनिकाव्ये चारुत्वम् अधिकं जातं, गुणीभूतव्यङ्ग्ये काव्ये च व्यङ्ग्यार्थस्य गौणभावे चारुता ध्वनिकाव्यापेक्षया लघ्वीभूतेति सहृदया एवात्र प्रमाणम्। प्रधानव्यङ्ग्यं यथा हृदयमावर्जयति, न तथा दास्यमनुभवद् राजकलत्रमिव गुणीभूतं व्यङ्ग्यम्। अतएवोत्तममध्यमकाव्यव्यपदेशः परम्पराप्राप्तः प्रत्याख्यातुमशक्यः। तदनुरुध्यैव ध्वनिवादिभिः प्रधानगुणीभूतव्यङ्ग्यमवलम्ब्य काव्यस्योत्तममध्यमविभागः कृतः। इत्थं काव्यवैशिष्ट्ये सिद्धे ध्वनित्वमव्याहतमेव।

महिमभट्टेन ध्वनिं ध्वंसयितुमानन्दवर्धनप्रोक्ते ध्वनिलक्षणे दश दोषाः प्रदर्शिताः। तेषां विवेचनमप्यत्र प्रकृतसंगत्यनुरोधेन प्रस्तूयते।

तत्र—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**

इति ध्वनिप्रधानं काव्यलक्षणमानन्दवर्धनाचार्येण व्याहृतम् । एतद्ध्वनिसिद्धान्तसंस्थापकं काव्यलक्षणमधिष्ठाय परवर्तिभिराचार्यैर्महता दार्ढ्येन ध्वनिपक्षः समुपोद्बलितः । महिमभट्टाचार्येण अत्र दश दोषा उद्भाविताः[1] । तत्र महिमभट्टोद्भावितं ध्वनिलक्ष्मणि प्रथमं दूषणम्—

### (१) अर्थस्य विशिष्टत्वम्

आनन्दवर्धनाचार्येण 'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ' इत्यस्यां कारिकायाम् 'उपसर्जनीकृतस्वार्थौ' इति ध्वनिलक्षणवाक्यघटकं विशेषणं विशेष्यभूतेन शब्दपदेन अर्थपदेन च सहोपात्तम् । 'उपसर्जनीकृतस्वार्थः' इति समस्तपदस्येत्थं विग्रहः कृतोऽभिनवगुप्तपादाचार्येण स्वकीये ध्वन्यालोकलोचने—'**स्वश्चार्थश्च तौ स्वार्थौ । तौ गुणीकृतौ याभ्यां यथासंख्येन तेन अर्थो गुणीकृतात्मा, शब्दश्च गुणीकृताभिधेयः ।**'[2] अयमाशयः । ध्वनिकाव्ये अर्थः स्वमुपसर्जनीकृत्य शब्दश्च स्वाभिधेयमर्थं गुणीकृत्य प्रतीयमानमर्थं द्योतयतः । तद्यथा—'भ्रम धार्मिक' इत्यादौ भ्रमेत्यादिनाभिहितो वाच्यार्थः स्वात्मानं गुणीकृत्य निषेधरूपिणं व्यङ्ग्यमर्थं ध्वननबलेन द्योतयति । अतोऽत्रार्थस्य स्वोपसर्जनादुत्तमं ध्वनिकाव्यम् । अथ च

**उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।**
**पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥**[3]

इत्यत्र प्रोल्लसद्धारादयश्शब्दाः पीनं मौक्तिकाऽलङ्कृतं तरुणीकुचयुगलरूपिणमर्थं गुणीकृत्य निरन्तरजलवर्षिणं मेघरूपिणमर्थं प्रत्याययन्तो द्वयोरर्थयोर्मिथ उपमानोपमेयभावं ध्वनयन्ति । अतः शब्दाभिहिततरुणीकुचयुगलरूपार्थस्योपसर्जनाच्छब्दो व्यङ्ग्यां रूपणामभिव्यनक्तीति ध्वनिकाव्यम् । एवं यत्राभिधेयार्थापेक्षया प्रतीयमानार्थस्य प्राधान्येनावस्थानं तत्र ध्वनिरिति निर्गलितार्थः ।

---

१. अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम् ।
द्विवचनवाशब्दौ च व्यक्तिर्ध्वनिर्नाम काव्यवैशिष्ट्यम् ।
वचनञ्च कथनकर्तुः कथिता ध्वनिलक्ष्मणीति दश दोषाः ॥
व्यक्तिविवेकः, १,२३-२४.

२. ध्वन्यालोकलोचनम्, पृ० १०३

३. तत्रैव, पृ० २४१

परं महिमभट्टमते शब्दार्थाभ्यां सहोपात्तं उपसर्जनीकृतस्वार्थौ इति विशेषणं दुष्टम्। तत्रार्थस्य विशिष्टत्वं प्रथमं निराक्रियते।

**सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्।**
**न शैत्येन न चौष्ण्येन वह्निः क्वापि विशिष्यते ॥**[1]

इत्यभियुक्तोक्तेः विशेषणपदस्योपादानं तदैवान्वर्थकं यदेदं व्यभिचारि सम्भवञ्च सद् व्यावर्तकं भवति। तद्यथा—**नीलमुत्पलम्** इत्यत्र नीलमिति विशेषणं नीलोत्पलादौ तु स्वरूपे सम्भवाद् रक्तोत्पलादिष्वभावाच्च सम्भवं व्यभिचारि च सन्नीलमुत्पलं रक्तश्वेताद्युत्पलेभ्यो व्यावर्तयति। परं **शीतो वह्निः** इत्यत्र वह्नेः शीत इति विशेषणं स्वरूपासिद्धं सदसम्भवम्। यद्यग्नेः शीतत्वं स्यात्तदैवोष्णत्वादिकं किञ्चिद् व्यवच्छेद्यं सम्भवेत्। यर्हि शीतत्वमेवाग्नौ न वर्तते, तर्ह्युष्णत्वादिकं न किमपि व्यावर्त्यं सम्भवति। यतः शीतत्वं स्वरूपासिद्धत्वान्न किञ्चिद् व्यवच्छिनत्ति, अतो नाग्नेरिदं शीत इति विशेषणं सम्भवम्। असम्भवत्वाच्चेदं दुष्टं सदव्यवहार्यम्। **उष्णो वह्निः** इत्यत्र वह्नेरुष्णत्वं स्वरूपसिद्धमपि वह्नावनुष्णत्वादर्शनान्न व्यभिचरति, अतोऽव्यभिचारि सदुष्णं विशेषणं दुष्टम्। एवं सम्भवव्यभिचाराभ्यामेव विशेषणं व्यावृत्त्यर्थमुपादीयते। यदि व्यावर्त्यमेव किचिन्न भवेत्, तदा विशेषणपदोपादानमप्रयोजकमेव। तथा सति ध्वनिलक्षणे 'उपसर्जनीकृतस्वार्थौ' इति विशेषणं सम्भवव्यभिचाराभावाद् दुष्टं सत् त्याज्यमेव। एतदेव विशदीक्रियते।

व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिरिति ध्वनिकारवचनम्।[2] ध्वनिकाव्ये वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्यम्। यत्र प्रतीयमानार्थापेक्षया वाच्यार्थस्य प्राधान्यं न तद्ध्वनिकाव्यं परं तन्मध्यमं गुणीभूतव्यङ्ग्यं काव्यम्। अतो ध्वनिलक्षणं वाच्यार्थप्रधाने गुणीभूतव्यङ्ग्यकाव्ये मा प्रसाङ्क्षीदिति कृत्वा ध्वनिकारेण व्यावृत्त्यर्थम् **उपसर्जनीकृतस्वार्थः** इति अर्थविशेषणमुपात्तं ध्वनिलक्षणे। तथा सति उपसर्जनीकृतस्वार्थेत्यर्थविशेषणस्य व्यवच्छेद्यं गुणीभूतव्यङ्ग्यं काव्यम्। तत्र वाच्यार्थः स्वात्मानं नोपसर्जनीकरोति ध्वनिकाव्यवत्, प्रत्युत प्राधान्येनावतिष्ठते। एवं ध्वनिकारदिशा उपसर्जनीकृतस्वार्थेत्यर्थविशेषणस्य गुणीभूतव्यङ्ग्यादौ काव्ये व्यभिचाराद् व्यावर्तकत्वेन तस्य ध्वनिलक्षणे

---

१. कुमारिलभट्टः, तन्त्रवार्त्तिकम्, १, ३, ८

२. सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥
ध्वन्यालोकः, २, ३३

उपयोगितैव । तद्विना ध्वनिकाव्यं गुणीभूतव्यङ्ग्यं काव्यमित्येकं तत्त्वं स्यात् । तयोरैक्यं मा भूदिति कृत्वा ध्वनिलक्ष्मणि लक्षणवाक्यघटकत्वेनार्थस्योपसर्जनीकृतात्मत्वं विशेषणमुपादेयमेव । तद्यथा—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥**[1]

इत्यादिषूदाहरणेषु निशाशशिरूपिणो वाच्यार्थस्य प्राधान्याद् गुणीभूतव्यङ्ग्यं काव्यम् । यतो नात्र नायकनायिकारूपिणो व्यङ्ग्यार्थस्य प्राधान्यं प्रत्युताभिधेयस्य निशाशशिरूपिणोऽर्थस्य । अतः वाच्यार्थस्य प्राधान्यादिदं काव्यं ध्वनिकाव्याद् भिन्नम् । अत एव व्यावर्त्यस्य गुणीभूतव्यङ्ग्यकाव्यस्य दर्शनादुपसर्जनीकृतस्वार्थात्मनोऽर्थविशेषणस्य सार्थकत्वम् ।

परं महिमभट्टमते पूर्वोक्ते पद्येऽर्थविशेषणस्य व्यभिचाराभाव एव । तथाहि । अत्र निशाशशिरूपिणोऽर्थस्य वाच्यस्य प्राधान्यं न प्रतीयमानार्थापेक्षया, अपितु प्रकरणापेक्षया । इह द्विविधं प्राधान्यं सम्भवति । (क) प्राकरणिकत्वस्वरूपं प्राधान्यम् (ख) प्रतीयमानत्वस्वरूपञ्च । यदि वाच्यार्थो निशाशशिरूपो नायिकानायकरूपिणं प्रतीयमानमर्थं गुणीकृत्य प्राधान्येनावतिष्ठेत, तदैव स्वस्वरूपकृतप्राधान्यात् व्यावर्तनीयमिदं गुणीभूतव्यङ्ग्यं काव्यमर्थविशेषणस्य व्यभिचारित्वमियात् । परं प्रकरणमेवात्र वाच्यमर्थं प्रधानपदवीमध्यारोहयति । अतस्तस्य न स्वरूपकृतं प्राधान्यम् ।

यतो हि गुणीभूतव्यङ्ग्येऽपि काव्ये प्रत्याय्यस्य प्राधान्यं प्रत्यायकस्य च गौणत्वमप्रतिक्षेप्यम्, यथा ह्यग्न्यादिसिद्धौ उपादीयमानस्य धूमस्य गौणत्वं, तत एव प्रतीयमानार्थप्रतिपत्त्यर्थमुपात्तस्यार्थस्य वाच्यस्य प्राकरणिकत्वसमुत्थापितं भवदपि प्राधान्यं स्वरूपकृतप्राधान्याभावान्नोपयोगि । गुणीभूतव्यङ्ग्येऽपि काव्ये प्रतीयमानमर्थं प्रत्याययन् वाच्यार्थ उपायत्वादप्रधान एव । व्यङ्ग्यार्थस्यौपयिकस्य प्रतिपत्तिस्तु सदा वाच्यार्थोपायपूर्विकैव । तेन च वाच्यार्थस्य तदुपायत्वेन लिङ्गत्वात् व्यङ्ग्यस्य च लिङ्गित्वाद् गुणीभूतव्यङ्ग्येऽपि काव्ये वाच्यस्योपसर्जनत्वमव्याहतमेव । नहि गुणीभूतव्यङ्ग्ये काव्ये वाच्यार्थः प्रतीयमानमर्थमुपसर्जनीकृत्य स्वस्वरूपकृतप्रधानत्वेनावतिष्ठते, प्रत्युत तस्य प्राधान्यं प्राकरणिकं नतु प्रतीयमानार्थापेक्षि । एवमर्थविशेषणस्य गुणीभूतव्यङ्ग्यं काव्यं व्यावर्त्यं न भवतीति व्यभिचाराभावे ध्वनिलक्ष्मणि

---

१. पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १०९

विशेषणवाक्यघटकत्वेन तस्योपादानं दुष्टम् ।[1] तेन च गुणीभूतव्यङ्ग्येऽपि प्रतीयमानार्थस्य सर्वदा गम्यत्वाद्, वाच्यार्थस्य च 'यो हि यदर्थमुपादीयते' इत्याद्युक्तेः गमकत्वेनोपायत्वात् तद्विशेषणस्योपसर्जनीकृतात्मत्वस्य व्यभिचाराभावः । तदेवं व्यभिचाराभावादर्थस्य विशेषणं ध्वनिलक्षणेऽवद्यत्वादनुपादेयमिति महामतेर्महिमभट्टस्याशयः ।[2]

अधुना महिमभट्टोद्भावितोपसर्जनीकृतस्वार्थेत्यर्थविशेषणदोषनिराकरणाय ध्वनिपक्षावलम्बी रुय्यकाचार्यः उत्तिष्ठति । तद्यथा—अस्मिन् प्रसङ्गे व्यक्तिवादिनोऽयमभिप्रायः । वाच्यार्थस्योपसर्जनीभावस्त्रिभिः प्रकारैः सम्भवति ।

(क) वाच्योऽर्थः प्रतीयमानार्थप्रत्यायने उपायरूपेण यत उपादीयते, ततस्तस्योपायत्वादप्राधान्यम्, अर्थस्य गुणीकृतात्मत्वञ्चोपपन्नम् ।

(ख) प्रतीयमानार्थस्य काव्ये चारुत्वहेतुत्वाद्, वाच्यार्थस्य चातथात्वात् प्रतीयमानापेक्षया यद् वाच्यार्थस्याचारुत्वं तत्तस्य गुणत्वम् ।

(ग) ध्वनिकाव्ये वाच्यार्थः प्रतीयमानमर्थं प्रत्याय्योपरतो भवति, नासावर्थान्तरेण प्रतीयमानेन प्रत्यावृत्योपस्क्रियते । अतः स्वात्मनि विश्रान्तत्वादप्यर्थस्य वाच्यस्य गुणत्वं युक्तम् ।

एवं वाच्यार्थस्य गुणीकृतात्मत्वं तस्योपायत्वादचारुत्वात् स्वात्मनि विश्रान्तत्वाच्चेति त्रिभिः प्रकारैरुपपद्यते । तत्राद्यं पक्षद्वयं यद्दूष्यते महिमभट्टेन, तत्र नास्ति वक्तव्यं किंचित् । यतो हि वाच्यार्थस्य प्रतीयमानमर्थं प्रति सर्वदा उपायरूपेणावस्थानादुपसर्जनीकृतात्वमर्थविशेषणमव्यभिचारि । अचारुत्वेऽपि न किञ्चित् व्यावर्त्यमस्ति, गुणीभूतव्यङ्ग्येऽपि न वाच्यस्यैव चारुत्वमिति नियमः प्रतीयमानार्थस्यापि प्रकृष्टचारुत्वदर्शनात् तदभावे केवलं वाच्येऽर्थे रसिकानामनास्वादात् । परं वाच्यार्थविश्रान्तिलक्षणस्तृतीयः पक्षो व्यक्तिवादिना गुणीभूतव्यङ्ग्यकाव्यात् ध्वनिकाव्यं व्यवच्छेत्तुं सिद्धान्तितः । एवम् आद्ये पक्षद्वये उभयोः काव्ययोः वाच्यार्थस्य प्रतीयमानमर्थं प्रति उपायत्वात् प्रतीयमानार्थस्यापि च उभयत्र प्रकृष्टचारुत्वदर्शनादर्थविशेषणस्य

---

१. यत्पुनरस्य क्वचित् समासोक्त्यादौ प्राधान्यमुच्यते, तत्प्राकरणिकत्वापक्षयैव न प्रतीयमानापेक्षया । यथा 'उपोढरागेण'अत्र हि प्रतीयमानेनानुगतं वाच्यमेव प्राधान्येन प्रतीयते, समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् । तदपेक्षया चैतस्य लिङ्गत्वादुपसर्जनीभावाव्यभिचार एव ।

व्यक्तिविवेकः, पृ० १०-१२

२. उक्तं गुणीकृतात्मत्वं यदर्थस्य विशेषणम् ।
गमकत्वान्न तत् तस्य युक्तमव्यभिचारतः ॥

व्यक्तिविवेकः, पृ० १२ (चौ० सं०)

गुणीभूतव्यङ्ग्यादिकं किमपि काव्यं व्यावर्त्यं नास्ति। परन्तु तृतीये पक्षे गुणीकृतात्मत्वस्य यत् स्वार्थविश्रान्तिलक्षणोऽर्थो गृह्यते, तस्य व्यभिचारो गुणीभूतव्यङ्ग्ये काव्ये समुपलभ्यते। तत्र वाच्यार्थो ध्वनिकाव्यवन्नार्थान्तरानुपस्कृतः स्वात्मविश्रान्तः संस्तिष्ठति प्रत्युत प्रत्यावृत्य प्रतीयमानेनार्थान्तरेण वाच्यार्थं उपस्क्रियते। **उपोढरागेण** इत्यादौ निशाशशिरूपो वाच्यार्थः उपस्कारकं कञ्चिदपेक्षमाणस्तिष्ठति। तद्विना वाच्यार्थस्याहृद्यत्वात्। अयं वाच्यार्थो नायकनायिकारूपेण प्रतीयमानार्थेनोपस्क्रियते। ततः नायकनायिकाव्यवहारसमारोपान्निशाशशिरूपो वाच्यार्थोऽर्थान्तरेणोपस्कृतश्चारुत्वाङ्कमधिशेते। एवं ध्वनिकाव्ये वाच्यार्थस्य स्वात्मविश्रान्तत्वेनार्थान्तरानुपस्कार्यत्वात् तस्य गुणीभावः। परं समासोक्त्यादौ वाच्यार्थस्य प्रतीयमानेनार्थान्तरेण प्रत्यावृत्योपस्कारकरणात् स्वात्मन्यविश्रान्तत्वाच्च तस्य प्राधान्यम्। तथासति गुणीकृतात्मत्वस्यार्थविशेषणस्य व्यावर्त्यं गुणीभूतव्यङ्ग्यं काव्यं तावदस्त्येव। एवं ध्वनिलक्ष्मणि अर्थस्य विशिष्टत्वमप्रतिक्षेप्यम्।[1]

(२) शब्दः

ध्वनिकारिकायां **शब्दः** इत्यनेन शब्दस्य व्यञ्जकोक्तिर्नोपपद्यते। यतः शब्दस्यैक एव व्यापारः, स चाभिधा।[2] अन्यः सर्वो व्यापारोऽर्थस्यैव। शब्दोऽभिधया स्वाभिधेयमर्थं प्रत्याय्योपरतो भवति। अनन्तरं शब्दाभिहितवाच्यार्थादेव लक्ष्यव्यङ्ग्यादिकस्यार्थान्तरस्य प्रतिपत्तिर्भवति। अतो व्यञ्जकता अर्थे एव सम्भवति न शब्दे। शब्दस्य सामर्थ्यं तु सङ्केतितार्थबोधपर्यवसितम्। एवं शब्दस्य व्यञ्जकता सर्वथाऽसम्भवा, लक्षणवाक्ये च 'शब्दः' इति पदानुप्रवेशः सर्वथा दुष्टः।[3]

---

१. समासोक्त्यादौ प्रतीयमानोऽर्थो वाच्यार्थौपयिकोऽपि न स्वात्मनि विश्रान्तिं भजते, प्रत्यावृत्य वाच्यार्थोपस्काराय प्रवृत्तत्वात्। एतच्चोक्तम् 'समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वादिति।' ततश्च गुणीभूतव्यङ्ग्ये वाच्यस्य स्वविश्रान्तत्वेनार्थान्तरोपकार्यत्वं व्यावर्त्यमिति विशेषणमुपपन्नम्।

व्यक्तिविवेकः, व्यक्तिविवेकव्याख्यानम्, पृ० १३ (चौ० सं०)

२. शब्दस्यैकाभिधा शक्तिः।

व्यक्तिविवेकः, १, २७

३. उक्तं वृथैव शब्दस्योपादानं लक्षणे ध्वनेः।
नहि तच्छक्तिमूलेष्टा काचिदर्थान्तरे गतिः॥

व्य० वि०, १, २८

अत्रोच्यते । व्यक्तिवादिनो मते शब्दे व्यञ्जकतास्त्येव । अन्यथा शब्दशक्ति-मूलध्वनौ ध्वन्यमानस्याप्राकरणिकस्यार्थस्य प्रतीतिरसम्भवा । तथाहि—

**भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।**
**यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥**

इत्यादौ शब्दशक्तिमूलध्वनौ प्राकरणिकार्थप्रतिपादनपरिक्षीणाऽभिधा संयोगादिभिः प्रतिबन्धकैर्नियन्त्रिता अप्राकरणिकं गजरूपमर्थं बोधयितुं न प्रभवति । मुख्यार्थबाधाद्यभावाल्लक्षणापि नात्र प्रगल्भते । तात्पर्यशक्तिरपि संसर्गबोधमात्रपर्यवसितसामर्थ्या । अतोऽभिधातात्पर्यलक्षणानां वृत्तीनामप्रसर-णादप्राकरणिकोऽर्थो व्यक्तिवेद्य एवावगन्तव्यः । यदि शब्दस्य अभिधातिरिक्तो व्यञ्जनाख्यव्यापारो विप्रतिपद्यते, तर्हि शब्दशक्तिमूलध्वनौ प्रतीतिपथमवतरन्न-प्राकरणिकोऽर्थः व्यङ्ग्यः कस्य व्यापारस्य विषयतामुपेयात् । **अनन्यलभ्यो हि शब्दार्थः** इति वाक्यार्थविदां पण्डितानामुक्तिः । अतः शब्दादेवाप्राकरणिकोऽर्थोऽत्र प्रतीयते । तत्र शब्दस्यैव कश्चन व्यापारः स्वीकरणीयः । निर्व्यापाराच्छब्दार्थ-प्रतीत्यसम्भवात् । तथा सत्यभिधादिव्यापारेऽसम्भवति व्यञ्जनैवावशिष्यते । एवं शब्दशक्तिमूलध्वनौ अप्राकरणिकार्थप्रत्यायनार्थं व्यञ्जनायामवश्यमाश्रयणीयायां शब्दस्य व्यञ्जकता तावद् दैवसिद्धा । तदेवं शब्दस्य व्यञ्जकत्वे उपपन्ने ध्वनि-लक्षणे तदुपादानं निरुपद्रवम् ।

### (३) सविशेषणः

शब्देन सहोपात्तम् '**उपसर्जनीकृतस्वार्थः**' इति विशेषणमसम्भवदोषदुष्टत्वा-द्धेयम् । यथा 'शीतो वह्नि'रित्यत्र वह्नौ शीतत्वाभावात्तस्य शीत इति विशेषण-मसम्भवि, तथैव ध्वनिलक्षणेऽपि 'उपसर्जनीकृतस्वार्थः' इति शब्दविशेषण-मसङ्गतम् । यतः शब्दः स्वाभिधेयमर्थं स्वं प्रति गुणीकर्तुं न प्रभवति, तदर्थं तदुपादानात् ।

**तं कर्णमूलमागत्य पलितच्छद्मना जरा ।**
**कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति ॥**[1]

इत्यादिष्वनुकरणस्थलेष्वेव शब्दः स्वार्थमुपसर्जनीकृत्य प्रधानभावेनाव-तिष्ठते, अन्यथा शब्दस्यार्थार्थमुपादानात् सर्वत्र तस्य गौणत्वमेव । यो यस्मै उपादीयते नहि स तमेव गुणीकरोति । यथोदकार्थं घट उपादीयते, अत उद-

१. कालिदासः, रघुवंशम्, १२, २

कस्योपेयत्वाद् मुख्यत्वं, घटस्य चोपायत्वादमुख्यत्वम्। इत्थं घटो नोदकमुपसर्जनीकरोति। शब्दोऽप्यर्थं बोधयितुमेव व्यवह्रियते। अतोऽर्थस्य मुख्यत्वं यस्य कृते शब्द उपादीयते। अत एव नासौ प्रत्याय्यमर्थं स्वप्रयोजकीभूतं गुणीकर्तुमर्हति। एवञ्च शीतो वह्निरितिवदुपसर्जनीकृतस्वार्थत्वं शब्दस्य विशेषणमसम्भवदोषपराहतम्।[1]

अत्रोच्यते। व्यक्तिवादिनो मते व्यञ्जनाख्यव्यापारस्यावश्यमभ्युपगम्यत्वात् शब्दस्य व्यञ्जकत्वमुपसर्जनीकृतस्वार्थत्वञ्च तस्य विशेषणं नासम्भवि। तथाहि। यत्र शब्दो व्यञ्जकः प्राकरणिकं वाच्यार्थमुपसर्जनीकृत्याप्राकरणिकं व्यङ्ग्यमर्थमभिव्यनक्ति, तत्रार्थोपसर्जनको व्यङ्ग्यार्थप्रधान उत्तमः शब्दशक्तिमूलो ध्वनिः। परम् **उपसर्जनीकृतस्वार्थः** इति शब्दविशेषणस्याभावे, यत्र वाच्यार्थस्य प्राधान्यं व्यङ्ग्यार्थस्य चाप्रधानता, तत्रापि ध्वनित्वमङ्गीकृतं स्यात्। तच्च सर्वथा ध्वनिसिद्धान्तप्रतिकूलम्। व्यङ्ग्यार्थस्य प्राधान्य एव ध्वनिरतथात्वे च गुणीभूतव्यङ्ग्यं काव्यमिति ध्वनिवादिनां सम्मतं मतम्। अयमाशयोऽत्र व्यक्तिवादिनः—

**दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया**
**तेनैव स्खलितास्मि नाथ पतितां किं नाम नालम्बसे।**
**एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-**
**र्गोप्यैवं गदितः सलेशमवताद् गोष्ठे हरिर्वश्चिरम्॥**[2]

इत्यत्र शब्दः प्रथममभिधाव्यापारेणाधोलिखितमर्थं प्रकटयति—

'हे केशव, यतो गोधूलिहृतया दृष्ट्या न किञ्चिद् दृष्टं मया, तेन कारणेन स्खलितास्मि मार्गे, तां पतितां सतीं मां किं नाम कः खलु हेतुर्यन्नालम्बसे हस्तेन। यतस्त्वमेवैकोऽतिशयेन बलवन्निम्नोन्नतेषु सर्वेषामबलानां बालवृद्धांगनादीनां खिन्नमनसां गन्तुमशक्नुवतां गतिरालम्बनाभ्युपायः'। अनन्तरमस्मादेव शब्दादपरस्यार्थस्यापि प्रतीतिः। तद्यथा—

'हे केशव, गोपस्वामिन्, रागहृतया दृष्टचेति। केशवगेन उपरागेण हृतया दृष्ट्येति वा सम्बन्धः। स्खलितास्मि खण्डितचरित्रा जातास्मि। पतितामिति भर्तृभावं मां प्रति। एक इत्यसाधारणः सौभाग्यशाली त्वमेव। यतः सर्वासामबलानां मदनविधुरमनसामीर्ष्याकालुष्यनिरासेन सेव्यमानः सन् गतिर्जीवितरक्षोपाय इत्यर्थः।'[3]

---

१. व्यक्तिविवेकः, पृ० १६
२. ध्वन्यालोकः, पृ० २४०
३. ध्वन्यालोकलोचनम्, पृ० २४० (चौ० सं०)

अयं द्वितीयोऽर्थो नाभिधाद्योत्यस्तस्यास्तपस्विन्याः संयोगादिभिः प्रतिबन्धकैः प्राकरणिकेऽर्थे गोधूलीरूपे नियंत्रितत्वात्। अतो द्वितीयोऽर्थो गोपीस्नेहरूपो व्यञ्जनाव्यापारमहिम्नैव सहृदयानामास्वादविषयतामुपयाति। परं ध्वन्यमानोऽयं द्वितीयोऽर्थोऽस्मिन् पद्ये **सलेशम्** इत्यनेन पदेन स्फुटीकृतः। अतो ध्वनेर्यद्गोप्यमान-सारतोदितप्राणायितं तदनेनापहस्तितं भवति। स्वशब्दानभिधेयेऽर्थ एव चमत्कृतिः। परं यदा द्योत्योऽसावर्थः शब्देन केनचित्स्फुटमभिधीयते, तदा ध्वननाभावे तस्य चमत्कृतिरुपहन्यते। तत्र नोत्तमं काव्यम्, किन्तु गुणीभूतव्यङ्ग्यं काव्यं भवति। व्यङ्ग्यार्थस्य प्राधान्ये एव ध्वनिरिति ध्वनिवादिनां मतसरणिः। प्रस्तुते च यद्यपि गोपीप्रेमरूपः अपरोऽर्थः शब्देन व्यञ्जनाव्यापारसाहाय्येन ध्वन्यते, परं सलेशमित्येतेन पदेन तस्यार्थस्य ध्वननं खलीक्रियते। यदि प्रस्तुते पद्ये सलेशमिति पदं न स्यात्, तदा गोपीस्नेहरूपस्यार्थस्य गोप्यमानत्वात्तस्यैव प्राधान्यं भवेत्। तथा सति ध्वनिकाव्यमिदमुत्तमं भवेत्। पर सलेशमित्यनेन शब्दस्पृष्टो व्यङ्ग्यार्थ उत्तानत्वेन प्रकाशमानोऽभिधेयपदवीमिवावतरति। अत एव नात्र तस्य चारुत्वं तादृक्। अमुनैवाशयेन ध्वनिकारेण लक्षणवाक्ये 'उपसर्जनीकृतस्वार्थः' इति शब्दविशेषणं प्रयुक्तम्। यत्र शब्दः स्वाभिधेयमर्थं गुणीकृत्य व्यङ्ग्यमर्थं द्योतयति, तत्र ध्वनिकाव्यम्। 'दृष्ट्या केशव' इत्यादौ शब्दो गोधूलिरूपिणमर्थं स्वाभिधेयं यतो न गुणीकरोति, तत एवास्य न ध्वनिकाव्यत्वम्। एवं शब्दविशेषणस्य व्यभिचारसम्भवाभ्यां तद्व्यावर्तकत्वेनोपादेयमेव ध्वनिलक्षणे।[1]

## (४) तदः पुंस्त्वम्

ध्वनिलक्षमणि 'यत्रार्थः शब्दो वा तमर्थम्' इत्यत्र **तमिति** पुंस्त्वेन निर्देशोऽनुपपन्नः। सर्वनामशब्दास्तदितरादयः पूर्वप्रक्रान्तसंज्ञापदस्य लिङ्गवचनान्यनुवर्तन्ते। अतः पूर्वोपात्तपदलिङ्गमनुरुध्यैव अनन्तरप्रक्रान्तस्य सर्वनामपदस्य लिङ्गनिर्देशः कृतो भवति।

> **प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
> **यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥**[2]

इत्यत्र ध्वनिलक्षणात् पूर्वं प्रक्रान्तं वस्त्विति पदं नपुंसकलिङ्गेन निर्दिष्टं

---

१. व्यक्तिवादिनः पुनर्मते शब्दस्य शक्त्यन्तरसमर्थनात् स्वरूपेणोपादानस्य सार्थकत्वं विवक्ष्यते। तस्य चोपसर्जनीकृतार्थत्वं विशेषणं सप्रयोजनमेव।
—व्यक्तिविवेकव्याख्यानम्, पृ० १७-१८ (चौ० सं०)

२. ध्वन्यालोकः, १, ४

वर्तते । अतो ध्वनिलक्षणेऽपि पूर्वप्रक्रान्तवस्तुपदस्य लिङ्गमनुसृत्य तमिति स्थाने तदिति नपुंसकलिङ्गेन निर्देशः कर्तव्यः । अथवा पूर्वप्रक्रान्तवस्तुपदस्थाने पुंस्त्व-निर्देशकोऽन्यः कश्चिच्छब्द उपादेयः ।

अत्रोच्यते । सूक्ष्मेक्षिकया निरीक्षणे क्रियमाणे नैष दोषः । ध्वनिलक्षणात् पूर्वं प्रक्रान्तायां—

**तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।**
**बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥**[1]

अस्यां कारिकायां **सोऽर्थः** इत्यर्थपदं पुंस्त्वेन निर्दिष्टं वर्तते । तदनुसृत्यैव ध्वनिलक्षणे तमिति पुंस्त्वेन विधानम् । अतो ध्वनिलक्षणकारिकातः अव्यवहित-पूर्वकारिकायां प्रक्रान्तस्य सोऽर्थ इति पदस्य पुंस्त्वेन निर्देशात् ध्वनिलक्षणेऽपि तमिति पुंस्त्वेन विधानं सर्वथाऽनवद्यम् ।

**(५) द्विवचन (६) वा शब्दौ**

ध्वनिकारिकायां **'यत्रार्थः शब्दो वा'** इत्यत्र 'वा' पदं दुष्टं द्वितीये दले **'व्यङ्क्तः'** इति द्विवचनान्तं क्रियापदञ्च दुष्टम् । तथाहि—'यत्रार्थः शब्दो वा' इत्यत्र 'वा' शब्दो विकल्पार्थकः समुच्चयार्थको वा । नाऽऽद्यः । शब्दस्यैकस्या एवाभिधाशक्तेः, व्यञ्जकत्वस्य च शब्देऽसम्भवात् । यदि द्वयोः शब्दार्थयोः व्यञ्जकत्वभावः सिद्धः स्यात्तर्हि शब्दो व्यनक्तु अर्थो वेति व्यवस्था स्यात् । परं शब्दस्यैकोऽभिधैव व्यापारोऽन्यः सर्वो व्यापारोऽर्थस्यैवेति शब्दस्य व्यञ्जकत्वमनुप-पन्नम् । तथा सति 'वा' शब्दो न विकल्पार्थकः । तथात्वेऽपि **'व्यङ्क्तः'** इति क्रियापदस्य द्विवचनान्तत्वमसङ्गतम् । यतो हि यत्र वा शब्दो विकल्पार्थबोधकः, तत्र क्रियापदमेकवचनान्तम् । यथा—

**परित्यक्ते देहे रणशिरसि शोकान्धमनसा**
**शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ॥**[2]

इत्यत्र वाशब्दे विकल्पार्थके सति **परिमृशेत्** इति क्रियापदमेक-वचनान्तम् । तथैव ध्वनिकारिकायां वाशब्दे विकल्पार्थेऽभ्युपगते व्यनक्तीति क्रियापदमेकवचनान्तं प्रयोज्यम्, नतु 'व्यङ्क्तः' इति द्विवचनान्तम् । तेन च 'शब्दो वा व्यनक्ति अर्थो वा' इत्येवं वाक्यशय्या योजनीया । नाप्यन्त्यः । 'वा' शब्दे समुच्चयार्थके सति, यत्र केवलस्य शब्दस्यैव व्यञ्जकत्वमर्थस्यैव वा न तूभयोस्तत्र ध्वनित्वं न स्यात् । तेन च शब्दशक्ति-

---

१. ध्वन्यालोकः १, १२
२. वेणीसंहारम्, ३, ३२

मूलोऽर्थशक्तिमूलश्चेति ध्वनेर्द्विधा विभागकरणमनुपपन्नं स्यात्। परमिष्यते ध्वनिकारेण शब्दार्थयोः पृथक् पृथग्व्यञ्जकता।[1]

किञ्च वाशब्दे समुच्चयार्थे सति शब्दार्थयोरुभयोः समवेतत्वेन व्यञ्जकत्वात् 'उपसर्जनीकृतस्वार्थः' इति शब्दस्य विशेषणं ध्वनिलक्षणे नोपादेयम्, अर्थस्य विशिष्टत्वेनैव तदवगतिसिद्धेः। अर्थविशेषणग्रहणेन तस्य विशेषणत्वेन ग्रहणं न भवत्यतः शब्दस्य पृथग्विशेषणग्रहणमिति चेत्, तर्हि लक्षणवाक्ये अभिधाप्युपादेया, अलङ्काराणामपि व्यञ्जकत्वाभ्युपगमात्। अतः 'वा' शब्दे समुच्चयार्थके सति शब्दस्य **'उपसर्जनीकृतस्वार्थः'** इति विशेषणं पुनरुक्तिदोषभाक्। एवं वाशब्दो ध्वनिलक्षणे न विकल्पार्थको नापि च समुच्चयार्थकः, अतस्तदुपादानं निर्निबन्धनम्।[2]

अत्रोच्यते। व्यक्तिवादिनो मते शब्दस्याभिधातिरिक्तो ध्वननव्यापारोऽपि सिद्धः। शब्दशक्तिमूलध्वनौ शब्दव्यञ्जकताया अनिराकरणत्वात्। तत्र **भद्रात्मनो दुरधिरोहतनोः** इत्यादौ ध्वन्यमानोऽप्राकरणिकोऽर्थः शब्देनैव व्यज्यते, शब्दविपर्यये तद्व्यक्त्यभावात्। अतः शब्दस्य व्यञ्जकत्वमनुपहसनीयम्। तथा सति लक्षणवाक्ये शब्दपदग्रहणमन्वर्थकम्।

यच्च वाशब्दस्य विकल्पार्थकत्वे सति ध्वनिकारिकायाम् 'व्यङ्क्तः' इति क्रियापदस्य द्विवचनान्तत्वं विदूष्यते, तद् ध्वनिवादिनामभिप्रायमपर्यालोच्यैव। ध्वनिकाव्ये शब्दार्थौ परस्परं सहकारितामपेक्षेते। तथाहि। अविवक्षितवाच्यध्वनौ यद्यपि शब्द एव प्राधान्येन व्यञ्जकः, तथाप्यसावर्थस्य सहकारितां नितान्तमपेक्षते। अन्यथा निरर्थकस्यापि शब्दस्य व्यञ्जकत्वापत्तिः। विवक्षितान्यपरवाच्ये ध्वनौ च यद्यपि प्राधान्येनार्थ एव व्यञ्जकः, परं तत्राप्यसौ शब्दस्य सहकारितामपेक्षते एव। अतः शब्दार्थयोः परस्परं सहकारित्वेनावस्थानाद्

---

१. क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः॥

ध्वन्यालोकः, २, २०

२. किञ्चात्र वाशब्दो विकल्पार्थो वा स्यात्, समुच्चयार्थो वा। न तावद्विकल्पार्थः पक्षान्तरासम्भवस्य व्युत्पादितत्वात्। समुच्चयार्थत्वे यत्र शब्दार्थयोरेकैकस्य व्यञ्जकत्वं तत्र ध्वनित्वमिष्टं न स्यात्।

—व्यक्तिविवेकः, पृ० ८८

द्वयोर्ध्वननमपेक्ष्य 'व्यङ्क्तः' इति द्विवचनं युज्यत एव ।[1]

(७) व्यक्तिः

प्रकाशकेन सहैव प्रकाश्यस्य प्रकटनं व्यक्तिः[2]। तथाहि । तमसाऽऽच्छन्ने सद्मनि प्रकाशकेन दीपेन सहैव यदा प्रकाश्यो घटः प्रकाशविषयमुपयाति तदा घटस्य प्रकाशो व्यक्तिः । परं व्यञ्जकेनार्थेन सहैव प्रकाश्यघटवद् व्यङ्ग्यार्थोऽभिव्यक्तिविषयं नोपयाति । प्रत्युत व्यङ्ग्य-व्यञ्जकयोः प्रतीतिः क्रमेण भवति । व्यञ्जकाद् व्यङ्ग्यार्थस्य क्रमेण प्रतीतेस्तन्मध्ये साध्यसाधनभाव उपपन्नो नतु व्यङ्ग्यव्यञ्जकभावः । अतः सहभावनिबन्धनस्य व्यक्तिलक्षणस्यानुपपत्तेर्लक्षणवाक्ये व्यक्तिरिति पदं दुष्टम् ।

अत्रोच्यते । व्यक्तेः स्वरूपं यन्महिमभट्टेनोद्घाटितम्, न तत् तथा यथा ध्वनिकारेण निर्दिष्टम् । नहि व्यञ्जकप्रतीतिकाले व्यङ्ग्यप्रतीतिरिति व्यक्तेराशयः । प्रत्युत व्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकबुद्धिर्न दूरीभवतीत्याशयो व्यक्तेः । यथा पदार्थं द्वारीकृत्य वाक्यार्थबुद्धिर्भवति, तथा व्यञ्जकज्ञानपूर्विका व्यङ्ग्यार्थप्रतीतिरिति ध्वनिवादिनां मतम् । यथा घटप्रकाशवेलायां दीपप्रकाशो न निवर्तते तथा व्यङ्ग्यार्थप्रतीतिसमये व्यञ्जकबुद्धिर्न दूरीभवतीति व्यक्तेराशयो ध्वनिपक्षावलम्बिनां मते । नहि स्वोद्भावितेन व्यक्तिस्वरूपेण परेषां मतं दूषयितुं युक्तम् । यादृशं व्यक्तिस्वरूपं महिमभट्टेन प्रोन्मीलितम्, न तादृशं स्वरूपं व्यक्तेर्ध्वनिकाराभिमतम् । अतो लक्षणवाक्ये व्यक्तिपदोपादानमदूषणमेव ।[3]

---

१. यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्य सहकारिता न त्रुट्यति, अन्यथाऽज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव । विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोर्ध्वननव्यापारः ।

ध्वन्यालोकलोचनम्, पृ० १०४ (चौ० सं०)

२. सतो वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानपेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरिति तल्लक्षणमाचक्षते ।

व्यक्तिविवेकः, पृ० ७६

३. व्यञ्जकप्रतीतिकाले हि नियमेन व्यङ्ग्यप्रतीतिरिति नास्माकमाशयः । व्यङ्ग्यप्रतीतिकाले तु नियमेन व्यञ्जकप्रतीतिर्भवत्येवेत्याशयेनाक्रमत्वं व्यक्तिश्च समर्थिता ।

—व्यक्तिविवेकव्याख्यानम्, पृ० ५८ (चौ० सं०)

**(८) ध्वनिर्नाम (१) काव्य-वैशिष्ट्यम्**

ध्वनिकारिकायां **काव्यविशेषो** ध्वनिरित्यत्र विशेषपदं किं प्रभेदार्थकम्, उतातिशयार्थकं विशेषशब्दस्यार्थद्वयत्वात् । तत्र नाद्यः । ध्वनौ विशेषकाव्येऽभ्युपगते सति

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥**[1]

इति स्ववचनविरोधापत्तेः । अयमाशयः । रससद्भावे काव्यत्वं ध्वनिकाराभिमतम् । तथात्व एव काव्यस्यात्मेति पूर्वोक्तकारिकावचनसङ्गतिः । अतः काव्यव्यपदेशः सर्वथा रससद्भावेनैव । तथा सति काव्यत्वं ध्वनित्वञ्चेत्येकं तत्त्वम् । उभयोः स्वरूपेणाभेदात् । अतः रससद्भावेनैव यदि काव्यत्वम्, तदा काव्यपदमात्रेण तद्ग्रहणात् काव्यरसयोः पर्यायतैव । तेन च ध्वनिकाव्यस्य विशेषपदेन व्यपदेशो निर्निबन्धनः । यदि काव्यत्वं रसव्यतिरिक्तं सम्भवेत्तदा तस्य नीरसकाव्याद् भेदे सति ध्वनिलक्षणे प्रभेदपर्यायो विशेषशब्दः सार्थकः स्यात् । र्यहि ध्वनिकारेण काव्यत्वं रससद्भावेनैव स्वीकृतम्, तत एव व्यवच्छेद्यस्याभावे विशेषपदेन काव्यवैशिष्ट्यकथनं सर्वथानुपपन्नम् । गुणीभूतव्यङ्ग्यं काव्यमात्रं ध्वनिश्च काव्यविशेष इति वचनमप्यस्वारसिकम्, गुणीभूतव्यङ्ग्यकाव्येऽपि प्रकृष्टचारुत्वदर्शनात्तस्य ध्वनिकाव्यतोऽभेदात् ।[2] एवं च रससद्भावेनैव काव्यत्वसम्भवात् प्रधानव्यङ्ग्यगौणव्यङ्ग्यकाव्ययोर्व्यङ्ग्यकृतप्रकृष्टचारुत्वस्य समानभावेन दर्शनात् काव्यस्य स्वरूपकृतं वैशिष्ट्यं नोपयुज्यते । तत एव विशेषपदस्य प्रभेदार्थे प्रयोगोऽयुक्तः ।

नान्त्योऽतिशयार्थकः । ध्वनिकाव्ये किंकृतोऽतिशयो येन ध्वनेः काव्यविशेषाभिधानमन्वर्थकं स्यात् । नहि निरतिशयानन्दमयस्य रसस्य कश्चिदतिशयः येन ध्वनिकाव्ये तत्कृतं वैशिष्ट्यं सम्भवेत् । रसानुभूतिसमये सहृदया हृदयसंवादवशात् स्वसंविदाह्लादरूपं रसमास्वादयन्तो नान्यत् किञ्चित् वेदयन्ति ।[3]

---

१. ध्वन्यालोकः, १, ५

२. यदि काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता ।
प्रकर्षशालिनि र्तीह व्यर्थ एवादरो ध्वनौ ॥
व्यक्तिविवेकः, १, ६६

३. पाठ्यादथ ध्रुवागानात् ततः सम्पूरिते रसे ।
तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम् ॥
ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः ।
व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः ॥
व्यक्तिविवेकः, पृ० ६४

इत्यत्र 'कृशाङ्ग्याः' इति पदस्यौचित्यं काव्यशोभनत्वनिष्पादकम्। अस्य पदस्यौचित्येन सागरिकाया विरहावस्था क्रमेण गाढगाढीभूता सहृदयहृदयेष्वतरति। तेन च विप्रलम्भशृङ्गाराभिव्यञ्जनात् परमास्वादः। इत्थं प्रस्तुते पद्ये औचित्येन विनियोजितं 'कृशाङ्ग्याः' इति पदं रमणीललामभूतोच्चनायिकानितम्बोपरिपरिहितमेखलावदपूर्वां कामपि श्रियं काव्यकामिन्या वर्धयति।

वाक्यौचित्यं यथा—

सम्बन्धी पुरुभूभुजां मनसिजव्यापारदीक्षागुरु-
गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः।
सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युति-
श्चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडामणिः॥[1]

प्रस्तुते पद्ये नायिकासविधे कश्चिन्नायको मन्मथोद्दीपकं चन्द्रं वर्णयति। समस्तमिदं पद्यं शृङ्गाररसोद्दीपकचन्द्रवर्णनेनौचित्यरचितं सत् सहृदयान् प्रीणयति। समस्तपद्यस्यार्थः प्रस्तुते प्रसङ्गेऽनुकूलः। यतो हि नायकः चन्द्रवर्णनद्वारा नायिकायाः रतिभावमुद्दीपयितुं समीहते। प्रणयव्यापारसमये चन्द्रवर्णनं सर्वथाऽनुकूलम्। तेन च शृङ्गाररसास्वादः। अत एवंविधे स्थलेऽनङ्गोद्दीपनक्षमं वाक्यं सर्वथोचितम्।

कारकौचित्यं यथा—

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥[2]

अत्र कस्यचित् पराक्रमिणो राज्ञः प्रतापवर्णनम्। महाबलवताऽनेन नृपेण रिपूणां नाशे कृते तत्स्त्रियोऽहर्निशं स्वभर्तॄणां विरहे क्लिश्यन्ति, अश्रूणि च मुञ्चन्ति। अयं वाक्यार्थः कारकौचित्येनैव शोभते। अत्र शत्रुस्त्रियो विलपन्ति, व्रतमाचरन्तीति कथने न चारुत्वम्। परं स्तनयुगं बाष्पसलिलेन स्नाति शोकाग्नौ तपश्चरति निराहारञ्च विद्यते इति कथनेनैव शोभा। अतोऽत्र कर्तृपदमुचितभावेन प्रयुक्तं सत् काव्यश्रियं परिपुष्णातीति कर्तृपदौचित्यम्।

---

१. काव्यमाला १, क्षेमेन्द्रविरचिता औचित्यविचारचर्चा, पृ० ११७
२. तत्रैव पृ० ११८

लिङ्गौचित्यं यथा—

निद्रां न स्पृशति त्यजत्यपि धृतिं धत्ते स्थितिं न क्वचित् ।
दीर्घां वेत्ति कथां व्यथां न भजते सर्वात्मना निर्वृतिम् ॥[1]

अत्र निद्रा-स्थिति-धृति-कथा-व्यथादीनां स्त्रीलिङ्गाभिधानेन परमौचित्यम्। एवमन्येऽपि वचनाद्यौचित्यभेदाः क्षेमेन्द्रेण प्रपञ्चिताः ।

परमौचित्यविचारचर्चायां कृतायां ध्वनिव्यतिरिक्तमौचित्यं न क्वापि स्थितिं लभते । आनन्दवर्धनाचार्यमते रसस्यैव परमविश्रान्तिधामतया काव्ये परमं महत्त्वम् । रस एवाङ्गिनि आत्मस्थानीये सति पदोपसर्गनिपातादीना-मन्येषाञ्च तदाश्रितानां गुणालङ्कारादीनाम् औचित्यं विवेचनीयं भवति । तद्यथा—ये खलु श्रुतिकटवो मूर्धन्याः टठषादयो ध्वनयस्ते शृङ्गारकरुणादौ चित्तद्रुत्यात्मनि रसे कर्णकर्कशत्वात् रसास्वादं व्यवदधति । ते रसास्वादान्तराय-भूतत्वात् अनुचिता भवन्ति । अतस्तेषामनौचित्यं सर्वानुभवसिद्धम् । अत एव कविभिस्तादृशो ध्वनयः परिहीयन्ते शृङ्गारकरुणादौ रसे । परं त एव ध्वनयो चित्तविस्तरात्मनि रौद्रवीभत्सादौ रसे कर्णकर्कशत्वात् रसोद्दीपका भवन्ति । अत एवोचितस्थानविन्यासात्ते गुणतामुपयान्ति । नहि कर्णकटूनां ध्वनीनां स्वतः किञ्चिदौचित्यमनौचित्यं वा, परं रस्यमानतासारैकप्राणस्य रसस्यास्वादे तेषामनुकूलप्रतिकूलभावेनावस्थानात्तेषामौचित्यमनौचित्यं वोप-पद्यते । इत्थमङ्गिनं प्रधानं रसमेवावलम्ब्य उचितानुचितविवेकः कृतो भवति । एवं जाते क्षेमेन्द्राचार्यस्य—

औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥[2]

इति वचनमपहस्तितं भवति । नह्यौचित्यं रसं विना क्वचिदपि भवति । शीर्षस्थानीये काव्यात्मनि रसे एवादावभ्युपगते किमुचितं किंवाऽनुचितमिति विचारः पश्चात् कृतो भवति । अतः काव्ये रसमहिमानमभ्युपगच्छता क्षेमेन्द्रेण यदौचित्यस्यात्मत्वं व्यवस्थाप्यते तत् स्वचनविरोधादेवापास्तं भवति । रसे आत्मनि सति नह्यन्यस्य कस्यचिदात्मत्वमुपपन्नम् । रस एवाङ्गी । असावेव चोचितानुचितनियामकः परमं प्रमाणम् । तस्मिन्नङ्गिनि मूर्धाभिषिक्ते सति

---

१. काव्यमाला भाग १, क्षेमेन्द्रकृता औचित्यविचारचर्चा, पृ० १४०
२. तत्रैव, पृ० ११५

नान्यस्य परिपन्थिन औचित्यादिकस्यात्मत्वेनावस्थानं युज्यते।[1]

परिम्लानं पीनस्तनजघनेत्यादौ पूर्वोद्धृते पद्ये 'कृशाङ्ग्याः' इति पदस्यौचित्यं यत्क्षेमेन्द्रेण प्रोक्तं तत्सूक्ष्मेक्षिकया निरीक्ष्यमाणं ध्वन्यनुबन्ध्येव पर्यवस्यति। विप्रलम्भे शृङ्गारे व्यङ्ग्ये सति 'कृशाङ्ग्याः' इति पदस्यौचित्यमत्र रसस्य ध्वननात्। इदं पदं सागरिकायाः विरहावस्थां ध्वनयन्नुपयुक्तमतोऽस्य पदस्यौचित्यम्। 'कृशाङ्ग्याः' इति पदं परिवर्त्य तत्स्थानेऽन्यस्य पदस्योपादाने ईप्सितार्थध्वननादनौचित्यम्।

एवं 'अत्र सागरिकायाः विरहावस्थासूचकं 'कृशाङ्ग्याः' इति पदं परमौचित्यं पुष्णाती'ति वदता क्षेमेन्द्रेण नापूर्वमभिहितं केवलं भङ्ग्यन्तरेण पदध्वनिरेव प्रोद्घाटितः। अपि च—

**विश्रान्तविग्रहकथो रतिमाञ्जनस्य**
**चित्ते वसन् प्रियवसन्तक एव साक्षात्।**
**पर्युत्सुको निजमहोत्सवदर्शनाय**
**वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥**[2]

इत्यत्र यदलङ्कारौचित्यं क्षेमेन्द्रोद्भावितं तदपि व्यङ्ग्यस्य शृङ्गाररसस्य सद्भाव एवोपपन्नम्। अत्र श्लेषानुप्राणितेनोपमालङ्कारेण वर्ण्यस्य वत्सराजस्य मन्मथमनोहारिता प्रकाश्यते। तेन च तस्य रमणीजनवल्लभत्वं द्योतितं भवति। तच्चान्ते अङ्गिनि शृङ्गाररसे पर्यवस्यति। यद्यत्र वत्सराजवर्णनेन युवतिजनवल्लभत्वद्योतनमिष्टं न भवेत्, तदा श्लेषानुप्राणितयाऽनयोपमया किम्? इयञ्चोपमा मनोहारिणि वत्सराजसौन्दर्ये प्रत्याययितव्ये सहकारितां भजते, स्थायिनो रतेरुद्दीपनभावञ्चावगाहते, अतोऽभिव्यङ्ग्यशृङ्गाररसानुकूलभावमुपयान्त्या अस्या उपमाया औचित्यम्। अन्यथोपमया केवलया न किञ्चित्। परमुद्दीपनभावेनोपस्थितया तया अङ्गी शृङ्गाररस उपस्क्रियते। अतः शृङ्गाररसस्योद्दीपनादुपमायाः शोभा। वर्ण्यस्य वत्सराजस्य युवतिजनमन्मथोज्जृम्भकं सौन्दर्यमुपमयाऽनयाऽभिवर्ध्यतेऽतस्तस्याः औचित्यम्। यतो हि कटककुण्डलादीनामलङ्काराणामलङ्कारता यथा अङ्गिनमात्मानमपेक्ष्य भवति तथैवानुप्रासोपमादीनामलङ्काराणामौचित्यमपि 'उपस्कार्यं ध्वनिमवलम्ब्यैव। नह्यचेतने शवभूते शरीरे परिधापिता अलङ्कारा अलङ्कुर्वन्ति शरीरमलङ्कार्य-

---

१. काव्यमाला भाग १, क्षेमेन्द्रविरचिता औचित्यविचारचर्चा, पृ० ११६
२. तत्रैव, पृ० १२३

स्याभावात्, तथैवात्मनि ध्वनावसति अलङ्कारागां किमलङ्करणं कियद्वाऽलङ्करणम् किंवा औचित्यम्। वीतरागैर्यतिभिरपि यद्यलङ्काराः कटककुण्डलादयः परिधीयन्ते तदानौचित्याद्धास्यावहा एव भवन्ति। तथैव काव्येऽपि शृङ्गारादौ रसे ध्वन्यमाने यमकादयोऽलङ्काराः कर्णकटवो ध्वनयश्चानुचितस्थानविन्यस्ता वैरस्यमेवावहन्ति।[1]

क्षेमेन्द्राचार्यप्रोक्तं पदवर्णनिपातोपसर्गादिकं व्याप्यौचित्यमानन्दवर्धनव्यवस्थापितपदवर्णनिपातादिध्वनिव्यतिरिक्तं नान्यत्किञ्चित्। एतद्द्वयोराचार्ययोर्वचनप्रामाण्यात् स्फुटं भवति। तद्यथा—आनन्दवर्धनाचार्येण ध्वनेर्व्यापकं रूपमित्थं प्रोक्तम्—

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्॥**[2]

अस्यैवानुध्वनिः क्षेमेन्द्राचार्येण कृतः पदवाक्यनिपातादिनौचित्यस्य व्यापि स्वरूपं प्रदर्शयता। तद्यथा—

**पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे**
**क्रियायां कारके लिङ्गे वचने च विशेषणे।**
**उपसर्गे निपाते च काले देशे कुले व्रते**
**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम्॥**[3]

इत्थं स्थिते ध्वन्यनुबन्धि क्षेमेन्द्रस्यौचित्यप्रस्थानं नोपजीव्यं ध्वनिमेव खली-

---

१. (क) रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्॥
ध्वन्यालोकः, ३, ६

(ख) एतदुक्तम्भवति—उपमया यद्यपि वाच्योऽर्थोऽलङ्क्रियते, तथापि तस्य तदेवालङ्करणं यद् व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति वस्तुतो ध्वन्यात्मैवालङ्कार्यः। कटककेयूरादिभिरपि शरीरसमवायिभिश्चेतन आत्मैव तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतयालङ्क्रियते।
आनन्दवर्धनकृतः ध्वन्यालोकः, लोचनटीका, पृ० १९७-९८

२. ध्वन्यालोकः, ३, १६

३. काव्यमाला भाग १, औचित्यविचारचर्चा, पृ० ११६

कर्तुं प्रभवति येन ध्वनिना तदौचित्यं स्वयमनुप्राणितम्भवति[1]। ध्वनिरेव तन्निकषाश्म यत्र पदवाक्यवर्णादीनामौचित्यस्य परीक्षा कृता भवति । कुत्रालङ्कारादीनामौचित्यं कुत्र चानौचित्यमिति विवेको ध्वनिमेव मुख्यं तत्त्वमभ्युपगम्य युज्यते ।

पदस्य वर्णस्यालङ्कारस्य वा यदौचित्यं प्रोच्यते तत्तु न स्वापेक्षि । अतो यस्यापेक्षया वर्णपदालङ्कारादय औचितिलाभमनुभवन्ति तदेवान्तर्भासि ध्वननाभिधानं परमं तत्त्वं काव्ये परमसौभाग्याधायकं कथं नाङ्गीक्रियते ।

यदि ध्वनिरेवौचित्यच्छद्मना व्यवस्थाप्यते, तर्हि न वक्तव्यं किञ्चित् । अन्यैरपि कुन्तकमहिमभट्टप्रभृतिभिराचार्यैस्तदेव सर्वकाव्योपनिषद्भूतं तत्त्वं वक्रोक्त्यनुमितिभङ्ग्या प्रतिपादितम् । परं न तेन लक्ष्यग्रन्थप्रसिद्धो वाल्मीकिकालिदासादिभिः कविपुङ्गवैः स्वीकृतः स्वरूपसिद्धोऽसौ ध्वनिर्निह्नुतो भवति । सर्वथा ध्वनिरस्तीति ध्वनिवादिनां पक्षः । तस्य ध्वनेरनुमितिरिति वक्रोक्तिरिति औचित्यं वेति नामकरणविवादे किं लब्धम् ? काव्यतत्त्वभूतप्रतीयमानार्थमहर्घरत्नगुणग्राहकाणां ध्वनितत्त्वस्य अभिधानान्तरकरणेन न किञ्चित् त्रुटयति । प्राज्ञा वस्तुनि युध्यन्ते न तु नामकरणे । तत्तत्वं ध्वनिरिति वक्रोक्तिरित्यौचित्यं वेत्यभिधीयेत रत्नकल्पस्य तस्यानवद्यता अक्षुण्णैव । नैतेन प्रतीयमानार्थसौभाग्यमुग्धानां काचिद्धानिः । परं तस्य तत्त्वस्य ध्वननाद् ध्वनिरित्यभिधानं सर्वेषां ध्वनिवादिनामनुकूलम् ।

वस्तुतस्तु रसस्य ध्वनेरौचित्यस्य चेति त्रयाणां परस्परं सहोदरभावः । यथा भरतमुनिप्रतिपादितस्य रसस्य ध्वननमुखेनैवाभिव्यञ्जनमुपपन्नं तथैवौचित्यस्यापि औचित्यं ध्वननद्वारैव । रसस्य स्वशब्देनावेदने क्रियमाणे नास्वादस्तस्य परं ध्वननमुखेनैव तदास्वादः । शृङ्गारः करुणो वा रस इति कथनेन

---

1. (a) 'Just as Kuntaka's Vakrokti proceeds only after accepting Rasa as Supreme and accepts also Dhvani so also kṣhemendra's Aucitya."
—V. Raghavan (Dr.), Sudies on Some Concepts of Alaṁkāra Śāstra, page No. 245.

b. "Kṣemendra's work is nothing more than a running commentary on Ānand-vardhana's thesis, and only an elaborate exposition of the implications contained in the latter's statement."
—Bhattacharya Bishnu Pada, the Dhvanyāloka of Ānanda-vardhanācārya, part I, commentary, page 31.

नहि कदापि रसस्यानुभूतिः। यथा आम्रमध्वादीनां पदानामुच्चारणेन नैवाऽऽम्रादीनां माधुर्यस्यास्वादः। परं विभावानुभावसम्मेलनेन व्यञ्जकैस्तैरभिव्यक्त एव ध्वननव्यापरानुबन्धी रस आस्वादितो भवति। एवं व्यञ्जनाव्यापारबलाद् रसास्वादे सति ध्वननमुखप्रेक्षित्वं तस्य रसस्य तावदायातमेव। प्रकारान्तरेण तदनास्वादात्।[1] परं ध्वनितोऽपि रसस्तावद् चर्वणाविषयतां नोपयाति यावदौचित्येन नासावुपनिबध्यते काव्ये। रावणसीताविषयिणी रतिर्विभावादिभिरभिव्यक्तापि अनौचित्याद् रसिकानामास्वादपदवीं नावतरति। अत एव नासौ रतिः परं रतेराभास एव। रामसीताविषयिण्येव रतिर्द्वयोर्नायिकनायिकयोस्तुल्यानुरागाद् मिथः प्रेमप्रदर्शनादौचित्यवती सती सहृदयैः आस्वाद्यते। एवं रसस्यानुभूतिस्तस्य ध्वननादेव। तस्य च ध्वनने कर्तव्ये तद्विषयकमौचित्यमनौचित्यमपि विवेक्तव्यम्भवति। अन्यथा विभावानुभावयोजनया व्यक्तेऽपि रसेऽनौचित्याद् विरसतैव सहृदयहृदयोद्वेजिका।

इत्थं रसध्वन्यौचित्यमिति त्रितयं परस्परं सहोदरत्वेन काव्ये व्याप्रियमाणं तस्य कामपि अपूर्वां शोभां प्रतनुते। नहि रसस्यास्वादः ध्वननं विना, ध्वनितोऽप्यसौ रसो न सहृदयहृदयावर्जकोऽनौचित्यादेव। ध्वननमपि रसमेवाभिव्यज्य कृतकृत्यमिति त्रितयं परस्परं सम्मिलितमन्योन्यमवलम्बमानमितरेतरं भूषयद् सहोदरभावेन काव्येऽन्योऽन्यमुपस्कुर्वत् काव्यश्रियं परिपुष्णाति।

एवं क्षेमेन्द्रेण रससिद्धान्तसहजातमौचित्यं रसप्राधान्यमभ्युपगम्य पृथगात्मत्वेन न व्यवस्थापयितुं शक्यते। औचित्यघटितसुन्दरशब्दार्थमयेऽपि काव्ये रसभावाद्यवश्यमभ्युपेयम्। तद्विना औचित्यस्यात्मलाभ एव न भवति। रससद्भावे एवाय प्रश्नः समुदेति यत् किमत्रोचितं किंवानुचितमिति। अतोऽसावेवात्मत्वेनाभ्युपेयः। रसश्च सर्वथा व्यङ्ग्य एवेति पुरा सिद्धान्तितम्। तेन क्षेमेन्द्रस्य औचित्यप्रस्थान न ध्वनिबाह्यमिति सिद्धम्।

———

१. ...यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणाव्यापाररसनीयरूपो रसः, स काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवेति, स एव मुख्यतयात्मेति।

ध्वन्यालोकः, लोचनटीका, पृ० १०१ (कुप्पुस्वामिसंस्करणे)

# ग्रन्थसूची


अग्निपुराण, आनन्दाश्रमसीरीज़, पूना, संवत् १९९१
अभिनवगुप्त—अभिनवभारती, सं०, एम० रामकृष्णकवि, बडोदा, १९५६
अप्पयदीक्षित—वृत्तिवार्त्तिक, सं०, पण्डित शिवदत्त, बम्बई, १९४०
A. Sankaran, Some Concepts of Literary Criticism in Sanskrit or The Theories of Rasa and Dhvani, Madras, 1929.
आनन्दवर्धन—ध्वन्यालोक, सं०, पट्टाभिरामशास्त्री, वाराणसी, १९४०
आशाधरभट्ट—त्रिवेणिका, सं०, बटुकनाथ शर्मा, वाराणसी, १९२५
उद्भट—काव्यालङ्कारसारसंग्रह, सं०, नारायणदास बनहट्टी, पूना, १९२५
कविकर्णपूर—अलङ्कारकौस्तुभ, सं०, शिवप्रसाद भट्टाचार्य, राजशाही, बंगाल, १९२७
कुन्तक—वक्रोक्तिजीवित, सं०, सुशीलकुमार डे, कलकत्ता, १९६१
क्षेमेन्द्र—औचित्यविचारचर्चा, सं०, पण्डित दुर्गाप्रसाद, बम्बई, १९२९
K. Krishnamoorthy, Dhvanyāloka and its Critics, Mysore, 1968.
गणेशत्र्यम्बक देशपाण्डे, भारतीय साहित्यशास्त्र, बम्बई, १९६०
गोविन्द—काव्यप्रदीप, सं०, पण्डित दुर्गाप्रसाद, बम्बई, १९३३
G. Marulasiddaih, Śabda Vṛttis (Power of words) Mysore, 1966
Gourinath shastri, The Philosophy of Word and Meaning, Calcutta, 1959
जगदीशतर्कालङ्कार—शब्दशक्तिप्रकाशिका, सं०, पण्डित ढुण्ढिराजशास्त्री, बनारस, १९३०
जयदेव—चन्द्रालोक, सं०, अनन्तरामशास्त्री वेताल, वाराणसी, १९३८
जयन्तभट्ट—न्यायमञ्जरी, सं०, सूर्यनारायण शुक्ल, बनारस, १९३६
J. L. Masson and M. V. Patwardhan, Śānta Rasa and Abhinavagupta's Philosophy of Aesthetics, Poona, 1969
Tapasvi, S. Nandi, The Origin and Development of the Theory of Rasa and Dhvani, Ahmedabad, 1973
दण्डी—काव्यादर्श, सं०, रङ्गाचार्यशास्त्री, पूना, १९३८

धनञ्जय—दशरूपक, सं०, टी० वेंकटाचार्य, मद्रास, १९१९
नरेन्द्रप्रभसूरि—अलङ्कारमहोदधि, सं०, लालचन्दभगवानदास गांधी, बड़ोदा, १९४२
नागेश—परमलघुमञ्जूषा, सं०, पण्डित सदाशिव शर्मा, वाराणसी, १९३५
पण्डितराज जगन्नाथ—रसगंगाधर, सं०, बद्रीनाथ झा, वाराणसी, १९५५
पार्थसारथिमिश्र—न्यायरत्नमाला, सं०, के० एस्० रामास्वामी शास्त्री, बड़ोदा, १९३७
प्रभाकरभट्ट—रसप्रदीप, सं०, नारायण शास्त्री खिस्ते, बनारस, १९२५
P.V. Kane, History of Sanskrit Poetics, Delhi, 1961
ब्रजमोहन चतुर्वेदी, महिमभट्ट, दिल्ली, १९६८
भर्तृहरि—वाक्यपदीय, सं०, के० वी० अभ्यंकर, पूना, १९६५
भट्टोम्बेक—श्लोकवार्त्तिकव्याख्या, सं०, एस्० के० रामनाथम्, मद्रास, १९६५
भामह—काव्यालङ्कार, सं०, नागनाथशास्त्री, तंजोर, १९२७
भोजराज—सरस्वतीकण्ठाभरण, सं०, केदारनाथ दुर्गाप्रसाद, बम्बई, १९२५
भोजराज—शृङ्गारप्रकाश, सं०, ज्योशेर, मैसूर, १९५५
मम्मट—काव्यप्रकाश, सं०, रघुनाथ दामोदर करमरकर, पूना, १९३३
———— सं०, ए० बी० गजेन्द्रगद्कर, बम्बई, १९२९
महिमभट्ट—व्यक्तिविवेक, सं०, मधुसूदन मिश्र, वाराणसी, १९३६
मुकुलभट्ट—अभिधावृत्तिमातृका, मम्मट—शब्दव्यापारविचार, सं०, मंगेश-रामकृष्ण तैलंग, बम्बई, १९१६
मौनीश्रीकृष्णभट्ट—वृत्तिदीपिका, सं०, गंगाधरशास्त्री भारद्वाज, बनारस, १९९०
M. Hiriyanna, Indian Aesthetics, Poona, 1922
Mukund Madhav Sharma, The Dhvani Theory in Sanskrit Poetics, Varanasi, 1961
यास्क—निरुक्त, सं०, बैजनाथ काशीनाथ राजवाडे, पूना, १९३६
राजशेखर—काव्यमीमांसा, सं०, सी० डी० दलाल, बड़ोदा, १९३४
रुय्यक—अलङ्कारसर्वस्व, सं०, गिरिजाप्रसाद द्विवेदी, बम्बई, १९३९
रुद्रट—काव्यालङ्कार, सं०, पण्डित दुर्गाप्रसाद, बम्बई, १९२८
रेवाप्रसाद द्विवेदी, आनन्दवर्धन, भोपाल, १९७२
R. Gnoli, The Aesthetic Experience according to Abhinava Gupta, Varanasi, 1968
Rama Ranjan Mukherji, Literary Criticism in Ancient India, Calcutta, 1966

R.C., Dwivedi, ed. Principles of Literary Criticism in Sanskrit, Delhi, 1969
वाचस्पतिमिश्र—तत्त्वबिन्दु, सं०, वी० रामास्वामी, अन्नामलाई, १९३६
वामन—काव्यालङ्कारसूत्रवृत्ति, सं०, श्रीकृष्ण सूरि, श्रीरंगम्, १९०९
विद्याधर—एकावली, सं०, कमलाशंकर प्राणशंकर, त्रिवेदी, बम्बई, १९०३
विद्यानाथ—प्रतापरुद्रीय, सं०, वे० राघवन्, मद्रास, १९७०
विद्याभूषण—साहित्यकौमुदी, सं०, पण्डित शिवदत्त, बम्बई, १८९७
विश्वनाथ—साहित्यदर्पण, सं०, शालग्रामशास्त्री, दिल्ली, १९५६
——— सं०, करुणाकर शर्मा, लाहोर, १९३८
विश्वनाथ—न्यायसिद्धान्तमुक्तावली, सं०, नृसिंहदेवशास्त्री, लाहोर, १९२८
V. Raghavan, Bhoja's Sṛṅgāra Prakāśa, Madras, 1963.
——— Some Concepts of Alaṁkāra Śāstra, Madras, 1942.
सायणमाधव—सर्वदर्शनसंग्रह, सं०, वासुदेवशास्त्री अभ्यंकर, पूना, १९२४
S. Bhattacharya, Studies in Indian Poetics, Calcutta, 1964
S. Kunjunni Raja, Indian Theories of Meaning, Madras, 1963
Surya Kanta, Kṣhemendra's Studies, Poona, 1954

# नामानुक्रमणिका

पर्यायोक्तलक्षणं यथा भट्टोद्भटेन प्रोक्तम्—

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥[1]

तस्यैवोदाहरणञ्चाधोलिखितं दत्तम्—

येन लम्बालकः साश्रः करघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥
सोऽपि येन कृतः प्लुष्टदेहेनाप्येवमाकुलः ।
नमोस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥[2]

अत्र वाच्यवाचकनाम्ना प्रसिद्धमभिधाव्यापारमन्तरेणापि यो गजासुरवधरूपोऽर्थोऽवगम्यते, स वाच्यवाचकव्यापारासंस्पृष्टः सन् पर्यायान्तरेण अभिव्यक्तो भवति, तेन पर्यायोक्तालङ्कारता । अत्र कार्यरूपाः लम्बालकत्वादयः कारणभूतं गजासुरवधं स्वकण्ठानभिहितमपि द्योतयन्तीत्यतोऽनभिधेयस्यार्थस्यावगमनात् पर्यायोक्तं नामालङ्कारः । एवं स्वशब्देनानुक्त्वा यदा कश्चिदर्थः प्रत्याय्यते, तदा प्रकारान्तरप्राप्तार्थस्य विच्छित्त्यास्पदत्वात् पर्यायोक्तालङ्कारता भवति ।[3]

एवं स्थिते यथा ध्वनौ प्रतीयमानोऽर्थः साक्षाच्छब्देन नाभिधीयते, परमर्थसामर्थ्येनानुक्तोऽसावर्थोऽवगम्यते, तथैव पर्यायोक्तेऽपि वाच्यवाचकभावभिन्नेन प्रकारान्तरेण स्वकण्ठानभिहितोऽर्थो द्योतितो भवति । तथा सति योऽसौ प्राचीनैराचार्यैः प्रोक्तः पर्यायोक्तालङ्कारः, न तद्बाह्यः कश्चिद् ध्वनिः । नहि पर्यायोक्तनाम्ना पूर्वं व्याकृतस्य तत्त्वस्य ध्वनिरिति नवीनाभिधानच्छलेन गोपनं युक्तम् ।

---

१. भट्टोद्भटः, काव्यालङ्कारसारसंग्रहः, ४-६

२. तत्रैव ।

३. अत्र लम्बालकत्वादयः कार्यरूपत्वात् कारणभूतं गजासुरवधं वाच्यवाचकव्यापारास्पृष्टमपि गमयन्ति । तेन च तथाविधया विच्छित्यावगम्यमानेनार्थेन ते लम्बालकत्वादयोऽर्था अलङ्क्रियन्ते । तस्मात् पर्यायोक्तमलङ्कारः ।

—बनहट्टी, नारायणदासः, उद्भट—काव्यालङ्कारसारसंग्रहः, लघुवृत्तिटीका, पृ० ५५-५६

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासबन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥[1]

प्रस्तुते पद्ये राहुशिरश्छेदरूपोऽनभिहितोऽर्थो वाच्यवाचकवृत्तिशून्येन प्रकारान्तरेणावगतो भवति। अतो राहुशिरश्छेदरूपस्य वस्तुरूपिणोऽर्थस्य यदत्र ध्वननम्, तत्पर्यायोक्तालङ्कारेणैव समर्पितमिति ध्वनिर्नालङ्कार-व्यतिरिक्तः ।[2]

ननु पर्यायोक्तालङ्कारे प्रकारान्तरेणावगतोऽपि प्रतीयमानोऽर्थः, न तथा प्रधानतां भजति यथासौ ध्वनौ। अतः पर्यायोक्तालङ्कारे प्रतीयमानार्थस्य अनुल्वणत्वात् वाच्यवाचकवृत्त्यवगतस्याभिधेयार्थस्यैव प्राधान्यम्। परं न तथा ध्वनौ। तत्र तु प्रतीयमानोऽर्थोऽङ्गी सन् प्रधानः। एवं पर्यायोक्तालङ्कारे यदि ध्वनेरन्तःपातस्तदा प्रतीयमानं प्रधानत्वादलङ्कार्यतया स्वीकार्यम्, नत्वलङ्कृतिकरणतया। तथा च ध्वनेरलङ्कारान्तर्भावो नोपयुक्त इति चेन्न, प्रधानस्यापि लोकेऽप्रधानालङ्कारकरणात्। यथा कश्चित् स्वामी भृत्यस्य विवाहप्रसङ्गे वरयात्रायां सम्मिलितो विवाहोत्सवं स्वमहिम्ना भूषयति, तथैव प्रतीयमानार्थः प्रधानत्वेनावस्थितोऽपि वाच्यवाचकभावप्राणमर्थं भूषयन्नलङ्कारनाम्ना व्यपदिश्यते। एवं पर्यायोक्तादावलङ्कारेऽन्तर्हितस्य ध्वनेर्लोकन्यायेनालङ्कारता न विरुद्धा ।[3]

एवमेवालङ्कारध्वनेरपि पर्यायोक्तरूपकाद्यलङ्कारान्तर्गतत्वमधोलिखित-प्रकारेण स्पष्टं सम्पद्यते ।

---

१. बनहट्टी, नारायणदासः, उद्भट—काव्यालङ्कारसारसंग्रहः, लघुवृत्तिटीका, पृ० ८६

२. अतोऽत्र वस्तुमात्रस्यैवंविधस्य शब्दव्यापारास्पृष्टस्य प्रतीयमानता। तद्विषयस्य च काव्यधर्मस्य ध्वननाभिधानस्य वाच्यवाचकव्यापारशून्यावगमनस्वभावत्वात् पर्यायोक्तालङ्कारसंस्पर्शित्वम् ।

तत्रैव, पृ० ८६

३. प्रधानमपि गुणानां सौन्दर्यहेतुत्वादलङ्कृतौ साधनत्वं भजति। दृश्यते हि लोके व्यपदेशः स्वाम्यलङ्करणका भृत्या इति। अत्रोऽत्रापि प्रतीयमानस्य सत्यपि प्रधानत्वे स्वगुणभूतवाच्यसौन्दर्यसाधकतमत्वादलङ्कारव्यपदेशो न विरुध्यते ।

तत्रैव, पृ० ८६

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥[1]

अत्र ध्वनिवादिभिः रूपकालङ्कारस्य ध्वननादलङ्कारध्वनिः सम्प्रतिपद्यते। परमत्रापि प्रतिहारेन्दुराजमते पर्यायोक्तालङ्कारो रूपकालङ्कारो वेत्यलङ्कार एव कश्चिदस्ति, न तु ध्वनिः। अत्र प्रकारान्तरेण मुखचन्द्रमसोरभेदः प्रदर्श्यते । अतो वाच्यवाचकभावभिन्नेनान्येन प्रकारेण प्रत्यायिता रूपणा पर्यायोक्तालङ्कारान्तर्गतैव। तेन व्यङ्ग्यो रूपकालङ्कारो न ध्वनिमार्गावगाही, प्रत्युत पर्यायोक्तालङ्कारपर्यवसायी। अथवा वाच्यो रूपकालङ्कार एवात्राभ्युपेयः। नहि रूपकालङ्कारस्य प्रतीयमानतायां तस्यालङ्कारतोपहन्यते। इत्थं रूपकालङ्कारो वाच्योऽत्र स्वीकरणीयोऽथवा मुखचन्द्रयोः परस्परमुपमानोपमेयभावध्वननाद् रूपकालङ्कारध्वनिरयं वाच्यवाचकवृत्तिशून्येनावान्तरेण प्रकारेणाभिहितत्वात् पर्यायोक्तालङ्कारकुक्षौ प्रविशति। नहि नृपस्याज्ञेयं यदलङ्कारस्य कस्यचित् प्रतीयमानतायां तस्यालङ्कारता त्रुट्यति। अतोऽत्र पर्यायोक्तालङ्कारो भवेद् वा रूपकालङ्कारः परमलङ्कार एव कश्चन स्वीकरणीयो न तु ध्वनिः।[2]

ध्वनिवादिनां रसध्वनिरपि भट्टोद्भटप्रोक्तेषु रसवदाद्यलङ्कारेष्वन्तर्हितो भवति। अतस्तस्यापि नालङ्कारबाह्यत्वम्। तत्र रसवदलङ्कारलक्षणं भट्टोद्भटेन प्रोक्तम्—

रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम् ॥[3]

अयमभिप्रायः। यत्र काव्ये शृङ्गारादेर्वाचकाः शब्दाः शृङ्गारादयः, स्थायिनो रत्यादयो भावाः, तेषां कारणभूताः कामिनीप्रभृतयः चन्द्रोदयगन्धानुलेपनवेश-

---

१. तत्रैव, पृ० ८७

२. न च यस्यालङ्कारस्य प्रतीयमानरूपता, तस्येहालङ्कारत्वं केनचिन्निवारितमिति प्रतीयमानरूपतया रूपकाख्योऽलङ्कारो भविष्यति। अथवा पर्यायोक्त्या रूपकस्यात्रावसितत्वात् पर्यायोक्तमलङ्कारः।
बनहट्टी, नारायणदासः, उद्भटः—काव्यालङ्कारसारसंग्रहः—लघुवृत्तिटीका, पृ० ८७

३. उद्भटः, काव्यलङ्कार-सारसंग्रहः, ४-३

भूषासज्जादयश्च विभावाः, सस्मितावलोकनकटाक्षनिक्षेपादय आङ्गिकाः कार्यभूता अनुभावाः, लज्जौत्सुक्यादयः सञ्चारिणश्च समस्ततया व्यस्ततया चोपनिबध्यन्ते, तेन च शृङ्गारादिरसाविर्भावो भवति, तत्र रसवदलङ्कारः। यथा—

**इति भावयतस्तस्य समस्तान् पार्वतीगुणान्।**
**संभृतानल्पसंकल्पः कन्दर्पः प्रबलोऽभवत्॥**
**स्विद्यताऽपि स गात्रेण बभार पुलकोत्करम्।**
**कदम्बकलिकाकोशकेसरप्रकरोपमम्॥**
**क्षणमौत्सुक्यगर्भिण्या चिन्तानिश्चलया क्षणम्।**
**क्षणं प्रमोदालसया दृशास्यास्यमभूष्यत॥**[1]

इत्यत्र कन्दर्पपदेन स्थायिभावः प्रोक्तः, औत्सुक्यचिन्ताप्रमोदादयः सञ्चारिणः, स्वेदरोमाञ्चौ सात्त्विकौ, पार्वती तदङ्गसौन्दर्यञ्च विभावाः। एवमेतेषां समस्तानां शब्देनोपादानादत्राभिलाषिकः शृङ्गाररसः आस्वाद्यते। अत्र एवात्र रसवदलङ्कारः।

एवमेव—

**याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया**
**निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम्।**
**भूयस्तत् प्रकृतं कृतञ्च शिथिलक्षिप्तैकदोर्लेखया**
**तन्वङ्ग्या न तु पारितःस्तनभरः क्रष्टुं प्रियस्योरसः॥**[2]

इत्यस्मिन् पद्ये सम्भोगशृङ्गारस्य प्रतीयमानतायां यः शृङ्गाररसध्वनिरसौ पूर्वोक्तदिशा रसवदलङ्कारस्यैव विषयः।

अत्र भुजलतयोः शैथिल्यादपि प्रियस्योरसः कुचकुम्भयुगलस्याक्रष्टुमसामर्थ्यान्नायिकायाः प्रच्छन्नानुरागो विदग्धानामास्वादविषयः। असौ च विभावानुभावादीनां समस्ततयोपादानादभिव्यक्तो भवति। अतो यथा विभावानुभावादीनामुपादानाद् रसप्रतीतौ रसवदलङ्कारस्तथैवात्रापि। नायकस्य गोत्रस्खलने कर्णगोचरतां प्राप्ते सति उदीयमान ईर्ष्याविप्रलम्भशृङ्गारो 'निर्ध्यातं परिवर्तनमि'त्यादिनाभिव्यक्तः सन् 'स्तनभरः क्रष्टुं प्रियस्योरसः' इत्यादिना सम्भोगशृङ्गारेणाच्छादितः। अतोऽत्र सम्भोगशृङ्गार एव प्रधानः। स च भुजलतयोः शैथिल्येऽपि स्तनभरस्याकर्षणासामर्थ्यादिभिर्विभावैः प्रतीयते।

---

१. बनहट्टी, नारायणदासः, उद्भटः—काव्यालङ्कारसारसंग्रहः, पृ० ५३
२. तत्रैव, लघुवृत्तिटीका, पृ० ८८

इत्थं योऽसौ नायिकायाः सम्भोगशृङ्गारपर्यवसायी नायकविषयोऽनुरागो ध्वनिमार्गाध्वनीनैर्ध्वनिनाम्ना मूर्धाभिषिक्तः कृतस्तस्य भट्टोद्भटप्रदर्शितदिशा रसवदलङ्कारान्तर्गतत्वमेव। एवमन्योऽपि रसभावादिध्वनिः, प्रेयस्वदूर्जस्व्याद्यलङ्कारान्तर्गतः स्वयमेवोह्यः। तेन च तृतीयोऽपि ध्वनेर्भेदोऽलङ्कारेष्वेवान्तर्धीयते।[1]

एवं **प्रतिहारेन्दुराजमते** सर्वस्यापि ध्वनेः प्राचीनाचार्यप्रोक्तपर्यायोक्तरसवदादिष्वलङ्कारेष्वन्तर्भावात् सर्वोऽपि ध्वनिर्नालङ्कारातिरिक्तत्वेनावस्थातुमर्हति।[2]

## अलङ्कारप्राधान्यवादिमतप्रत्याख्यानम्

ध्वन्यभाववादिना **प्रतिहारेन्दुराजेन** ध्वनिध्वंसार्थं ये तर्काः पूर्वमुद्धृतास्तैर्ध्वनिर्न निराकृतो भवति। तस्य मतस्य सूक्ष्मगवेषणायां कृतायां ध्वनिध्वंसे प्रवृत्तस्य प्रतिहारेन्दुराजस्य स्पष्टं ध्वनिपृष्ठानुगामित्वं लक्ष्यते। यद्यपि प्रतिहारेन्दुराजेन स्पष्टमलङ्कारव्यतिरिक्तो ध्वनिर्न सम्प्रतिपन्नः, परं तथापि अलङ्कारेषु प्रतीयमानार्थस्य प्राधान्याभ्युपगमात् प्रकारान्तरेण ध्वनिरङ्गीकृत एव भवति। यतो हि व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिरप्राधान्ये च पर्यायोक्तादयोऽलङ्कारा इति ध्वनिवादिनां दर्शनम्। प्रतिहारेन्दुराजेनापि प्रतीयमानार्थस्य प्राधान्यं कण्ठतोऽभ्युपगतम्। प्रधानस्य प्रतीयमानस्यालङ्कार्यत्वं न त्वलङ्कारतेत्यपि न तिरोहितमिन्दुराजस्य। एवं यद्यपि प्रतीयमानार्थोऽलङ्कारान्तर्गतो दृश्यते, तथापि प्रधानत्वेनावतिष्ठमानस्य तस्य पर्यायोक्ताद्यलङ्कारकुक्षौ प्रवेशोऽनुपपन्नः। यदि वाच्यार्थस्य प्राधान्यं तदा ध्वनित्वं दूरमपास्तम्। व्यङ्ग्यार्थो यदि प्रधानस्तर्हि तस्य प्राधान्याद् ध्वनित्वमेव नत्वलङ्कारता। इत्थं प्रतीयमानार्थस्य प्राधान्यं यद्यभ्युपेयते, तर्हि ध्वनिसद्भावोऽभ्युपगन्तव्य एव। यदप्युच्यते 'स्वाम्यलङ्करणका भृत्याः' इति लोकन्यायेन प्रधानस्यापि प्रतीयमानस्यान्यालङ्करणादलङ्कारत्वं सिद्धं तदपि नोचितम्, अन्यालङ्करणे प्रतीयमानार्थस्य ध्वनित्वासम्भवात्। यदि

---

१. तत्र च पूर्वं रसवत्त्वलक्षणोऽलङ्कारः प्रतिपादितः-रसवद्दर्शितेत्यादिना। एवं रसान्तरेष्वपि वाच्यम्।

तत्रैव, लघुवृत्तिटीका, पृ० ८८

२. एवञ्च त्रिविधेऽपि प्रतीयमानेऽर्थे यच्छब्दानां व्यञ्जकत्वमनन्तरोपवर्णितेषूदाहरणेषु षट्प्रकारतयोपदर्शितं तस्योक्तेष्वेवालङ्कारेष्वन्तर्भावाद् व्याप्तिः। —तत्रैव, पृ० ८९

प्रतीयमानोऽर्थोऽलङ्कारान्तरं भूषयति, तर्हि तस्य गुणीभूतत्वमेव न प्रधानत्वम्। अतो नायं लोकन्यायोऽत्र सुसङ्गच्छते। प्रतीयमानार्थस्य प्राधान्ये स्वीकृते तन्मूलकं ध्वनित्वं तावदप्रतिक्षेप्यम्।

किञ्च प्रतिहारेन्दुराजेन स्वयं षोढा ध्वनिः सम्प्रतिपन्नः। तेनापि प्रतीयते यदनिच्छतापि तेन ध्वनिः स्वीकृत एव भवति। तन्मते वाचकशब्दशक्त्याश्रयो वाच्यार्थशक्त्याश्रयश्चेति द्विविधो ध्वनिः। तत्र शब्दशक्त्याश्रयो ध्वनिर्ध्वनिकारस्य शब्दशक्तिमूलध्वनितुल्यः। प्रतिहारेन्दुराजेनापि ध्वनिकारवद् वाचकशब्दशक्तिमूलध्वनेरलङ्कारैकनियतत्वादेक एव भेदः प्रोक्तः। असौ च विवक्षितवाच्यो ध्वनिरलङ्काररूपः। वाच्यार्थशक्त्याश्रयो ध्वनिस्त्रिविधो वस्त्वलङ्काररसरूपः। तत्र रसादिरूपो ध्वनिर्वाच्यार्थस्य सदैव विवक्षायां विवक्षितवाच्यः। परं वस्त्वलङ्काररूपो वाच्यार्थशक्त्याश्रयो द्विविधो ध्वनिरर्थस्य विवक्षाऽविवक्षाभ्यां विवक्षितवाच्योऽविवक्षितवाच्यश्चापि। एवं प्रतिहारेन्दुराजमते साकल्येन ध्वनेः षड् भेदाः।[1]

ध्वनिः

**वाचक (शब्द) शक्त्याश्रयः** | **वाच्य (अर्थ) शक्त्याश्रयः**

**१. विवक्षितवाच्योऽलङ्काररूपः**

**२. विवक्षितवाच्यो वस्तुरूपः**
**३. अविवक्षितवाच्यो वस्तुरूपः**
**४. विवक्षितवाच्योऽलङ्काररूपः**
**५. अविवक्षितवाच्योऽलङ्काररूपः**
**६. विवक्षितवाच्यो रसरूपः**

वाचकशब्दशक्तिवाच्यार्थशक्तिनामभ्यां प्रतिहारेन्दुराजेन ध्वनिकारप्रोक्तौ शब्दशक्तिमूलार्थशक्तिमूलध्वनी व्याख्यातौ। केवलं विवक्षितवाच्याविवक्षितवाच्याभ्यां वस्त्वलङ्कारध्वन्योर्भेदप्रदर्शनं नवीनम्। परं नैतेन किञ्चित्। अलङ्कारप्राधान्यवादिना प्रतिहारेन्दुराजेन प्रकारान्तरेण ध्वनिः सम्प्रतिपन्न इति न तिरोहितं प्रेक्षावताम्। प्राचीनालङ्कारिकमतमनुरुन्धानेन तेन ध्वन्यनुयायिवद् मूर्धाभिषेकं दत्त्वा ध्वनिर्नोपात्तः, परं न खलु सर्वथा ध्वनिं प्रत्यकारुण्यं प्रतिहारेन्दुराजस्य।

---

१. बनहट्टी, नारायणदासः, उद्भटः—काव्यालङ्कारसारसंग्रहः, लघुवृत्तिटीका, पृ० ८६

अपरञ्च काव्ये रसस्य प्राधान्यं स्वीकुर्वाणेन[1] प्रतिहारेन्दुराजेन ध्वनिः स्वहस्तित एव, रसस्य सदा व्यञ्जनावेद्यत्वात्। आनन्दवर्धनादिभिर्ध्वनिपृष्ठ-पोषकैरपि काव्ये रसस्य प्राधान्यमभ्युपगम्यते, तेन प्रतिहारेन्दुराजस्य ध्वनि-पक्षपातिता स्फुटीभवति। नहि ध्वनिमनादृत्य रसस्याभिव्यक्तिरुपपद्यते। अतो रसप्राधान्यवादिना ध्वनिरपि स्वीकृत एव भवतीत्यलं पल्लवितेन।

आनन्दवर्धनाचार्येण ध्वन्यालोकस्याद्य उद्योते प्रबलाभिर्युक्तिभिरलङ्कार-प्राधान्यवादिनां मतमुत्पाटितम्, ध्वनेश्चालङ्कारव्यतिरिक्तत्वं सिद्धान्तितम्। वाच्यवाचकभावज्ञानपर्यवसितसामर्थ्यैः प्राचीनालङ्कारिकैः प्रतीतिपथावतीर्णोऽपि ललनालावण्यकल्पः प्रतीयमानार्थो वाच्यवाचकभावातिरिक्तस्य कस्यचित् प्रतीयमानार्थावगमकस्य व्यापारस्य अस्फुरणात् अलङ्कारेष्वेवान्तर्भावितः। अत एव पर्यायोक्तलक्षणे परिस्फुरतः प्रतीयमानार्थस्य वाच्यवाचकभावभिन्नेनान्येन प्रकारेणावगमनं तु तैः प्रोक्तम्, परं कोऽसौ प्रकार इति तु नोद्घाटितम्। आनन्द-वर्धनेन तु क्वचित् पर्यायोक्ते परिस्फुरितः क्वचिद् रसवदाद्यलङ्कारेषु निह्नुतः प्रसुप्तकल्पो ध्वनिरभिधालक्षणातिरिक्तं व्यञ्जनाव्यापारमुद्भाव्य ध्वन्यालोके प्रतिष्ठापितः। यद्यानन्दवर्धनाचार्यात् प्राग्भट्टोद्भटादिभिः आलङ्कारिकैरभिधा-लक्षणातिरिक्तः कश्चन शब्दव्यापारः प्रोद्घाटितोऽभविष्यत्, तदा रीत्यलङ्कारा-दिष्वस्फुटस्फुरितो ध्वनिः सम्यग् व्यक्तोऽभविष्यत्। अतः प्रतीयमानार्थप्रत्या-यनक्षमाया व्यञ्जनावृत्त्या अनुद्भावनात्, प्रतीयमानमर्थं जानानैरपि प्राचीनैर-लङ्कारप्राधान्यवादिभिराचार्यैर्मूर्धाभिषेकं दत्त्वा ध्वनिनाम्ना नासौ प्रोद्घा-टितः, परमलङ्कारेष्वेवानुप्रवेशितः। अत एव प्रतीयमानोऽर्थो वाच्यवाचकवृत्ति-भिन्न इति तु तैः स्वीकृतम्, परं तस्यान्येन प्रकारेणाभिधानमेव तैः प्रोक्तम्, न त्वभिव्यक्तिः।[2]

---

१. रसा हि काव्यस्यात्मत्वेनावस्थिताः शब्दार्थौ च शरीररूपतया। यथा ह्यात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते तस्माद् रसानां काव्यशरीर-भूतशब्दार्थविषयतयात्मत्वेनावस्थानं नत्वलङ्कारतया।

बनहट्टी, उद्भटः—काव्यलङ्कार-सार-संग्रहः-लघुवृत्तिटीका, पृ० ८३

२. पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना।

उद्भटः—काव्यालङ्कारसारसंग्रहः, ४, ६

परमानन्दवर्धनाचार्येण काव्यतत्त्वरत्नवैकटिकेन अलङ्कार्यत्वेनाङ्गीकार्यो ध्वनिरलङ्कारकुक्षेर्बहिर्निष्कास्य काव्ये प्रधानत्वसिंहासने प्रतिष्ठापितः, अलङ्कारता च तस्य व्यपाकृता। तस्यायमाशयः। यदि प्रतीयमानोऽर्थो वाच्यवाचकधर्मानलङ्कारानुपस्कुर्वन्नङ्गभावमाप्नोति, तदा न तत्र ध्वनिव्यवहारः, किन्तु व्यङ्ग्यार्थस्य अनुल्बणत्वात् पर्यायोक्तसमासोक्त्यादयोऽलङ्काराः। अतः पर्यायोक्तादौ प्रतीयमानार्थस्य गौणतायामलङ्कारव्यपदेश एव समीचीनः। तद्यथा—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्॥**[1]

अत्र नायकनायिकारूपिणः प्रतीयमानार्थस्य निशाशशिरूपिणि वाच्यार्थे पर्यवसानाद् वाच्यार्थस्य चालङ्कार्यत्वेनावस्थानाद् व्यङ्ग्यार्थस्य गुणीभावे सति समासोक्त्याद्यलङ्कारव्यपदेशो युज्यते, न तु ध्वनिः।[2] एवं प्रतीयमानार्थस्य वाच्यार्थापेक्षयाऽप्राधान्ये सत्यलङ्कारव्यपदेशः तस्य ध्वनिवादिनां न विरुद्धः।

आक्षेपालङ्कारेऽपि व्यङ्ग्यार्थस्य वाच्यमुपस्कर्तुं धावनाद् वाच्यार्थस्यैव चारुत्वमतस्तत्रापि न ध्वनिः, प्रत्युतालङ्कारतैव। तद्यथा—

**अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः।**
**इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते॥**[3]

इत्याक्षेपालङ्कारोदाहरणे 'म्रिये' इति प्रतीयमानोऽर्थः स्वशब्देनानुक्तः स्वात्मनि विश्रान्तिमलभमान आक्षेप्यः सन्नाक्षेपके वाच्यार्थे स्वं समर्प्य चारुत्वमाधत्ते इति व्यङ्ग्यस्यात्राऽप्राधान्ये पर्यायोक्तालङ्कारदिशा अलङ्कारव्यपदेशोऽत्र युक्तः। एवं दीपकाप्रस्तुतप्रशंसालङ्कारादौ क्वचित् वाच्यार्थस्य व्यङ्ग्यार्थापेक्षया प्राधान्यम्, क्वचिच्च वाच्यव्यङ्ग्यार्थयोस्तुल्यं प्राधान्यम्, क्वचिच्च तयोः कतरः प्रधान इति निर्णेतुमशक्यम्, क्वचिच्च तयोर्म्लिष्टा प्रतीति-

---

१. शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १०६
२. निम्नदेशनिपातुकनिर्झरनीरप्रवाहन्यायेनार्वाचीनवाच्यार्थानुधावनहेवाकित्वादीदृशि विषये व्यङ्ग्यार्थस्येति तदभिप्रायेण व्यङ्ग्यस्य वाच्योपस्करणमात्रक्षीणत्वात्, समासोक्त्यादौ गुणीभूतव्यङ्ग्यप्रकारान्तर्भावो वक्ष्यमाणो व्युत्पन्न इति।
शास्त्री, एस० कुप्पुस्वामी, आनन्दवर्धन-ध्वन्यालोकः, कौमुदी-टीका, पृ० १६०
३. ध्वन्यालोकलोचनटीका, पृ० १११

रिति सर्वत्र व्यङ्ग्यार्थस्याङ्गित्वेनावस्थानाभावात् सङ्करः संसृष्टिर्वान्यः कोऽप्यलङ्कारः संभवति न तु ध्वनिः।

परं पर्यायोक्तसमासोक्त्याद्यलङ्काररूपेण यादृशो ध्वनिरन्तर्भाववादिना प्रदर्शितः, न तादृशो ध्वनिर्ध्वनिवादिनामभिमतः। यत्र शब्दार्थौ व्यङ्ग्यार्थं प्रति तत्परौ सन्तौ स्वात्मानमुपसर्जनीकृत्य तं द्योतयतः, तत्रैव व्यङ्ग्यार्थप्राधान्ये ध्वनिः। यथोक्तं ध्वनिकारेण—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**[1]

नहि पर्यायोक्तादावन्तर्भूतस्य प्रतीयमानार्थस्य प्रधानता येन ध्वनित्वं तत्रोपपद्येत। नह्यङ्गरूपेणावस्थितो वाच्यार्थं भूषयन् प्रतीयमानोऽर्थो ध्वनिवादिभिर्ध्वनिनाम्ना संज्ञप्यते। प्रत्युत तस्याङ्गरूपेणावस्थानात् पर्यायोक्तालङ्कारतैव। अङ्गी ह्यसौ ध्वनिर्गुणालङ्कारैरङ्गभूतैरुपस्क्रियत इत्युपस्कार्यत्वं तस्य युक्तं भवति, नतूपस्कारकत्वम्।[2] प्रधानस्य ध्वनेः कुक्षौ वाच्यवाचकभावप्राणा अलङ्काराः प्रवेष्टुमसमर्थाः। अत उपसर्जनीकृतस्वार्थाभ्यां शब्दार्थाभ्यां व्यङ्ग्यार्थस्याभिव्यक्तौ, तस्यालङ्कारव्यतिरिक्तत्वं सिद्धम्, नत्वलङ्कारत्वम्। अत एव

**शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।**
**तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥**[3]

इत्यत्र विदग्धचाटुवचनरचनया परिस्फुरितस्य नायिकाधरचुम्बनरूपिणः प्रच्छन्नस्य नायकाभिप्रायस्य चमत्कारिणि सति, तस्यैव प्राधान्यम्। वाच्यार्थस्य च भृत्यवद् गौणभावेनावस्थानम्। अत्र वस्तुरूपोऽङ्गी ध्वनिः सहृदयहृदयपदवीमधिरूढः प्रधानत्वेन चकास्ति। तेन च वस्तुध्वनिरत्र युक्तः, न तु गुणीभूतव्यङ्ग्याः समासोक्त्यादयोऽलङ्काराः।

यदि पर्यायोक्तादावलङ्कारे क्वचित् प्रतीयमानोऽर्थः प्रधानताभिषेकं दत्त्वा व्याख्यायते, तदा तस्याङ्गित्वाद् ध्वनिरेव, पर्यायोक्तालङ्कारता च दूरं निरस्ता भवति। नहि भामहभट्टोद्भटाद्यालङ्कारिकैः प्रोक्तेष्वलङ्कारेषु प्रतीयमानार्थस्य

---

१. ध्वन्यालोकः, १, १३

२. शब्दार्थसौन्दर्यतनोः काव्यस्यात्मा ध्वनिर्मतः।
तेनालङ्कार्य एवायं नालङ्कारत्वमर्हति॥
नरेन्द्रप्रभसूरि—अलङ्कारमहोदधिः, ३, ६४

३. आनन्दवर्धन—ध्वन्यालोकः, पृ० १३८

प्राधान्येनावस्थानम् । परं पर्यायोक्तादीनामलङ्कारमात्रत्वमेवावशिष्यते, प्रतीयमानार्थस्य तत्र वाच्यार्थोपस्कारकरणात् । यतः प्रतीयमानार्थस्य प्राधान्यं भामहाद्युक्तेष्वलङ्कारेषु न दृश्यते, तत एवालङ्कारानन्तर्गतः प्रतीयमानोऽर्थो ध्वनिरूपेण व्यवस्थित एव ।[1]

यच्चापि रसवदादिष्वलङ्कारेषु शृङ्गारादिरसध्वनेरन्तर्भावः प्रोक्तस्तदप्यसाम्प्रतम् । नहि भट्टोद्भटवद् ध्वनिवादिभिः शृङ्गारादीनां रसानां स्वशब्दवाच्यत्वं प्रोच्यते । यदि स्वशब्दैरभिधीयमानाः शृङ्गारादयो रसाः सचेतसां मनस्सु चमत्कृतिमाधातुं प्रभवेयुस्तर्हि घृतपूरप्रभृतयोऽपि पदार्था उच्चारणमात्रेणैवोपभोगार्थिनो जिह्वालौल्यं प्रशाम्योदरदरीं पूरयेयुः । परं घृतपूरप्रभृतीनां पदार्थानां स्वशब्देनोच्चारणे कृते न तेषामास्वादः । रसादयोऽपि शृङ्गारादिशब्दोच्चारणमात्रेणैव नास्वाद्यन्ते, परन्तु विभावानुभावैरभिव्यज्यमानाः कण्ठेनानभिहिता एवास्वादविषयतामुपयान्ति । स्वशब्दावेदितेषु रसादिषु का नाम रसास्वादचर्चा ?

किञ्च यत्राङ्गभूतै रसादिभिः प्रधानभूतस्य वाक्यार्थस्योपस्करणं क्रियते, तत्रैव ध्वनिवादिनां मते रसवदाद्यलङ्कारव्यपदेशः समुचितः ।[2]
तद्यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽशुंकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥[3]

इत्यत्र त्रिपुररिपुप्रभावातिशयरूपिणो वाक्यार्थस्य प्राधान्यात् श्लेषसहितस्येर्ष्याविप्रलम्भस्य च तस्याङ्गत्वात् रसस्याप्राधान्ये वाक्यार्थस्य चेर्ष्याविप्र-

---

१. सत्यमप्राधान्यदशायां तत्र व्यङ्ग्यस्य वाच्योपस्कारत्वेनालङ्कारत्वमुक्तम् । प्राधान्यदशायां तु न्यग्भावितवाच्यस्य वाच्यकक्ष्यातिलङ्घिनस्तस्य ध्वनित्वमास्थितस्य स्वयमलङ्कार्यस्य काव्यात्मनः कुतोऽलङ्कारत्वमिति ।

—त्रिवेदी, विद्याधर—एकावली, तरल टीका, पृ० ३०

२. प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥

—आनन्दवर्धनः, ध्वन्यालोकः, २, ५

३. पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ११५

लम्भशृङ्गारेणोपस्कार्ये सति रसवदलङ्कारः स्फुटः ।

परं यत्र

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥**[1]

इत्यादौ यत्र सम्भोगशृङ्गाररसस्याङ्गित्वेनावस्थानात्तस्य प्रधानता तत्र रसध्वनिरेव, न रसवदाद्यलङ्कारता। नह्यलङ्कारोऽलङ्कुर्वाणः कञ्चिदलङ्कार्यत्वेन स्थितो भवति। रसवदाद्यलङ्कारे यदि रसस्यालङ्कारता तदा कोऽसावलङ्कार्यो यं रसोऽलङ्करोति। यदि कश्चिच्चाटुरूपो वाक्यार्थोऽलङ्कार्यस्तदा ध्वनित्वं कथाशेषतां गतम्। परं यदि रस एवालङ्कार्यस्तदाऽन्येषां सर्वेषामलङ्काराणामङ्गभूतत्वात्तेषामलङ्कारत्वमेवोपपन्नं, न तु ध्वनित्वम्। तेषां रसरूपिणोऽलङ्कार्यस्यालङ्करणादिति।

एव रसवदादिष्वलङ्कारेषु ध्वनिर्नान्तर्भवति, प्रत्युतालङ्कार्यत्वेनावस्थितोऽसौ गुणालङ्कारैर्भूष्यत इति गुणालङ्कारा ध्वनेर्भूषणभूताः। यदि प्रत्यक्षसिद्धः प्राधान्येनास्वाद्यमानो ध्वनिरेव पर्यायोक्ताद्यलङ्कारच्छद्मना प्रकाश्यते, तदा ध्वनिमार्गमेवायमवलम्बते। नामान्तरकरणे तु कियदिदं पाण्डित्यं नाम। केवलं पर्यायोक्तव्यपदेशान्तरकरणेन ध्वनिरेव वर्णितो भवति। यदि पर्यायोक्तालङ्कारता त्यज्यते, तदा ध्वनित्वमेवावशिष्यते।

किञ्च अलङ्कारवादिनां मतेऽभिधालक्षणातिरिक्तो नान्यः कश्चिच्छब्दव्यापारः। तेन च व्यञ्जनाद्योतितस्य ध्वनेरस्तित्वमेव नोपपद्यते, अभिधालक्षणाभ्यां तदप्रत्यायनात्। तथा चानाघ्रातसत्ताकस्य ध्वनेरलङ्कारान्तर्भाववचनमभित्तिचित्ररचनातुल्यम्। व्यञ्जनाऽनभ्युपगमे ध्वनिरेव न सिध्यति, अतस्तस्यासिद्धस्य ध्वनेरलङ्कारेष्वन्तर्भावः खपुष्पतुल्य एव। व्यञ्जनाभ्युपगमे च ध्वनेर्वाच्यवाचकभावभिन्नत्वादलङ्कारबाह्यता तावदागतैव। एवं व्यञ्जनाऽस्वीकारे ध्वनिर्न भवति, व्यञ्जनाभ्युपगमे च ध्वनेर्व्यङ्ग्यव्यञ्जकभावप्राणत्वाद् वाच्यवाचकधर्मेभ्यस्तस्य व्यतिरेकः सिद्ध एव।[2]

---

१. करमरकरः, दामोदर रघुनाथः, मम्मट-काव्यप्रकाशः, पृ० १००

२. (क) व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः॥
शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० १०७

(ख) त्रिवेदी, क० प्रा०, विद्याधर-एकावली, तरलटीका, पृ० २८

यच्चाप्युक्तं चारुत्वहेतुत्वाद् ध्वनिर्न गुणालङ्कारव्यतिरिक्तस्तदपि न युक्तम्। यत आत्मत्वेनावस्थितो ध्वनिः स्वतश्चारुः। न तु चारुत्वहेतुः। ध्वनेरलङ्कार्यत्वं प्रदर्शितमेव प्राक्। अतो ध्वनेरलङ्कारव्यतिरिक्तत्वे उपपन्ने व्याप्यस्य चारुताहेतुत्वस्यापि निवृत्तिरिति व्यापकविरुद्धोपलब्धेर्हेतोरसिद्धत्वादनुमानरचनाऽपि विदूषिता भवति।[1]

ध्वनेः काव्यात्मत्वात् प्रसिद्धप्रस्थानोल्लङ्घनभिया नासौ खलीकरणीयः, प्रत्युत सुकविकाव्योपनिषद्भूतो ध्वनिर्भामहादिभिरनुद्घाटितः, अतो वक्तव्य एव भवति। एवंविधस्याशेषलक्ष्यव्यापिनो गुणालङ्कारानन्तर्भाविनो ध्वनेः प्रसिद्धप्रस्थानातिरिक्तत्वेन व्याख्यानं न्याय्यमेव। इत्थमनुन्मीलितपूर्वं ध्वनिमुद्घाटयन् ध्वनिकारो नोपालभ्यः, प्रत्युत काव्यात्मभूतस्य ध्वनेरुद्भावनात् मौलिमालाभिरेवासावुपलालनीयः। अणीयसीभिरपि प्राचीनकाव्यलक्षणविधायिनामाचार्याणां मतिभिरनुन्मीलितमस्फुटस्फुरितमनर्घ्यं ध्वनिरत्नं नालङ्कारछद्मनाऽपह्नवनीयम्।

ध्वनावभ्युपगते तत्प्रत्यायको व्यञ्जनाव्यापारोऽपि स्वीकार्यस्तद्विना प्रतीयमानार्थस्याध्वननात्। अतोऽलङ्कारवादिनाऽपि व्यञ्जनोपास्यैव।

---

१. तेन यदुक्तं—चारुत्वहेतुत्वाद् गुणालङ्कारव्यतिरिक्तो न ध्वनिः इति, तत्र ध्वनेरात्मस्वरूपत्वाद्धेतुरसिद्ध इति दर्शितम्। नह्यात्मा चारुत्वहेतुर्देहस्येति भवति। अथाप्येवं स्यात्तथापि वाच्येऽनैकान्तिको हेतुः। नह्यलङ्कार्य एवालङ्कारः। गुणी एव गुणः।
शास्त्री, पट्टाभिरामः, आनन्दवर्धनः—ध्वन्यालोकः, लोचनटीका, पृ० ४६-४७

## चतुर्दशोऽध्यायः

# क्षेमेन्द्रस्य औचित्यप्रस्थानं व्यञ्जना च

शब्दार्थशरीरस्य काव्यस्यानुप्राणकेन केनचिदात्मना भाव्यमेवेति काव्य-जीवितान्वेषणे क्रियमाणे वामनाचार्येण रीतिः काव्यस्यात्मा, आनन्दवर्धना-चार्येण ध्वनिः, कुन्तकाचार्येण वक्रोक्तिः, क्षेमेन्द्राचार्येण चौचित्यं काव्यस्य व्यापि जीवितं प्रोक्तम्। प्रसिद्धे ध्वनिनाम्नि प्रस्थाने जाग्रति सति तत्परिपन्थिन औचित्यप्रस्थानस्य कियदौचित्यमित्यत्र विविच्यते।

स्थिरमविनश्वरं काव्यस्य जीवितमौचित्यमिति क्षेमेन्द्रस्य निर्णयः। गुणालङ्कारादयो यद्यपि काव्ये चारुत्वाधायकाः, परं तेषां चारुत्वमौचित्य-मूलकमेव। औचित्यव्यतिरिक्ता गुणालङ्कारादयः काव्ये उपनिबद्धा अपि न चारुत्वं किञ्चिदादधति। अतो गुणालङ्कारान् भूषयदौचित्यमेव काव्यजीवातु-भूतं वक्तव्यम्। उचितस्थानविनिवेशनादेव गुणानां गुणत्वमलङ्काराणाञ्चा-लङ्कारता। अनुचितस्थानविन्यस्ता गुणा अपि दोषा भवन्ति यथा माधुर्यादयो वीरे बीभत्से वा रसे। अलङ्कारा अपि नालङ्कुर्वन्ति काव्यं प्रत्युत तस्य श्रियं परिहापयन्त्येव यथा यमकादयः करुणे शृङ्गारे वा रसे।

अतो गुणालङ्कारानतिशयानं काव्यात्मस्थानीयमौचित्यमेव परमं तत्त्वम्। तेनैव गुणानां गुणता अलङ्काराणाञ्चालङ्कारता अन्वर्थिका भवति। न गुणा नाप्यलङ्काराः स्वतः काव्ये चारुत्वाधायकाः, प्रत्युतौचित्येनैव तेषा-मुत्कर्षापकर्षौ चिन्त्येते। न केवलमलङ्कारैरेव काव्यं जीवति। तथा सति यस्य कस्याप्यलङ्कारस्य यत्र कुत्रचित् विनिवेशे कृते काव्यत्वमनवद्यं स्यात्। परं नैतद्युक्तम्। यमकादयः अलङ्काराः शृङ्गारकरुणादौ रसे रसप्रतीतिं व्यवदधति। अतस्तेषां रसान्तरायभूतत्वादलङ्कारता दूरमपास्ता। यथा यतिशरीरे परिधापिताः कटककुण्डलादयोऽलङ्कारा अनौचित्यान्नालङ्कारं किञ्चित् कुर्वन्ति यतेरनुचितस्थानविनिवेशनात्, प्रत्युत हास्यावहा एव भवन्ति। परं लावण्यवतीनां रमणीनामवयवेषु विलसन्तः कामिनीनामपूर्वां

शोभां वर्धयन्ति। इत्थं स्थिते न स्वतः गुणालङ्कारादीनां काचिच्छोभा, न तेषां विनिवेशनमात्रेण चारुत्वं, परं तेषामुचितस्थाने औचित्येन योजनयैव काप्यपूर्वा विच्छित्तिः पदं निदधाति। उपमोत्प्रेक्षादीनामलङ्काराणां बाह्यशोभाधायकत्वात् कटककुण्डलादिलौकिकालङ्कारवदलङ्कारतैवान्यालङ्करणात्। माधुर्यौजःप्रसादादीनां गुणानामपि श्रुतसत्यशीलादिलौकिकगुणवद्गुणत्वमेव। एवं नालङ्कारा नापि गुणा आत्मस्थानीयाः। आत्मत्वं त्वौचित्यस्यैव गुणालङ्कारनियामकस्य उपपद्यते, येन विना काव्ये उपात्ता अपि गुणालङ्कारा निर्जीवा एव।[1]

एवं यद्यपि क्षेमेन्द्राचार्यः काव्यशास्त्रे औचित्यस्य प्रबलः प्रोद्घोषकस्तथापि नायं काव्यसिद्धान्तस्तस्मादेव प्रवृत्तः। नासावस्य सिद्धान्तस्य प्रवर्तक आद्य आचार्यः। भगवतो भरतमुनेः प्रारभ्य भामहदण्डिध्वनिकारादिभिराचार्यैः काव्ये औचित्यस्य माहात्म्यमभ्युपगतमेव।

तथाहि—मुनिना **भरतेन** नाटकादीनामभिनयसमये वेषभूषादीनामुचितं विनियोजनमावश्यकं प्रोक्तम्। नाट्ययोक्तृभिर्लोकानां रुचिमनुरुन्धानैर्देशकालानुकूला वेशभूषा विनियोजनीया भाषा च प्रयोक्तव्या।[2]

अनेनैतदायाति यन्नाटकाभिनयसाफल्यमौचित्यमुखप्रेक्षम्। अदेशजवेशभूषया लोकाननुकूलभाषया चानौचित्यवशाद्विरसतैव सहृदयहृदयोद्वेजिनी। उचितवेशभूषाविपरीतं नाट्यं लोकैर्नाभिनन्द्यते। अत एव नाट्ययोक्तृभिः सदा वेशभूषौचित्यनिर्वाहे सावहितैर्भाव्यम्। इत्थं भरतमुनिमते नाटकादिष्वौचित्यस्य परमं महत्त्वम्।

**भामहाचार्येणा**प्यौचित्यस्य महिमा अङ्गीकृतः। तन्मतेऽप्यौचित्यमेव गुणदोषनियामकं परमं तत्त्वम्। तद्यथा—लोके कृष्णं कज्जलं कार्ष्ण्यान्नाभिनन्द्यते। परं तदेवाञ्जनं रमणीलोचनप्रान्ते विलसदुचितस्थानविन्यस्तं सत् कामिनीनां परमां शोभां पुष्णाति। यतो हि लोचनप्रान्तविन्यस्तस्य कज्जलस्य

---

१. काव्यस्यालमलङ्कारैः किं मिथ्यागणितैर्गुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते॥
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्॥
काव्यमाला २, औचित्यविचारचर्चा, पृ० ११५

२. लोकसिद्धं भवेत् सिद्धं नाट्यं लोकस्वभावजम्।
तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते॥
नानाशीलाः प्रकृतयः शीलं नाट्ये प्रतिष्ठितम्।
तस्माल्लोकः प्रमाणं हि कर्तव्यं नाट्ययोक्तृभिः॥
नाट्यशास्त्रम् २६, ११३-११६

कार्ष्ण्यं सदैव प्रशस्यते कान्तासौन्दर्याधायकत्वात् ।[1] एवमेव यशेप्सुभिरुत्तमकविभिरपि काव्ये गुणालङ्कारा औचित्येनैव योजनीयाः, येन काव्यं सहृदयाह्लादकत्वमुपेयात् । अनेनैतत्स्पष्टम्भवति यन्भामहमतेऽपि गुणालङ्काराणामवद्यताऽनवद्यता वा न स्वाश्रया, परं सर्वथौचित्यपृष्ठावलम्बिनी । दोषा अपि उचितस्थानविनियोजनया दोषतां विहाय गुणतामुपगच्छन्ति, गुणाश्चापि अनुचितस्थानविनियोजनया दोषपदवीमवगाहन्ते ।[2] एवं भामहाचार्येणापि काव्ये औचित्यस्य परमं महत्त्वमङ्गीक्रियते ।

**दण्ड्याचार्येणापि** उपमायाः कुत्र दोषत्वं कुत्र चादोषत्वमिति विवेचयता औचित्यमेव तस्या अवद्यत्वानवद्यत्वे प्रमाणकं प्रोक्तम् । लिङ्गवचनयोर्भेदे सति किमुपमा ग्राह्या त्याज्या वेति सन्देहे यद्यास्वादयितुर्मनसि लिङ्गवचनभेदकृतः कश्चिदुद्वेगस्तदानौचित्यादुपमा दोषवती । यदि न कश्चिदुद्वेगस्तदा तस्या अनवद्यता ।[3] एवमुपमाविवेचनप्रसङ्गे दण्डिनौचित्यमेव उपमाया गुणदोषनियामकं परमं तत्त्वं स्वीकृतम् ।

**आनन्दवर्धनाचार्यस्तु** औचित्यस्य प्रबलः परिपोषकः । तथाहि—दुष्यन्तशकुन्तलादीनां रतिरौचित्येनाभिव्यक्ता सामाजिकानामौचित्यादेव परमां प्रीतिं पुष्णाति । परमसावेव रतिः पितृकल्पयोर्देवमिथुनयोर्विषये यदि काव्ये उपनिबध्यते, तदानौचित्याद् रसभङ्गकारणतामुपयान्ती परमं वैरस्यमेवावहति सहृदयहृदयेषु । अत औचित्यमेव रसादीनां परमोपनिषत् । अनुप्रासोपमादयोऽलङ्कारा अपि यदि व्यङ्ग्यार्थास्वादं न व्यवदधति, तदौचित्यात् ग्राह्या एव । परं तैरनुपाख्येयोऽसौ रसरूपः परमोऽर्थः यद्यास्वाद्यमानः सन् प्रतिबध्यते, तदाऽनौचित्यात्तेऽलङ्कारास्त्याज्या एव । इत्थमौचित्यरूपिणा निकषोपलेन गुणालङ्कारादीनामुचितानुचितविवेकः कृतो भवति ।[4]

---

१. किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥
भामहः, काव्यालङ्कारः, १, ३७

२. विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
उत्क्रम्य दोषगणनां गुणवीथिं विगाहते ॥
भामहः, काव्यालङ्कारः, ४, ५, ७

३. उपमा दूषणायालं यत्रोद्वेगो न धीमताम् ।
दण्डी, काव्यादर्शः २, ५१

४. अनौचित्याद् ऋते नान्यत् रसभंगस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥
आनन्दवर्धनः—ध्वन्यालोकः, पृ० ३३०

एवं स्थिते औचित्येन काव्यस्य साधुत्वविवेको न क्षेमेन्द्राचार्योपज्ञ एव। परन्तु परम्पराप्राप्तमौचित्यमेव क्षेमेन्द्रेणौचित्यविचारचर्चायां परां प्रौढिं प्रापितम्। अत्रेदं विभाव्यम्। औचित्यं पोषयद्भिरपि प्राचीनाचार्यप्रवरैरौचित्यं काव्यात्मत्वेन नोद्घोषितम्। क्षेमेन्द्राचार्येणैव पूर्वाचार्योत्सूत्रितौचित्यदिशमनुसृत्य तस्य काव्यात्मत्वं सिद्धान्तितम्। तन्नाम्ना च नवीनमिदं प्रस्थानं काव्यशास्त्रे व्यवस्थापितम्। एवमौचित्यं परां पुष्टिं प्राप्य प्रस्थानरूपेण सुव्यवस्थितमभवत्।

क्षेमेन्द्राचार्यमते औचितेः किं स्वरूपमिति संक्षेपेणाधः प्रस्तूयते। यथोक्तं क्षेमेन्द्राचार्येणौचित्यं लक्षयता—

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥**[1]

अयमाशयः। यत् यस्य सदृशं सच्छोभामातनोति, तदुचितम्। यथा मेखला नितम्बफलके, हारः कण्ठे, कङ्कणं करे इति नियमेन परिहिता लौकिका अलङ्कारा उचितस्थानविन्यस्ताः सन्तोऽलङ्कुर्वन्ति कमनीयं कलेवरं कामिनीनाम्। यदि मेखला कण्ठे, कटकं पादे, नूपुराणि च हस्तयोः परिधीयन्ते तदा किमलङ्करणं तैर्लावण्यवतीनां रमणीनां प्रत्युत विपरीतं परिधानमनुचितस्थानविन्यस्तं हास्यायैव लोकस्य। तद्वत् काव्येऽपि येऽनुप्रासोपमादयोऽलङ्काराः काव्यशोभाधायकाः तेऽपि यथोचितं काव्ये विनिवेशिताः प्रीणयन्ति सहृदयान् न त्वनुचितस्थानविनियोजिताः।[2] एवं यथा लोके तथा काव्येऽपि औचित्यस्य परमापेक्षा। तद्विना सर्वं काव्यमग्राह्यम्।

क्षेमेन्द्रेण सिद्धान्तितमौचित्यप्रस्थानं ध्वनिप्रस्थानवत् सर्वत्र व्याप्तम्। पदे, वाक्ये, प्रबन्धे, कारके, लिङ्गे, वचने, विशेषणे, उपसर्गनिपातादावपि च। तत्र **पदस्यौचित्यं यथा—**

**परिम्लानं पीनस्तनजघनसङ्गादुभयत-**
**स्तनोर्मध्यस्यान्तःपरिमलिनमप्राप्य हरितम्।**
**इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः**
**कृशाङ्ग्यास्सन्तापं वदति बिसिनीपत्रशयनम्**[3] **॥**

---

१. काव्यमाला १, औचित्यविचारचर्चा, पृ० ११६

२. कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-
मौचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणाः ॥
तत्रैव

३. काव्यमाला १, क्षेमेन्द्रविरचिता औचित्यविचारचर्चा, पृ० ११७

अतो रसस्य निरतिशयानन्दमयत्वाद् ध्वनिलक्षणे विशेषशब्दस्यातिशयपर्यायतया अपि ग्रहणमनुपपन्नम् । यर्हि न स्वरूपकृतं न वा रसकृतं काव्यवैशिष्ट्यं सम्भवति, तत एव तन्निबन्धनः काव्यस्य ध्वनिव्यपदेशोऽपि निर्निबन्धन एव । यदि काव्यवैशिष्ट्यमुपपद्येत, तदैव तस्य काव्यस्य ध्वनिरिति नवीनो व्यपदेशोऽन्वर्थकः स्यात् । परन्तु पूर्वोक्तदिशा 'काव्यविशेषः' इत्यत्र विशेषशब्दः न प्रभेदपर्यायः नाप्यतिशयपर्यायः सिध्यति । काव्यस्य न स्वरूपकृतं वैशिष्ट्यं न वा रसकृतम् । अत एव काव्यवैशिष्ट्यनिबन्धनस्य ध्वनिव्यपदेशस्यापि अजागलस्तनायमानत्वमेव ।[1] कथञ्चित् काव्यवैशिष्टयेऽभ्युपगतेऽपि तदवाच्यमेव, यतः 'उपसर्जनीकृतस्वार्थः' इत्यादिलक्षणविशेषकरणादेव तदाक्षिप्तं भवति । यथाश्वारूढः पुरुषोऽश्वारोहणाद् विशेषपुरुषोऽवगतो भवति । इत्थं लक्षणकरणेनैव काव्यस्य वैशिष्ट्यं स्वतः सिद्धम् । तथा च अवाच्यस्य विशेषपदस्योपादानादवाच्यवचनं नाम लक्षणदूषणम् ।

अत्रोच्यते । महिमभट्टाचार्यस्येदं तर्कचाकचिक्यं ध्वनिकारवचनमजानत एव जनान् ध्वनिसिद्धान्तपराङ्मुखान् करोति । वस्तुतस्तु गुणगर्वाध्मातात्मनो महिम्न इदं वचनं व्यक्तिवादिनोऽभिप्रायमनवबुध्यैव प्रवर्तते । तथा हि लक्ष्यं काव्यं द्विविधम्, मुख्यं गौणञ्च । अनादिकालव्यवहारात् काव्यस्येदं द्विप्रकारत्वं सिद्धम् । अतो ध्वनिकारिकायां विशेषपदप्रयोगेण मुख्यस्यैव काव्यस्य ध्वनित्वं सिद्धान्त्यते नामुख्यस्य । विशेषपदाभावेऽनादिकालव्यवहारसिद्धः काव्यस्य मुख्यगौणभेदोऽन्यथाकृतः स्यात् । ध्वनित्वं गुणीभूतव्यङ्ग्यकाव्ये न प्रसज्येतेति कृत्वा अर्थोपसर्जनकं ध्वनिकाव्यममुख्यकाव्यात् व्यवच्छेत्तुं कारिकायां विशेषपदमुपात्तम् । यदि ध्वनिर्गुणीभूतव्यङ्ग्यञ्च काव्यमेकं तत्त्वं स्यात्, तदा व्यावर्त्यस्याभावाद्विशेषपदोपादानं निर्निबन्धनं स्यात् । परं नैतद् युज्यते । अतएव विशेषपदप्रयोगोऽनवद्यः ।[2]

ध्वनेः काव्यवैशिष्ट्येऽभ्युपगते एव काव्यस्य त्रिविधो विभाग उपपन्नो भवति । यत्र रसस्य स्फुटत्वमङ्गीभूतत्वञ्च तत्र रसध्वनिः । यत्र रसस्या-

---

१. इत्थञ्च काव्यस्य विशिष्टताऽनुपपत्तावितरतल्लक्षणविधायिमतातिरिक्तं न किञ्चिदनेनाभिहितं स्यात्, अन्यत्र ध्वनिव्यपदेशमात्रात् ।
व्यक्तिविवेकः, पृ० १०२

२. इह प्रसिद्धं लक्ष्यमाश्रित्य लक्षणं प्रवर्तते । लक्ष्यं च द्विविधं काव्ये दृश्यते मुख्यं गौणञ्च । तत्र मुख्यं यत्र व्यङ्ग्यस्य प्राधान्यं, शिष्टं गुणीभूतव्यङ्ग्यादि गौणम् । उभयञ्च ग्राह्यमनादिकालव्यवहारसिद्धत्वात् ।
व्यक्तिविवेकव्याख्यानम्, पृ० १०३

प्राधान्यं वस्त्वलङ्कारव्यङ्ग्ययोश्च प्राधान्यं तत्र वस्त्वलङ्कारध्वनी, यत्र वाच्यार्थो रसवस्त्वलङ्काररूपव्यङ्ग्यत्रितयमतिशेते, तत्र वाच्यार्थप्राधान्येन व्यङ्ग्यार्थस्य च गुणीभावे गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्। यत्र च रस-वस्त्वलङ्कारव्यङ्ग्यासद्भावः केवलं वाच्यवाचकभावरचनावैचित्र्यं तत्राधमं काव्यम्।

एवमङ्गभूतरसगुणीभूतव्यङ्ग्यादिकाव्ये विशेषपदेन व्यावर्त्ये सति, ध्वनि-कारिकायां[1] लक्षणपदघटकत्वेन विशेषपदानुप्रवेशो युक्त एव। तथा च ध्वनिकाव्यस्य वैशिष्ट्ये उपपन्ने ध्वनिरित्यभिधानमपि न निर्निबन्धनं, प्रत्युता-परिहार्यमेव।

**(१०) वचनञ्च कथनकर्तुः**

ध्वनिकारिकायां 'सूरिभिः कथितः' इति कथनक्रियायाः सूरिभिरित्यनेन कर्तृनिर्देशो दुष्टः। यदि 'कथितः' इति क्रियायाः सामान्यः कर्ता गृह्यते, तदा कर्त्रा विना क्रियानुपपन्नेति नयेन क्रियायाः सामान्यः कर्ता स्वयमेवाक्षिप्यते। अतः सूरिभिरिति कर्तुरुपादानमवद्यम्। यदि 'कथितः' इत्यनेन विशेषकर्तु-र्विवक्षा, तदा विचारविशेषरूपव्यापारविशेषात् तत्कर्तुविशेषस्य सामर्थ्यलब्ध-त्वात् कर्तृविशेषस्य वचनं पुनरुक्ततामेवाविर्भावयतीत्यवाच्यवचनं दोषः। तेन च सूरिभिरिति पदं नोपादेयं लक्षणवाक्ये।

अत्रोच्यते। लक्षणवाक्ये सूरिभिरिति पदं ध्वनिसिद्धान्तस्य विद्वद्ग्राह्यत्व सूचयति। अयं ध्वनिर्न स्वकपोलकल्पितो यथाकथञ्चित् प्रवृत्तः, प्रत्युत स्फोट-वादिनां वैयाकरणानामनुमतोऽयं सिद्धान्तः। अत एव पूर्वाचार्यानुमोदितस्यास्य ध्वनेर्लक्षणकरणं सर्वथोचितम्। एवञ्च ध्वनिसिद्धान्तस्य विद्वद्ग्राह्यत्वसूचकं सूरिभिरिति पदं लक्षणवाक्ये उपादेयमेव।

इत्थं सर्वोपद्रवप्रशमनानन्तरं ध्वनिलक्षणं सुस्थितं भवति। तेन च परवर्तिनां ध्वनिपृष्ठावलम्बिनामाचार्याणां काव्यलक्षणमपि स्थिरतामायाति। अन्यथा उपजीव्यं ध्वनिलक्षणमेव यदि दुष्टं स्यात्तदा मूलोच्छेदेन सर्वो ध्वनिसिद्धान्तो विनाशमुपेयात्। अतोऽस्ति ध्वनिः स च व्यञ्जनावेद्य इत्यखिलं निर्मलम्।

अस्य विवेचनस्यायं निष्कर्षो यन्महिमभट्टानन्दवर्धनाचार्ययोः कुत्रचित् सहमतिः कुत्रचिच्च विमतिः। तदेवाधस्तात् समुल्लिख्यते।

## महिमभट्टानन्दवर्धनाचार्ययोः सहमतिः

१. काव्यस्यात्मा प्रतीयमानोऽर्थः।

२. स त्रिविधो वस्त्वलङ्काररसरूपः।

---

१. आनन्दवर्धनः, ध्वन्यालोकः १, १३

३. रसो न कदापि वाच्यः ।
४. कविशक्त्यर्पिता भावाः काव्ये चारुत्वाधायकाः ।

## तयोर्विमतिः

| महिमभट्टमते | आनन्दवर्धनमते |
|---|---|
| १. प्रतीयमानार्थस्य गम्यत्वम् | १. तस्य व्यङ्ग्यत्वम् |
| २. प्रतीयमानार्थप्रतिपादनपरो व्यापारोऽनुमितिः । | २. असौ व्यञ्जना । |
| ३. वाच्यप्रतीयमानार्थयोः क्रमेण प्रतीतिः । | ३. तयोः साहित्येन प्रकाशः । |
| ४. शब्दः सदा वाचक एव । | ४. शब्दस्य व्यञ्जकत्वमप्युपपन्नम् |
| ५. प्रतीयमानार्थस्य प्राधान्याप्राधान्येन काव्यस्योत्तममध्यमभेदकरण-मनुपपन्नम् । | ५. ध्वनिवादिमते प्रतीयमानार्थ-प्रधानगौणभावकृतः काव्य-स्योत्तममध्यमविभागः युक्ति-युक्तः । |
| ६. उपचारेणैव रसध्वनेर्व्यङ्ग्यत्वव्यप-देशः समीचीनः न तु मुख्यया वृत्त्या । | ६. मुख्ययैव वृत्त्या प्रतीयमाना-र्थस्य व्यक्तिवेद्यत्वमुपपन्नम् । |

अनेन पर्यालोचनेनैतत्स्पष्टं प्रतिपद्यते यन्महिमभट्टोऽतीव सूक्ष्मेक्षिकया स्वमतं प्रतिष्ठापयति । तस्यानुमितिवादोऽलङ्कारशास्त्रपाण्डित्यस्य चूडान्तं निदर्शनम् । तथापि ध्वनिकारानुयायिभिराचार्यैस्तस्य दर्शनमुपेक्षितम् । अस्या-मुपेक्षायामधोलिखिता हेतवः सम्भाव्यन्ते—

(१) महिमभट्टेन स्वयशःप्रख्यापनार्थं ध्वनिसिद्धान्तो ध्वंसितः । अतस्तेन प्राधान्येन ध्वनिसिद्धान्ते दोषा एवान्वेषिताः ।

(२) ध्वनिसिद्धान्तोऽभिनवगुप्तपादाचार्येण प्रौढं लोचनभाष्यं प्रणीय सुस्था-पितः, मम्मटादिभिः परवर्तिभिराचार्यैश्चायं युक्ताभिर्युक्तिभिः परां पुष्टिं प्रापितः । परं व्यक्तिविवेकग्रन्थस्य टीकाकर्त्रा रुय्यकाचार्येण पदे पदे महिमभट्टस्य दर्शनं कटाक्षितम् । अतो महिमभट्टदर्शनं परवर्तिभिराल-ङ्कारिकैर्न समादृतम् ।

(३) सहृदयसंवेद्यः प्रतीयमानोऽर्थो हृदयसंवादवशादास्वाद्यते, न तु शुष्क-तर्कोपक्रमकर्कशधिया । परमाह्लादजनकं काव्यं हृदयादेवाविर्भवति, हृदयमेव स्पृशति हृदयेनैव चास्वाद्यते ।

(४) अविनाभावमूलं महिमभट्टप्रपञ्चितं प्रतीयमानार्थस्यानुमेयत्वं कार्य-कारणभावादिसम्बन्धमपेक्ष्यैव प्रवर्तते, परं रतिहासभावाद्युपस्कृतं काव्यं दर्शनाच्छ्रवणादेव विदग्धानां मनस्स्वानन्दसन्तानमातनोति । न तत्रानुमेयार्थावगतिहेतुका शुष्कतर्ककर्कशधीग्राह्या लिंगलिंगिभावपर्या-लोचनापि ।

(५) अनुमेयार्थप्रतीतिर्नियतेनैव हेतुना सम्पद्यते । अतोऽनुमेयार्थः सदा नियत एव । परं व्यङ्ग्यार्थस्य प्रतीतिर्न नियता सदा नापि च तद्द्योतनपरा विभावानुभावादयो धूमाद्वह्न्यनुमितिवन्नियताः । परं वक्तृबोद्धव्यादीना-मुपाधीनामानन्त्यान्निरवधिरनुरणनात्मकोऽनियतः अर्थः काव्यतत्त्वविद्भिः सहृदयैरास्वाद्यते ।

अतएव ध्वनिसिद्धान्तप्रखरभास्करालोके प्रकाण्डपाण्डित्येन तार्किको-पज्ञया प्रतिभया उपनिबद्धोऽपि महिमभट्टाचार्यस्य अनुमितिवादः खद्योतायितः ।

## द्वादशोऽध्यायः

# व्यञ्जनाविषये जगदीशतर्कालङ्कारमतविमर्शः

तार्किकप्रवरेण जगदीशतर्कालङ्कारेण स्वकीयायां शब्दशक्तिप्रकाशिकायां व्यञ्जनावृत्तिर्निराकृता लक्षणया मानसबोधेन वा व्यङ्ग्यार्थप्रतीतिः सम्प्रतिपन्नेति तस्य मतमत्रोपस्थाप्य यथामति विविच्यते ।

'मुखं विकसितस्मितमि'[1]त्यादौ कुसुमतुल्यसौरभत्वाद्यर्थस्य प्रतीतिर्व्यञ्जनिकीति ध्वनिवादिभिरास्थीयते । प्रस्तुते विकासस्य पुष्पधर्मस्य मुखेऽनुपपन्नत्वाल्लक्षणया विकासेनासंकुचितत्वसम्बन्धेन सच्छवित्वविस्तारित्वाद्यर्थो लक्ष्यते । तदनन्तरं कुसुमतुल्यसौरभत्वादिरूपो लक्षणायाः प्रयोजको योऽर्थः प्रतीतिपदवीमवतरति, नासौ लक्षणाबोध्यः, तस्याः सच्छवित्वविस्तारित्वरूपिणं लक्ष्यार्थं प्रतिपाद्य विश्रामात्, मुख्यार्थबाधाद्यभावे विरतायाश्च तस्याः पुनरनुत्थानात् । अभिधापि तमर्थं प्रतिपादयितुं नालम्, विकसितादिपदस्य सौरभाद्यर्थेऽसङ्केतितत्वात् । अयं सौरभाद्यर्थः शब्दादेव प्रतिपद्यते, अतस्तदर्थप्रत्यायको व्यापारः शब्दस्यैव सम्भवति । ध्वनिवादिनां मतेऽसौ व्यापारोऽभिधालक्षणादिव्यापारातिरिक्तो व्यञ्जनोपाह्व एव ।

परं जगदीशेन सौरभाद्यर्थप्रत्यायनार्थं लक्षणैवास्थीयते, व्यञ्जना च सर्वथा विप्रतिपद्यते । तन्मते लक्षणाबीजत्वेनाभ्युपेतमन्वयानुपपत्तिज्ञानं न लक्षणाजनकं, शक्यसम्बन्धात्मिकाया लक्षणाया अन्वयानुपपत्तिज्ञानाजन्यत्वात् । नाप्यन्वयानुपपत्तिज्ञानं लक्षणाज्ञानजनकं, लाक्षणिकात् गङ्गापदात् 'गङ्गापदं

---

१. मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ।।
—मम्मटः, काव्यप्रकाशः, २,१३

**तीरलाक्षणिकं तीरार्थकतया प्रामाणिकप्रयुक्तगङ्गापदत्वात्**' इत्यनुमानेनापि तटादिलक्ष्यार्थप्रतीतेः। अत्रायमाशयः। प्रामाणिकैरन्वयानुपपत्तिज्ञानं लक्षणाया बीजत्वेनाभ्युपेतम्। एतदन्वयानुपपत्तिज्ञानं लक्षणाबीजत्वेन जगदीशमतेन अयुक्तम्। अन्वयानुपपत्त्यभावे प्रकरणादितोऽपि तात्पर्यानुपपत्त्यनुसन्धानबलाल्लक्ष्यार्थावगतेः। तथाहि—'**यष्टीः प्रवेशय**' '**काकेभ्यो दधि रक्ष्यतामि**'त्यादौ मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि यष्टिधरत्वदध्युपघातकत्वादिलक्ष्यार्थस्यावगतिर्भवति।[1] अतो यथा प्रस्तुतेऽन्वयानुपपत्त्यनुसन्धानं विनापि लक्षणा तथा 'मुखं विकसितस्मितमि'त्यादौ कुसुमतुल्यसौरभत्वाद्यर्थप्रतीतावपि लक्षणा। लक्षणामूलव्यञ्जनास्थले लक्षणयैव तादृशो बोध इत्यतो ध्वनिवादिनां व्यञ्जना निर्निबन्धनेति जगदीशतर्कालङ्कारस्याशयः।

'**भद्रात्मनो दुरधिरोहतनो**'[2]रित्यादौ ध्वनिवादिभिरप्राकरणिकगजरूपार्थप्रतिपत्तये यद् व्यञ्जनाऽऽश्रीयते, तदपि जगदीशेन निरस्तम्। तन्मते '**अयं गौरवितो महान्**', '**वयस्था नागरासङ्गादङ्गानां हन्ति वेदनाम्**' इत्यादौ अयं गौरवितः=पूज्यः महानिति प्राकरणिकार्थप्रतीत्यनन्तरं 'अयं गौः=जडः, अवितः=मेषतः, महान्=पीनः इत्यप्राकरणिकस्य परोपहासरूपिणोऽर्थस्य च या प्रतीतिः साभिधयैव सम्पाद्या न तु व्यञ्जनया। ध्वनिवादिनां मते त्वत्र अभिधायाः 'अयं पूज्यो महानि'ति प्राकरणिकेऽर्थे नियंत्रणात्, अप्राकरणिकस्य, अयं गौः अवितः=मेषतः महान्=स्थूलश्चेत्यर्थस्य प्रतीतिर्व्यञ्जनया भवति। परं जगदीशमतेन एवंविधेषु स्थलेषु तात्पर्याभावबुद्धेरप्राकरणिकार्थप्रतीतिं प्रति प्रतिबन्धकत्वेनावस्थानाद् द्वितीयार्थस्याप्राकरणिकस्य

---

१. तत्रान्वयानुपपत्तिज्ञानस्य लक्षणाबीजत्वं हि न तज्जनकत्वं शक्यसम्बन्धात्मिकाया लक्षणायास्तदजन्यत्वात्, नापि तज्ज्ञापकत्वं मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि प्रमाणान्तरेण तद्ग्रहसम्भवात्। अत एव न लक्ष्यार्थतात्पर्यग्राहकत्वमपि प्रकरणादितोऽपि लक्ष्यार्थपरत्वग्रहात्। न च लक्षणाजन्यान्वयबोधं प्रति तस्याः कारणत्वमेव लक्षणाबीजत्वमिति साम्प्रतम्, यष्टीः प्रवेशयेत्यादौ व्यभिचारात्, तादृशहेतुतायां प्रमाणाभावाच्च।

सम्पादकः, शास्त्री पण्डितढुण्ढिराजः, श्री जगदीशतर्कालंकारकृता—
—शब्दशक्तिप्रकाशिका, पृ० १४६

२. भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥
मम्मटः, काव्यप्रकाशः, २,१९

प्रतीतिरेव नोद्भवति ।[1] अत्रायमाशयो जगदीशस्य। नानार्थस्थलेषु तात्पर्य-भाववुद्धिरेव व्यञ्जनाया उल्लासिका । अतः शक्यार्थातिरिक्तार्थे वक्तुस्तात्पर्या-भावान्निस्तात्पर्यकत्वधीर्व्यञ्जनायाः प्रतिबन्धिका। तथा चान्यार्थतात्पर्य-ज्ञानासत्त्वेऽपि यद्यन्यार्थप्रतीतिरास्थीयते, तदा शक्तिज्ञानादिसाचिव्येनासौ सेत्स्यतीति तदवगमयितुं व्यञ्जना नोपास्या ।

किञ्च नानार्थस्थले द्वितीयार्थस्याप्राकरणिकस्य भवन्ती प्रतीतिर्न खलु शाब्द्येव किन्तु मानस्यपि। रसादिबोधेऽपि व्यञ्जना नाङ्गीकार्या मानसस्यापि बोधस्य चमत्कारजनकत्वसम्भवात् । तथा च न केवलं लक्षणामूलध्वनावभिधा-मूलध्वनावपि तु रसादिध्वनावपि मानसबोधस्य हेतुत्वेनावस्थानात् सर्वथा व्यञ्जनोत्पाटिता भवति ।[2]

वस्तुतस्तु जगदीशमते नानार्थकस्थले यद्यप्राकरणिकार्थोल्लासः, तर्ह्यसौ न व्यञ्जनाबोध्योऽपितु मानसबोधजन्य एवावगन्तव्यः। एवमेव शृङ्गारादि-रसस्यापि मानसबोधविषयत्वम् । किञ्च नानार्थकस्थलेषु प्रतीतिपथमवती-र्णोऽर्थो यदि शब्दप्रमाणवेद्यः स्यात्तदैव तदधीनायाः व्यञ्जनायाः सिद्धिः । यतो हि द्वितीयाप्राकरणिकस्य अर्थस्य प्रतीतिरेव प्रथमं न समुदेति, भवति च यदि प्रतीतिस्तदासौ न शाब्दी प्रत्युत मानसी, अत एवाज्ञाताया व्यञ्जनायाः सद्भावोऽप्यप्रामाणिक एव । अत्र व्यञ्जनायां प्रत्यक्षं तावन्न प्रमाणं, तस्या इन्द्रियायोग्यत्वात् । नाप्यनुमानं लिङ्गाभावात् शाब्दबोधरूपलिङ्गस्याप्य-सिद्धत्वाच्च । नाप्युपमानं तस्य शक्तिमात्रग्राहकत्वात् । नापि शब्दः शक्ति-ग्राहकाभावात् । एवञ्च तस्या असिद्धौ तया सममन्वयव्यतिरेकयोर्ग्रहा-सम्भवेन तस्याः स्वरूपसत्याः शाब्दहेतुत्वस्याप्यसम्भवः । एवं मानसबोधेन

---

१. वस्तुतस्तु शक्त्याद्युपस्थितानामनेकविधानां पदार्थानामन्वयमतेरनन्तरं यद्यन्यविधानामन्वयबोधः स्यात्, स्यादपि तदनुरोधेन व्यञ्जनाविचारः। न चैवं तत्तदर्थकशब्दसामान्य प्रत्येव तत्तदर्थनिस्तात्पर्यकत्वधियः प्रति-बन्धकत्वात् ।

सम्पादकः शास्त्री पण्डितढुण्ढिराजः, जगदीशतर्कालंकारकृता शब्द-शक्तिप्रकाशिका, पृ० १४७ ।

२. तत्तदर्थानां यथाकथञ्चिदुपनयवशेन मनसैव विशिष्टधीसम्भवात् मानो-रथिकसुखप्रभेदपर्यवसितं चमत्कारं प्रत्येव शाब्दस्येव मानसस्यापि बोधस्य विशिष्य हेतुतायाः सुवचत्वात्, अतिरिक्तस्य व्यञ्जनाख्यपदार्थान्त-रस्य स्वरूपसत्तया अन्वयबुद्धौ तद्धेतुत्वस्य च प्रमाणविरहेणासत्वाच्च ।
—तत्रैव, पृ० १४७ ।

व्यङ्ग्यार्थावगतौ तद्द्योतनार्थं व्यञ्जनाश्रयणमहेतुकमेवेति जगदीशस्याशयः ।

अत्र प्रतिसमाधीयते । **मुखं विकसितस्मितमित्यादौ** यज्जगदीशेन सौरभत्वाद्यर्थस्य वैयञ्जनिकी प्रतीतिः प्रत्याख्याता न तद् युक्तियुक्तम् । अत्र लक्षणाया विषयः सच्छवित्वविस्तारित्वरूपो लाक्षणिकोऽर्थ एव नातिरिक्तः कश्चिदर्थः । लक्षणाया प्रयोजनायितस्य सौरभादिरूपिणोऽर्थस्य लक्षणया प्रतीतौ मूलक्षयकारिण्यनवस्थाप्रसङ्गः । अन्वयानुपपत्तिज्ञानं विना प्रकरणाद्यपेक्षयापि लक्ष्यार्थप्रतीतिर्भवतीति न विप्रतिपद्यामहे । परं लक्षणा युगपत् स्मितसौरभरूपिणावर्थौ प्रतिपादयितुं नालम् । अतः सौरभाद्यर्थे व्यङ्ग्ये शब्दैकगम्ये सति तद्बोधार्थं व्यञ्जना शब्दस्यैव व्यापारोऽभ्युपेयः ।[1]

यच्च जगदीशेन तात्पर्याभावबुद्धेः प्रतिबन्धकत्वादपरार्थप्रतीतिः निराक्रियते तदपि न शोभनम् । 'अयं गौरवितो महान्' इत्यादौ नानार्थकशब्दप्रयोग एव प्रकटयति यदत्र प्रयोक्तुस्तात्पर्यमपरस्मिन्नर्थे पर्यवसितम् । अन्यथाऽनेकार्थकशब्दोपनिबन्धः निर्निबन्धन एव स्यात् । अनेकार्थकशब्दप्रयोगस्थलेषु मुख्यार्थातिरिक्तार्थप्रत्यायने वक्तुस्तात्पर्यमस्त्येव । अत एवापरार्थः काव्यतत्त्वज्ञैरास्वाद्यते । अपरार्थस्य प्रतीतिरेव न भवतीति जगदीशवचनं सर्वथा विचारणीयं तत्प्रतीतौ सहृदयहृदयसाक्षिकत्वात् । इत्थं सहृदयहृदयानुभवसिद्धस्यार्थस्य निस्तात्पर्यकत्वादपलापो नोचितः ।

---

१. (क) अत्रेदं वक्तव्यम् । किं व्यञ्जनैव नास्तीति ब्रूषे, उत तस्याः पदवृत्तत्वं नास्तीति । नाद्यः । 'अनया कटाक्षेणाभिलाषो व्यञ्जितः' इति सर्वजनप्रसिद्धेस्तथैवानुभवाच्च चेष्टावृत्तिव्यञ्जनाया अपलपितुमशक्यत्वात् । नान्त्यः । 'गतोऽस्तमर्क' इत्यादिवाक्याद् गुरुं प्रति सन्ध्यावन्दनतात्पर्येण प्रयुक्तात् प्रतिवेश्यादीनामभिसरणोपक्रमादिबोधस्य वक्तृतात्पर्याभावेन लक्षणयोपपादयितुमशक्यत्वात् ।

—सम्पादकः, भारद्वाजः पण्डितो गंगानाथ शास्त्री, मौनिश्रीकृष्णभट्टविरचिता वृत्तिदीपिका, पृ० १६

(ख) इदं पदमेतदर्थस्य न वाचकम्, नापि लक्षकं नापि स्मारकम् । अपितु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेणाप्यतिरिक्ततत्सिद्धेश्च ।
—सम्पादकः फडके अनन्त शास्त्री, श्री नागेशभट्टविरचिता वैयाकरणसिद्धान्तलघुमञ्जूषा, श्रीमद्बालंभट्टविरचिता कला टीका, पृ० १५६

यच्च जगदीशेनापरार्थप्रतीतेः शब्दव्यापारसमर्प्यत्वं निरस्य तस्या मानसबोधः सिद्धान्तितस्तदप्ययुक्तमेव। यतो हि यथा व्यङ्ग्यार्थस्य मानसबोधाद् व्यञ्जनोच्छेदस्तथैव वाच्यार्थस्य लक्ष्यार्थस्यापि च मानसबोधे शक्तिलक्षणयोरप्यपलापः प्रसज्येत। किञ्चेन्द्रियजन्यं प्रत्यक्षं लिङ्गपरामर्शजन्यमनुमानमपि च व्यङ्ग्यार्थवन्मानसबोधविषयौ स्याताम्। तथा च प्रमाणान्तरोच्छेदप्रसङ्गः स्यात्। यदि ज्ञानमात्रं प्रति मनः साधारणकरणत्वेनाङ्गीक्रियते, तर्हि न वक्तव्यं किञ्चित्। व्यङ्ग्यार्थबोधेऽपि मनसः कारणता ध्वनिवादिभिर्नापह्नूयते। परं यथा शक्यार्थलक्ष्यार्थप्रतीतौ मनसः कारणतायामपि अभिधालक्षणाख्यौ शब्दस्य व्यापारौ स्वीक्रियेते, तथा व्यङ्ग्यार्थस्य मानसबोधेऽपि व्यञ्जनाव्यापार ऊरीकार्य एव। अन्यथा प्रमाणान्तरमपि नाङ्गीकार्यम्, सर्वस्य मानसबोधविषयत्वात्। वस्तुतस्तु यथा अभिधालक्षणे शब्दस्य व्यापारत्वेन प्रामाणिकैः स्वीकृते, तथैव 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन व्यङ्ग्यार्थप्रत्यायनेऽभिधालक्षणयोरसामर्थ्ये शब्दादेवानुभूयमानोऽर्थः शब्दप्रमाणस्यैव विषयः। इत्थं प्रयोजनाद्यर्थस्य प्रतीतिः शाब्द्येव न मानसी। तथा च व्यञ्जनायाः शब्दव्यापारत्वं सिद्धम्।

## त्रयोदशोऽध्यायः

# व्यञ्जनाविषये अलङ्कारप्राधान्यवादिमतविचारः

ध्वन्यालोकस्याद्य उद्योते, आनन्दवर्धनाचार्येण ध्वन्यभाववादिनां विकल्पाः सम्भाव्य दूषिताः। इमेऽभाववादिनः काव्ये सन्तमपि ध्वनिं विप्रतिपद्यन्ते, वाच्यवाचकधर्मेषु समासोक्त्याद्यलङ्कारेषु तमन्तर्भाव्य ध्वनेः प्रत्याख्यानमारभन्ते। तेषां मते शब्दार्थयोर्यत्काव्यत्वं तत्तयोश्चारुत्वेनैव। शास्त्रेतिहासपुराणादिषु दृष्टौ अविशिष्टौ शब्दार्थौ चारुत्वादर्शनान्न कदापि काव्यत्वेन व्यपदिश्येते। अतः शब्दार्थयोः काव्यत्वं तयोश्चारुत्वेनैव।

चारुत्वञ्च शब्दस्य अर्थस्य च द्विविधम्। (१) स्वरूपमात्रनिष्ठम् (२) संघटनाश्रितं च।

तत्र शब्दालङ्कारैरनुप्रासयमकादिभिः शब्दस्य स्वरूपकृतं चारुत्वम्, अर्थस्य चार्थालङ्कारैरुपमोत्प्रेक्षादिभिः। शब्दगुणेभ्यः शब्दस्य संघटनाश्रितं चारुत्वम्, अर्थस्य चार्थगुणेभ्यः। एवमलङ्कारा गुणाश्च शब्दार्थयोश्चारुत्वमादधते। तद्वशाच्च विशिष्टौ चारू शब्दार्थौ काव्यव्यपदेशभाजौ भवतः। अतएव शास्त्रेतिहासादौ शब्दार्थयोः काव्यत्वं विप्रतिषिद्धम्, चारुत्वाधायकानामलङ्काराणां गुणानाञ्चाभावात्। तथा सति धर्मैरलङ्कारैर्गुणैश्च धर्मिणोः शब्दार्थयोश्चारुत्वाद्विशिष्टयोरेव शब्दार्थयोः काव्यत्वं सर्वजनस्वीकृतम्।[1] नह्यलङ्कारगुणरूपधर्मव्यतिरिक्तयोर्धर्मिणोः शब्दार्थयोः क्वचिदपि काव्यत्वव्यपदेशः सम्भवति। अत एव मनोरथनाम्ना कविना शब्दार्थयोश्चारुत्वाधायकेभ्यः शब्दार्थ-

---

१. इह विशिष्टौ शब्दार्थौ काव्यम्।

टी० गणपतिशास्त्री, रुय्यक—अलङ्कारसर्वस्वम्, समुद्रबन्धटीका, पृ० ४

गुणालङ्कारेभ्यो ध्वनेर्व्यतिरेकेणावस्थानात्तस्य अभावः प्रोद्घुष्यते।[1] तथा सति शब्दार्थगुणालङ्कारैर्विशिष्टयोः शब्दार्थयोरेव काव्यत्वम्, तद्व्यतिरिक्तयोस्तयोः काव्यत्वमनुपपन्नमिति ध्वनिविध्वंसिनामलङ्कारप्राधान्यवादिनां मतम्।

(१) अलङ्कारप्राधान्यवादिनां ध्वनिविरोधे प्रथमः कल्पः

ध्वनिविरोधिनः स्वमतमित्थमुपस्थापयन्ति। ध्वनिवादिभिरपि शब्दार्थबाह्यं काव्यं नोररीक्रियते। नहि ध्वनिः शब्दार्थव्यतिरिक्तः क्वचिद् दृश्यते। अतः काव्यव्यवहारप्रयोजको यदि ध्वनिस्तर्हि नासौ शब्दार्थव्यतिरेकी। परं न केवलौ अविशिष्टौ शब्दार्थौ ध्वनिः। अतः शब्दार्थयोर्यतश्चारुत्वमसावेव ध्वनिर्भविष्यति। चारुत्वञ्च शब्दार्थयोर्गुणालङ्कारेभ्य एव नान्यत इति पुरा प्रोक्तमेव। अतश्चारुत्वहेतुर्यदि ध्वनिस्तर्हि गुणालङ्कारव्यतिरिक्तोऽसौ प्रतिष्ठां न लभते। यदि गुणालङ्कारातिरिक्तोऽन्यः कश्चिच्छब्दार्थयोर्धर्मिणोश्चारुत्वाधायकः काव्यधर्म उपपद्येत, तदा ध्वनेरपि सद्भावः स्वीकृतः स्यात्। यर्हि चारुत्वं न गुणालङ्कारव्यतिरिक्तं दृष्टं, तर्हि गुणालङ्कारभिन्नो ध्वनिः खपुष्पतुल्य एव।[2]

(२) अलङ्कारप्राधान्यवादिनां ध्वनिविरोधे द्वितीयः कल्पः

ननु माभूद्ध्वनिश्चारुत्वहेतुः, परं गुणालङ्कारव्यतिरिक्तोऽप्यसावनपह्नवनीय इति चेन्न, सत्तामात्रेणैव ध्वनेरकिञ्चित्करत्वात्। काव्यत्वेनैवासौ ध्वनिरिष्टः। यदि लब्धसत्ताको ध्वनिर्न काव्यस्य किञ्चिच्चारुत्वमातनोति, तर्हि सताप्यनेन ध्वनिनाऽनुपयोगित्वान्न कोऽपि लाभः। नहि नृत्यगीतवाद्यादिभिर्लब्धसत्ताकैरपि काव्यस्य किञ्चिदुपक्रियते। यद्यस्ति ध्वनिस्तर्हि काव्योपकारकत्वेनैवासावुपादेयः। गुणालङ्कारोपस्कृतयोः

---

१. यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति
व्युत्पन्नै रचितञ्च यन्न वचनैर्वक्रोक्तिशून्यञ्च यत्।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः॥
शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० २६

२. अथ लब्धसत्ताक एव ध्वनिस्तथापि यदि न करोति काव्यस्य कामनीयकम्, तर्हि किमनेन अजागलस्तनायमानेन।
त्रिवेदी, क० प्रा०, विद्याधर-एकावलिः, पृ० २५

शब्दार्थयोः काव्यत्वं परम्परया सिद्धम्, न तु तद्व्यतिरिक्तयोः। अतो गुणालङ्कारव्यतिरिक्तोऽपि ध्वनिः काव्यशोभाहेतुत्वाभावादनुपादेयः।

इत्थं प्रसिद्धप्रस्थानपरम्पराभङ्गभीता गड्डरिकाप्रवाहवद्गतानुगतिकतया शब्दार्थयोः सगुणसालङ्कारत्व एव काव्यत्वं मन्यमाना अलङ्कारप्राधान्यवादिनो ध्वनिं नवीनोऽयमित्यस्वीकुर्वाणास्तस्याभावमुद्घोषयन्ति।[1]

**(३) अलङ्कारप्राधान्यवादिनां ध्वनिविरोधे तृतीयः कल्पः**

तृतीयेऽभाववादिनो ध्वनिमलङ्कारशरीरेऽन्तर्भावयन्ति। तेषामयमाशयः। यदि काव्यचारुत्वाधायकत्वेन काव्यस्यैवासौ कश्चिद् ध्वनिस्तथापि गुणालङ्कारेष्वेव तदन्तर्भावान्नासौ पृथग्गणनीयः। भामहादिभिरालङ्कारिकैः समासोक्तिपर्यायोक्ताप्रस्तुतप्रशंसादयोऽनेकेऽलङ्काराः प्रोक्ताः। यत्र वाच्योऽर्थः स्वसिद्धये परार्थमाक्षिपति, परार्थं वा स्वात्मानमर्पयति, तत्र वाच्यवाचकधर्मेष्वलङ्कारेषु ध्वनेरन्तर्भावः शक्यसम्पादः।[2]

ननु चिरन्तनैरालङ्कारिकैर्बहवोऽलङ्काराः प्रोक्ताः। परन्तु ध्वनिरित्यभिधानेन न कश्चिदलङ्कारस्तैर्व्यपदिष्टः। अत एव भट्टोद्भटादिभिरलङ्कारतन्त्रप्रजापतिभिरनुद्घाटितस्यालङ्काररूपस्यापि ध्वनेरन्यालङ्कारवैलक्षण्यात् पृथग्ध्वनिरिति नाम्ना तस्य व्याख्यानं युज्यत एव। ध्वनौ यादृशी विच्छित्तिस्तादृशी नान्येषु समासोक्त्याद्यलङ्कारेषु। अतोऽलङ्कारकोटिमाटीकमानस्यापि ध्वनेः सजातीयालङ्कारेभ्यश्चारुत्वातिशयत्वात्तस्य पृथग्गणनमुपपद्यत एवेति चेन्न, विच्छित्तिविशेषवशादन्येषामपि सम्भाव्यमानानामलङ्काराणामुद्भावनात्तेषामपि पृथक् प्रस्थानेन नामकरणप्रसङ्गात्। अयमाशयः। भरतमुनिप्रभृतिभिर्यमकोपमादयोऽङ्गुलिगणनीया एवालङ्काराः प्रोक्ताः। परं परवर्तिभिर्भामहभट्टोद्भटादिभिर्भरतमुन्युन्मीलितदिशमनुसृत्य पर्यायोक्तादयोऽन्ये बहवोऽलङ्कारा उद्भाविताः। तदनुसृत्यान्यैरप्यालङ्कारिकैर्भूयांसोऽलङ्काराः प्रपञ्चिताः। परं तद्वशात्तेषां प्रसिद्धप्रस्थानवैलक्षण्यं न सम्भवति।

---

१. अन्ये ब्रूयुः—नास्त्येव ध्वनिः। प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति।

—शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० २१-२२।

२. पुनरपरे तस्याभावमन्यथा कथयेयुः—न सम्भवत्येव ध्वनिर्नामापूर्वः कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात्। तत्रैव, पृ० २४

यथा पाणिनेः **कर्मण्यण्** (३।२।१) इति सूत्रेण कुम्भं करोतीति कुम्भकारपदनिष्पत्तिस्तथैव तन्नयमनुसृत्य नगरकारमालाकारादयश्शब्दाः कल्प्यन्ते। तद्वत् पूर्वाचार्योत्सूत्रितमार्गमवलम्ब्य अन्येषामपि भूयसामलङ्काराणामुत्प्रेक्षणं सम्भवम्। नहि वाच्यवाचकयोर्विच्छित्तिरेतावन्मात्रालङ्कारपरिमितैव। विच्छित्तीनामानन्त्यादलङ्काराणामप्यानन्त्यं सिद्धम्। अतएवालङ्कारान्तरनाम्ना पूर्वाचार्यानुन्मीलितस्य ध्वनेरुद्घाटनान्न किञ्चित् कृतं भवति, येनाकाशकुसुमप्रायं किञ्चिदङ्गीकृत्य स्ववासनासम्भावितप्रमोदभरनिर्भरैरलीकविदग्धतामुकुलितलोचनैर्ध्वनिवादिभिरुन्मत्तैरिव नृत्यते।[1] नहि ध्वनिनाम्ना पूर्वमव्याकृतस्य कस्यचिदलङ्कारान्तरस्योद्भावनाद् ध्वनेः प्रसिद्धप्रस्थानातिरेकः सम्भवः। सर्वथालङ्काराणामेवान्यतमः प्रकारो ध्वनिरिति पर्यवसितं भवति। एवं ध्वनिः समासोक्त्यादिष्वलङ्कारेष्वन्तर्भवेत्, अथवासौ प्रसिद्धालङ्कारेभ्यो व्यतिरिक्तेनाश्रुतपूर्वेण ध्वनिरित्यभिधानेन व्याख्यातो भवेत्, सर्वथा ध्वनेरलङ्कारव्यतिरेकेणादस्थानाभावात् तस्य चिरन्तनालङ्कारकारव्यवस्थापितप्रसिद्धप्रस्थानात् पृथगुपदेशो न युक्तः।[2]

किञ्चानुमानमपि ध्वनेर्गुणालङ्कारान्तर्गततामेव द्रढयति। तद्यथा—

**विवादाध्यासितो ध्वनिर्न गुणालङ्कारव्यतिरिक्तो भवितुमर्हति, चारुत्वहेतुत्वात्। यदेभ्यो व्यतिरिच्यते, न तच्चारुताहेतुः। अविमृष्टविधेयांशादिदोषवत्। चारुताहेतुश्च ध्वनिः। ततो न व्यतिरिच्यते तेभ्य इति।**[3]

एवं शब्दार्थगुणालङ्काराणामेव शब्दार्थात्मनः काव्यस्य शोभाकरणात् गुणालङ्कारव्यतिरिक्तो न कश्चिद् ध्वनिः। गुणालङ्कारव्यतिरिक्तोऽपि

---

१. गांधी, लालचन्द्र-भगवानदासः, नरेन्द्रप्रभसूरि-अलङ्कारमहोदधिः, पृ० ११५

२. तस्मादभिधाव्यापारवैचित्र्यानन्त्याच्चारुत्वविधायिनः सम्भवतोऽपि सामान्यलक्षणेनैव परिगृहीतत्वाच्चिरन्तनैः पृथक्त्वेनादर्शितस्य गुणालङ्कारयोरन्यतरस्य कस्यचिद् ध्वनिरिति पारिभाषिकं नामान्तरं विधाय यदेतन्निरतिशयतर्कताटङ्कितशेमुषीकत्वमात्मनस्ताण्डवयितुमुद्युंक्ते भवांस्तत्र को वेद किं निमित्तमिति।

त्रिवेदी, क० प्रा०, विद्याधर-एकावली, पृ० २८

३. क० प्रा० त्रिवेदी, विद्याधर-एकावली, पृ० २५

यद्यस्ति ध्वनिस्तथाप्यग्राह्यस्तस्य काव्यशोभाहेतुत्वाभावे निरर्थकत्वात्। अथ काव्यशोभाकारी ध्वनिरिष्टस्तथापि प्राचीनाचार्यप्रोक्तेषु गणालङ्कारेषु तदन्तर्भाव इति नास्ति ध्वनिरिति ध्वन्यभाववादिनामालङ्कारिकाणां मतम्।

के खल्वमी ध्वनेरभाववादिन आचार्या अभवन्निति नानन्दवर्धनेन नापि च ध्वन्यालोकभाष्यकारेणाभिनवगुप्ताचार्येण स्वोपज्ञे लोचने प्रोद्घाटितम्। परं परवर्तिभिर्विद्याधरमल्लिनाथप्रभृतिभिराचार्यैर्भामहादीनामभावपक्षावलम्बित्वं प्रोक्तम्।[1]

परं भामहादीनामाचार्याणां ग्रन्थपर्यालोचनया प्रतीयते यत्तैः प्रतीयमानोऽर्थः पर्यायोक्ताद्यलङ्कारच्छद्मना तु स्वीकृतः। परं ध्वनिरलङ्कारेष्वन्तर्भवतीति तैः स्पष्टं न प्रोक्तम्। वस्तुतस्तु ध्वनिशब्दः पारिभाषिकेऽर्थ एव न व्यवहृतस्तेषां ग्रन्थेषु।

एवं ध्वन्यालोकस्याद्ये उद्योते ध्वन्यभाववादिनां यः पूर्वपक्षो ध्वनिकारेणोपनिबद्धः, असौ कपोलकल्पित एव, अथवा मनोरथकविवत् ध्वनिं प्रत्याचक्षाणाः केचनाचार्या एवाभवन्न वाभवन्निति निर्णेतुं न पार्यते।

ध्वनिकारानन्तरभावी उद्भटकृतकाव्यालङ्कारसारसंग्रहग्रन्थस्य व्याख्याता प्रतिहारेन्दुराजः कण्ठतो ध्वनिमलङ्कारशरीरेऽन्तर्भावयति, तस्य च प्रत्याख्यानमारभते। भट्टोद्भटेन स्वकीये काव्यालङ्कारसारसंग्रहे ग्रन्थे ध्वनिर्न चर्चितः। अतः प्रतिहारेन्दुराजेन कल्पितं—यतो हि भट्टोद्भटोऽलङ्कारव्यतिरिक्तं ध्वनिं न सहते, अत एव तं स्वग्रन्थे नोट्टङ्कयति। इत्थं प्रतिहारेन्दुराजमते ध्वनि

---

१. (क) यत्र तु समासोक्त्यादिषु स्फुटैव प्रतीतिः प्रतीयमानस्य तत्र तदन्तर्भावो न भङ्गुर इति यत्पुनरलङ्कारकोटिनिविष्टत्वं वस्तुध्वनेरुदभावयन् भामहादयः।

—त्रिवेदी, क० प्रा० विद्याधर-एकावली, पृ० २९-३०

(ख) प्रतीयमानो वाच्योपस्कारकः सन् न वाच्याद् व्यतिरिच्यत इत्यभाव एव ध्वनेरिति भामहप्रभृतयो मन्यन्ते।

—तत्रैव, मल्लिनाथः, तरलटीका, पृ० २४

(ग) इह हि तावद् भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतया अलङ्कारपक्षनिक्षिप्तं मन्यन्ते।

द्विवेदी, गिरिजाप्रसादः, रुय्यक-अलङ्कारसर्वस्वम्, पृ० ३

जानानेनापि भट्टोद्भटेनालङ्कारान्तर्गतोऽयमिति कृत्वा ध्वनिरुपेक्षितः। एतेन लघुवृत्तिटीकाकारप्रतिहारेन्दुराजमते भट्टोद्भटस्य ध्वन्यभावपरम्परानुयायित्वमायातम्।[1]

वस्तुतस्तु काव्येऽलङ्कारप्राधान्यवादी प्रतिहारेन्दुराजः स्वयं ध्वनिं न सहते, अलङ्कारेषु च तमन्तर्भावयति। अतोऽसौ स्वमतदार्ढ्यार्थं भट्टोद्भटमपि ध्वन्यभाववादिनमुत्प्रेक्षते। काव्यालङ्कारसारसंग्रहस्यानुशीलने कृते ध्वनेर्नामापि तत्र नोपलभ्यते, कुतस्तस्यान्तर्भावचर्चा।

### (क) अग्निपुराणकारमतेन ध्वनेरलङ्कारान्तर्भावः

ध्वन्यभाववादिष्वाद्योऽग्निपुराणकारः। तेनाक्षेपालङ्कारशरीरे ध्वनिमन्तर्भाव्य ध्वन्याक्षेपालङ्कारयोस्तुल्यत्वं समाख्यायि।[2] तन्मतेऽपि नालङ्कारातिरिक्तः कश्चिद् ध्वनिः। तथाहि। श्रुतेः (अभिधालक्षणयोः) अलभ्योऽर्थो यया वृत्त्या सहृदयैरनुभूयते, असौ वृत्तिराक्षेपनाम्नी। आक्षेप एव च ध्वनिः।[3] यथा

---

१. ननु यत्र काव्ये सहृदयहृदयाह्लादिनः प्रधानभूतस्य स्वशब्दव्यापारास्पृष्टत्वेन प्रतीयमानैकरूपस्यार्थस्य सद्भावस्तत्र तथाविधार्थाभिव्यक्तिहेतुः काव्यजीवितभूतः कैश्चित् सहृदयैर्ध्वनिर्नाम व्यञ्जकत्वभेदात्मा काव्यधर्मोऽभिहितः स कस्मादिह (भट्टोद्भटेन) नोपदिष्टः? उच्यते एष्वेवालङ्कारेष्वन्तर्भावात्।

—बनहट्टी, नारायणदासः, उद्भट-काव्यालङ्कारसारसंग्रहः, लघुवृत्तिटीका पृ० ८५

(अत्र प्रतिहारेन्दुराजस्यायमाशयः। ग्रन्थकर्त्रा भट्टोद्भटेन प्रसिद्धो ध्वनिः काव्यालङ्कारसंग्रहस्य कारिकासु नोपदिष्टस्तेन स्पष्टं यद् ग्रन्थकारो ध्वनिरलङ्कारेष्वन्तर्भवतीति मनसि कृत्वैव तं पृथक् न निर्दिष्टवान्)।

२. श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति सचेतसाम्।
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः।
शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम्।
प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया॥
तमाक्षेपं ब्रुवन्त्यत्र... अग्निपुराणम्, ३४५, १४-१६

३. तेषामेकतमस्यैव समाख्या ध्वनिरित्यतः।
—तत्रैव, ३४५, १८

ध्वनौ शब्दार्थौ स्वात्मानमुपसर्जनीकृत्यार्थं व्यङ्क्तस्तथाक्षेपेऽपि विशेषमर्थमभिधातुमिष्टस्य वस्तुनः प्रतिषेध इव भवति। अनेनेदं प्रतीयते यदग्निपुराणकारमते आक्षेपालङ्कारे विशेषोऽर्थः साक्षात् शब्देन नाभिधीयते, परमिष्टस्य वस्तुनः प्रतिषेधात् परिस्फुरति। अतो ध्वनौ आक्षेपे चोभयत्र विशेषार्थस्य स्वशब्देनानावेदनाद् द्वयोस्तुल्यसहोदरता। तथा च ध्वनिराक्षेपापरपर्याय एव।

अग्निपुराणकारोक्तमाक्षेपालङ्कारस्वरूपं भामहोक्ताक्षेपालङ्कारसंवादि। यतो भामहेनापि—



> **प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।**
> **वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः॥[1]**

इत्याक्षेपलक्षणं समुपनिबद्धम्।

इत्थमग्निपुराणकारो भामहादिवत् काव्येऽलङ्कारप्राधान्यवादी प्रतीयते।

**(ख) रत्नश्रीज्ञानमतेन ध्वनेरलङ्कारान्तर्भावः**

दण्डिनः काव्यलक्षणग्रन्थस्य टीकाकारो रत्नश्रीज्ञानोऽपि ध्वनिमलङ्कारेष्वन्तर्भावयतीति प्रतीयते। तेन स्वोपज्ञायां काव्यादर्शस्य टीकायां समासोक्त्यलङ्कारं व्याकुर्वता तस्य ध्वन्यपरपर्यायित्वं कण्ठतः प्रोक्तम्। तन्मते ध्वनिसमासोक्त्यलङ्कारयोस्तादात्म्यम्।[2]

**(ग) प्रतिहारेन्दुराजमतेन ध्वनेरलङ्कारान्तर्भावः**

प्रतिहारेन्दुराजेन काव्यालङ्कारसारसंग्रहग्रन्थस्य लघुवृत्तौ स्वयं ध्वनेरलङ्कारान्तर्गतत्वं भणितम्। तन्मते त्रिविधोऽपि ध्वनिर्नालङ्कारबाह्यः। असौ भट्टोद्भटपदाङ्कानुगोऽलङ्काराणामेव काव्ये प्राधान्यं सिद्धान्तयति। अतस्तन्मते स्वाभाविक एव ध्वनेरपलापः। तथाहि—ध्वनिवादिनां वस्तुध्वनिस्तावदलङ्कारेषु पर्यायोक्तसमासोक्त्यप्रस्तुतप्रशंसादिष्वन्तर्भवति।

---

१. भामहः, काव्यालङ्कारः, २,६८

२. तस्मादियं गुणीभूता अर्थान्तरं स्फुटयति, नतु स्वार्थतन्त्रा। इयमेवान्यैर्ध्वनिरिति व्यवह्रियते। यदाहुः—'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।'

ठाकुर अनन्तलालः, दण्डी-काव्यलक्षणं, रत्नश्रीटीका, पृ० १३१

